जानातीति तस्य तथात्वम्। २तद्धेतुभूतविहितकर्माग्निहोमादिनिषिद्धकर्महिंसादिवेत्तरि च।

**धर्माधिकरण** न॰ धर्मोऽधिक्रियतेऽत्र अधि+कृ—आधारे ल्युट्। नृपाणां तन्नियुक्तानाञ्च व्यवहारदर्शनयोग्ये १स्थानभेदे। तत्स्वरूपभेदादिकं वीरमि॰ उक्तं यथा बृहस्पतिः "दुर्गमध्ये गृहं कुर्य्याज्जलवृक्षान्वितं पृथक्। प्राग्दिशि प्राङ्मुखीन्तस्य लक्षण्याङ्कल्पयेत्सभाम्। माल्यधूपासनोपेतां वीजरत्नसमन्विताम्"। लक्षण्यां वास्तुशास्त्रोक्तलक्षणेन तु लक्षिताम्। सभायां धर्माधिकरणत्वं च "धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्। यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति" उक्तेः। तत्र सभ्योपवेशनमाह मनुः "यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञश्चाधिकृतोविद्वान् ब्राह्मणस्तां सभां विदुरिति" त्रय इत्युपलक्षणम् "अधिकानामपि स्मृतत्वात्। तच्च वक्ष्यते। अधिकृतो विद्वान् प्राड्विवेकः। अत्र 'सभामेव प्रविशेत्" इत्यादिवचनात् सभा मुख्यं व्यवहारदर्शनस्थानम्। अन्यान्यमुख्यानि नानावचनादवगन्तव्यानि "देशस्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः। निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः। आरण्यास्तु स्वकैः कुर्य्युः सार्थिकाः सार्थिकैस्तथा। सैनिकाः सैनिकैरेव ग्रामेऽप्युभयवासिभिः। उभयानुमतश्चैव गृह्यते स्थानमीप्सितम्। कुलिकाः सार्थमुख्याश्च पुरग्रामनिवासिनः। ग्रामपौरगणश्रेण्यश्चातुर्विद्याश्च वर्गिणः। कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथेति" स्वकैरारण्यकैः ग्रामेऽपीत्यपिशब्दाद्ग्रामेऽरण्यादौ च निवसन्ति ते उभयवासिभिर्निर्णयं कुर्य्युरुभयव्यवहाराभिज्ञत्वात्तेषाम्। कुलिकाः कुलश्रेष्ठाः। सार्थो ग्रामदेवयात्रादौ मिलितो जनसङ्घः तन्मुख्याः सार्थवाहादयः। पुरं मुख्यनगरम्। तस्मादर्वाचीनो ग्राम इति पुरग्रामनिवासिनोर्भेदः। कुलिकादीनि पञ्च स्थानानि तानि चारण्यकादीनामेव ग्रामादीनि दश स्थानानि साधारणानि। ग्रामो ग्रामाकारेणावस्थितोजनः। पौरः पुरवासिनां समूहः। श्रेण्यो रजकाद्या हीनजातयः। चातुर्विद्यः आन्वीक्षिक्यादिविद्याचतुष्टयोपेतः। वर्गिणो गणप्रभृतयः"। तत् अर्हत्वेनास्त्यस्य अच्। २तत्र नियुक्ते प्राड्विवेकादौ पु॰ "समः शत्रौ च मित्रे च सर्वशास्त्रविशारदः। विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत्" मत्स्यपु॰ 'पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः। धर्माधिकरणे कार्य्या जनाह्वानकरानराः इति मत्स्यपु॰।

**धर्माधिकरणिन्** पु॰ धर्माधिकरणं नियोगस्थानतयाऽस्त्यस्य इनि। विचारके प्राड्विवेकादौ धर्माध्यक्षे हेमच॰।

**धर्माधिकारिन्** पु॰ धर्मं व्यवहारे तन्निर्णयमधिकरोति अधि+कृ—णिनि ६त॰। प्राड्विवेकादौ।

**धर्माध्यक्ष** पु॰ धर्मे व्यवहारे धर्मनिर्णये अध्यक्षः। १प्राड्विवेकादौ। "कुलशीलगुणोपेतः सर्वकर्मपरायणः। प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षोऽभिधीयते" चाणक्यः। २विष्णौ च "लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः" विष्णुस॰। "धर्माधर्मौ साक्षादीक्षते तदनुरूपं फलं दातुं तस्माद्धर्माध्यक्षः" भा॰। अत्र धर्मपदं लक्षणया धर्माधर्मपदं तदभिप्रायेण धर्माधर्मौ इत्युक्तम्

**धर्मान्धु** पु॰ धर्मकृतोऽन्धुः कूपः। तीर्थभेदे स्कन्दपु॰।

**धर्माभास** पु॰ धर्म इवाभासते आ+भास—अच्। श्रुतिस्मृतीतरशास्त्रोक्ते असद्धर्मे। "श्रुतिस्मृतिभ्यामुदितोयः स धर्मः प्रकीर्त्तितः। अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते" देवीभागवतम्।

**धर्मारण्य** न॰ तीर्थभेदे तदाविर्भावकथा वराहपु॰ यथा "स धर्मः पीड़ितः सर्वैः सोमेनाद्भुतकर्मणा। तारां जिहीर्षता पत्नीं भ्रातुराङ्गिरसस्य च। सोऽप्ययाद्दीपितस्तेन बलिना क्रूरकर्मणा। अरण्यं गहनं घोरं प्रविवेश तदा प्रभुः" ब्रह्मोवाच। "यस्मादरण्यमिदं धर्म! त्वयाव्याप्तं चिरं विभो!। नाम्ना भविष्यति ह्येतद्धर्मारण्यमिति प्रभो!" गयास्थे २तीर्थभेदे "प्रयत्नेऽह्नि विधिः-प्रोक्तो द्वितीयदिवसे व्रजेत्। धर्मारण्यं तत्र धर्मो यस्मात् यज्ञमकारयत्" वायुपु॰ गयामाहात्म्ये "गया च फल्गुतीर्थञ्च धर्मारण्यं सुरैर्वृतम्। तथा देवनदीपुण्या सरश्च ब्रह्म निर्मितम्" भा॰ आनु॰ १६५अ॰। ३धर्मसाधने अरण्यमात्रे च "तैरुक्तो यज्ञियान् देशान् धर्मारण्यं तथैव च" भा॰ आश्व॰ ९२ अ॰। ह॰स॰१४अ॰ कूर्मविभागोक्ते मध्यभागस्थे देशभेदे न॰ ४माथुरकोषज्योतिषधर्मारण्यानि शूरसेनाश्च" इत्युपक्रमे मध्यमिदमित्युक्तम्।

**धर्मासन** न॰ धर्मार्थं धर्मविचारार्थमासनम्। विचारनिर्णयार्थे आसनभेदे। "धर्मासनमधिष्ठाय संवीताङ्गः समाहितः" मनुः।

**धर्मास्तिकाय** पु॰ आर्हतमतसिद्धे जीवाजीवधर्माधर्म-

पुद्गलास्तिकायमध्ये पदार्थभेदे अर्हत्शब्दे दृश्यम् ।

**धर्मिक** त्रि० धर्मोऽस्त्यस्य ठन् । धर्मयुक्ते । ततः पुरोहिता० तस्य कर्मभावादौ यक् । धार्मिक्य तद्भावे न० ।

**धर्मिन्** त्रि० धर्मोऽस्त्यस्य इनि । १धर्मविशिष्टे स्त्रियां ङीप् । सा च २जायायाम् । "त्रिगुणमचेतनं प्रसवधर्मि" सां०का० । ३आधारे च सुखदुःखमोहधर्मिणी बुद्धिः सुखदुःखमोहधर्मकद्रव्यजन्या" सां० प्र० भा० । "नित्यत्वाच्च चितृधर्मा" सा० सू० भाष्ये पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्सत्त्वमात्रेणान्यव्यवहारोपपत्तौ प्रकाशात्मकधर्मकल्पना गौरवमित्यपि बोध्यम् । तेजसश्च प्रकाशाख्यरूपविशेषाश्रयेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाशतेजसोर्भेदः सिद्ध्यति । आत्मनस्तु ज्ञानाख्यप्रकाशग्रहकाले ग्रहणं नास्तीत्यतो लाघवात् धर्मधर्मिभावशून्यं प्रकाशरूपमेवात्मद्रव्यं कल्प्यते" "धर्म्यंशे सर्वमभ्रान्तं प्रकारे च विपर्य्ययः" न्यायका० । धर्माः श्रौतस्मार्त्ताः कर्त्तव्यत्वेन सन्त्यस्य । ४धार्मिके त्रि० स्त्रियां ङीप् । धर्मः पाल्यत्वेनास्त्यस्य इनि ५विष्णौ पु० । "धर्मगुप् धर्मकृत् धर्मी" विष्णुस० ।

**धर्मिष्ठ** त्रि० अतिशयेन धर्मवान् इष्ठन् मतुपो लोपः । १अतिशयेन धार्मिके । २विष्णौ पु० ।

**धर्मेन्द्र** पु० धर्मे इन्द्र इव रक्षकत्वात् । धर्मराजे यमे "पितॄणामिव धर्मेन्द्रो यादसामिव चाम्बुराट्" भा०द्रो० ६अ० । धर्मेशधर्मेश्वरादयोऽप्यत्र ।

**धर्मेयु** पु० पौरववंश्यस्य रौद्राश्वस्य पुत्रभेदे । "धर्मेयुः सन्नतेयुश्च दशमो देवविक्रमः" भा० आ० ९४ अ० । तत्पुत्रोक्तौ

**धर्मोत्तर** त्रि० धर्म उत्तरः प्रधानमस्य । धर्मप्रधाने ।

**धर्मोपदेश** पु० धर्म उपदिश्यतेऽनेन उप+दिश–करणे घञ् ६त० । १धर्मशास्त्रे मन्वादिशास्त्रे "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः । भावे घञ् ।२धर्मस्य उपदेशे "धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः । तप्तमासेचयेत् तैलं वक्त्रे श्रोत्रे च पार्थिवः" मनुः ।

**धर्मोपदेशक** त्रि० धर्ममुपदिशति उप–दिश ण्वुल् ६त० । १धर्मस्योपदेशकर्त्तरि २गुरौ पु० ।

**धर्म्य** त्रि० धर्मादनपेतः "धर्मपथ्यर्थन्यायादनपेते" पा० यत् । धर्मेण प्राप्यः "नौवयोधर्मेत्यादिना" पा०यत् वा । १धर्मयुक्ते धर्मादनपेते धर्मादवहिर्भूते २धर्मेण प्राप्ये च "न दृष्ट्वाशास्त्रमभिपाय विधिं धर्म्यं प्रतिपद्यते" मनुः । ब्राह्माद्यष्टविवाहोपक्रमे "यो यस्य धर्म्यो वर्णस्य गुणदोषौ च यस्य यौ । तद्वः सर्वं प्रवक्ष्यामि प्रसवे च गुणागुणान् । षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् । विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यान्न राक्षसान् । चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः । राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः । पञ्चानान्तु त्रयोधर्म्या द्वावधर्म्यौ स्मृताविह । पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन । पृथक् पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ । गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ" ।

**धर्ष** पु० धृष–भावे घञ् । १प्रागल्भ्ये २अमर्षे ३शक्तिबन्धने ४संहतौ ५हिंसायाञ्च शब्दच० ।

**धर्षक** त्रि० धृष–ण्वुल् । १परिभवकारके २प्रगल्भे ३असहने च ४नटे पु० शब्दरत्ना० ।

**धर्षकारिन्** त्रि० धर्षं करोति कृ–णिनि ६त० । १परिभवकर्त्तरि २प्रागल्भ्यकारके च ३दूषितायाम् असत्यां स्त्री स्त्रियां ङीप् शब्दर० ।

**धर्षण** न० धृष–भावे ल्युट् । १परिभवे २असहने ३धर्षशब्दार्थे च । कर्मणि ल्युट् । ४अभिसारिकायां स्त्रियाम् स्त्री ङीप् । मेदि० । कर्त्तरि ल्यु । ५धर्षकारके त्रि० । ६शिवे पु० । "अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः" भा० अनु० १७ अ० शिवसहस्रनामोक्तौ चु० धृष–भावे युच् । ७धर्षणे स्त्री "श्रुत्वेमां धर्षणां तात ! तव तेन दुरात्मना" भा० आ० ४१ अ० ।

**धर्षणि(णी)** स्त्री धृष्यतेऽसौ धृष–कर्मणि अनि । असत्यां बन्धक्याम् उणादिवृत्तिः वा ङीप् तत्रार्थे भरतः ।

**धर्षित** त्रि० धृष–कर्मणि क्त इट् गुणश्च । १परिभूते असत्यां २कुलटायां स्त्री शब्दरत्न० । भावे क्त । ३असहने ४मैथुने च न० त्रिका० । ५परिभवे च ।

**धलण्ड** पु० दधाति धा–ड तं लण्डयति उत्क्षिपति लडि–उत्क्षेपे अण् । (धला आकाड़) वृक्षे शब्दच० । ण्वुल् । धलण्डक तत्रार्थे तस्य कण्टकाढ्यत्वेन धारकत्वोत्क्षेपणात्तथात्वम् ।

**धव** गतौ भ्वा० प० सक० सेट् इदित् । धन्वति अधन्वीत् । इदित्त्वात् कर्मणि धन्व्यते धन्वधातोस्तु धव्यते इति भेदः ।

**धव** त्रि० धवति धुवति धुनोति धूनाति वा कर्त्तरि अच् । १कम्पनकारके २पत्यौ स्वामिनि ३नरे पु०अमरः ५धूर्त्ते त्रि० मेदि० । (धला आकुड़ा) ख्याते वृक्षे पु० रत्नमा० । "धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहा । मधुरस्तु-

वरस्तस्य फलत्वच मधुरं मनाक्” भावप्र०। “बिल्वार्क-खदिराकीर्णं कपित्थधवसङ्कुलम्” भा० आ० ६९ अ०। “या विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान्। तस्मान्माधवनामासि धवः स्वामीति शब्दितः” हरिवं० २७९ अ०। भावे अप्। ६कम्पने ७विधूनने च पु०।

**धवनि** स्त्री धू–करणे अनि। अनले पारस्करनि०।

**धवल** पु० धाव–इषा० कल वा०ह्रस्वः धवं कम्पं लाति ला–क वा। “धवलः १सिन्दूरे २श्विते। ३महोक्षे चाथ धवली ४गौर्य्यां समुदाहृता” विश्वः। गौर्य्यामेव गौरा०ङीष्। श्वेतवर्णयुक्ते त्रि० अमरः अतार्थे स्त्रियां टाप्। “नीता येन निशा शशाङ्कधवला” उज्ज्वलद०। ५निर्मले त्रि० त्रिका०। “क्रियते धवलः खलूच्चकैर्धवलैरेव सितेतरैरधः” माघः। ६धवद्वृक्षे ७चीनकर्पूरे स्त्री। ८श्वेतमरिचे न० राजनि०। ९रागभेदे स च भरतमते हिन्दोलरागस्य अष्टमः पुत्रः सङ्गीतशास्त्रम्। १०खग-भेदे “धवलः पाण्डुरुहिष्टो रक्तपित्तहरो हिमः। रसे पाके च मधुरः संग्राही वातशान्तिकृत्” भावप्र०। ११छन्दोभेदे तल्लक्षणं यथा “द्विजवर! गणयुगलमनगणान गणयुगलकं विमलवलयमपि च कलय सकलजन-सुखम्। फणिपतिवरभणितममलमिह हितं विमल-कविकुलहृदिय ललितमिति भुवि विदितम्”।

**धवलगिरि** पु० कर्म०। स्वनामख्याते पर्वतभेदे।

**धवलपक्ष** पुंस्त्री धवलौ पक्षौ यस्य। हंसे राजनि०। स्त्रियां जातित्वात् ङीष्। “धवलपक्षविहङ्गमकूजितैः” माघः। कर्मधा०।१चान्द्रमासघटकें पञ्चदशतिथ्यात्मके २शुक्ले पक्षे पु०

**धवलपट्टिनी** स्त्री कर्म०। श्वेतपाटलिकायाम् राजनि०।

**धवलमृत्तिका** स्त्री कर्म०। (खड़ि) खटिन्यां राजनि०।

**धवलयावानल** पु० कर्म०। श्वेतयावानले यावनालभेदे राजनि०।

**धवला** स्त्री अनुदात्तत्वान्न ङीप्। शुभ्रवर्णायां स्त्रियाम्। अमरः। [धवलिम्नः शूलपाणेरभिख्याम्” माघः।

**धवलिमन्** पु० धवलस्य भावः इमनिच्। श्वेतत्वे “अधिगत-

**धवलोत्पल** न० कर्म०। कुमुदे राजनि०।

**धवाणक** पु० धुनोति वृक्षादीन् धू–आणक। वायौ उज्ज्वल०

**धवित्र** न० धू–करणे इत्र। मृगचर्मनयव्यजने अमरः। “सुञ्जवेदं धवित्राणि परिधींश्च” कात्या०श्रौ०२६।२।१०। “धुनोत्येभिरिति धवित्राणि कृष्णाजिनखण्डनिर्मिता-न्यतो व्यजनाः” देवरूनाथः।

**धस्** त्रि० धा–कसुन्। १धारके रेतोधाः पुरोधाः। २ब्रह्मणि पु० मेदि०। ३इहस्पतौ उणा०।

**धा** धारणे पोषणे दाने च जुहो० उभ० सक० अनिट्। दधाति धत्ते धत्से दध्यात् दधातु धेहि अदधात् अधत्त। अधात् अधित। दधौ दधे। दधिथ दधाथ। दधिव धाता धास्यति। धीयते अधायि अधायिषाताम् अधिषाताम्। हितः हित्वा हितिः। “त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीम्” सा० द०। “इमं नो यज्ञममृतेषु धेहि” ऋ० ३।२१।१ “तत्र त्वा देवा सविता दधातु” ऋ० १०।१७।४ “धर्मे दध्यात् सदा मनः” मनुः। “निवेशाय मनो दधुः” भा० व० ६५ अ०। “न नाशमधिगच्छेयुरिति मे धीयते मतिः” भा० विरा० २८ अ०। “हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। यद्यस्य सोऽदधात् सर्गे तत्तस्य स्वयमाविशत्” मनुः। “यशःपमायुषुलप्रख्यं सेषुं धत्तेऽन्यदुर्वहम्” भट्टिः। “नामधास्यत् कथं नामो मृणालमृदुभिः फणैः” कुमा० धापयति धित्सति। “स्वं वज्रिं कुह धित्सथः” ऋ० १।४६।९

अति+अतिक्रम्य धारणे अतिशयधारणे च “आयुर्यत्ते अति-हितं पराचैः” अथ० ७।५३।३।

अधि+आधिक्येन धारणे “यद्यार्षेदाय श्वो अध्यधत्तम्” ऋ० १।११७।८।

अनु+पश्चाद्धारणे। “अथान्यान् (तण्डुलान्) हुताखाश्वत्थीषु समितृषु अनुदधीरन्” लाट्या० ४।९।१४।

अन्तर्+आच्छादने वस्त्वन्तरेण व्यवधाने। “उदुम्बरशाखा-मन्तर्धायाभिषिञ्चति” ऐ० ब्रा० ८।७। तिरोधाने “ते चान्तर्दधिरे नागाः” भा० आ० १२९ अ०।

अपि+तिरोधाने आच्छादने। “धनेनाधर्म्यलब्धेन यच्छिद्र-मपिधीयते” भा० उ०३४अ०। वा अतो लोपः “पिधान-मपिधानम्” अमरः।

अभि+कथने “साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वा-चकः” का० प्र०। “गणनव्यवहारे तु हेतुः संख्याभि-धीयते” भाषा०।

प्रति+अभि+प्रत्युत्तरकथने। “मया च प्रत्यभिहितं देवका-र्य्यार्थदर्शनात्” भा० उ० १९ अ०।

अव+मनःसंयोगविशेषे अभिनिवेशे “व्यवधानपरे चकार सा” कुमा०। अधःस्थापने पातने च “यां ते क्तत्यां कूपे अवदधुः” अथ० ५।३१।७। “त्रितः कूपेऽवहितः” ऋ० १।१०५।१७

वि+अव+आच्छादने (ढाका) अपवारणे। "प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्" रघुः। "व्यवदधाति दर्भ-पिञ्जूलानि" सांख्यस्रा० १८।८। "अन्तर्धा व्यवधा पुंसि अन्तर्द्धिरपवारणम्" अमरः। "उदयाचलव्यवहितेन्दु वपुः" माघः।

आ+आरोहे आरोपणे स्थापने च। सद्रव्यस्य ऋणशोधन कालपर्य्यन्तं धनिकसमीपे स्थापने आधिः आश्रितः। अग्न्यादेः संस्कारभेदे अग्न्याधानम्। "अनपदे न मदः अन्न्यादधौ" रघुः। "आदध्यात् संभारान् दर्भान् दीर्घान् गर्भांश्च" छ० स० ४८। "गर्भमाधत्त राज्ञी" रघुः। "ज्येष्ठायां धर्मचारिण्यां महिषग्रां गर्भमादधे" भा० व० २९२ अ०।

अति+आ+मर्य्यादातिक्रमेण धारणे। "कार्य्यमत्याहितं भविष्यति" प्रबोधच०। "यदि स्यादिह गोविन्दो नैव-दत्याहितं भवेत्" हरिवं० १७१ अ०।

अनु+आ+पश्चादाधाने। यदेकस्य निहितं द्रव्यं तेनापि अनु पश्चादन्यस्य हस्ते स्वामिने देहीति समयेन समर्पणे च। अन्वाहितशब्दे दृश्यम्।

अभि+आ+साम्मुख्येन स्थापने "अस्यादध्युश्च काष्ठानि तत्र दह्येत पापकृत्" मनुः।

उप+आ+धर्मचिन्तायाम् "उपाधिर्ना धर्मचिन्ता" काम०। सामीप्येनाधाने अग्न्युत्पाते मेदि०। "अग्न्युत्पात उपाहितः" अमरः। संयोजने च अमरः। "तस्य निष्क उपाहित आस" शत० ब्रा० ११।४।१।१

निर्+आ+निराकरणे "यः क्रव्यादं निरादधत्" अथ० १२।२।२६।

परि+आ०परितः स्थापने। "ऋचा कुम्भीमध्यग्नौ श्रयास्या सिञ्चोदकमवधेह्येनम्। पर्य्याधत्ताग्निना" अथ० ९।५।५

वि+आ+विशेषेणाधौ पीड़ायाम्। व्याधिः "यद्यात्मना मज्जया वा व्याधीयेत" स्मृतिः "एतद्वै परमं तपो यद्व्याहितस्तप्यते" शत०ब्रा०१४।८।११।१

सम्+आ+पूर्वमाक्षिप्तस्य दोषस्य निराकरणे "समाहितः समाधिस्थेऽप्युक्तसिद्धान्त आहित" मेदि० उक्तेः च सिद्धान्तोक्त्या दोषसमाधाने। सम्यक्चित्तस्य ईश्वरादौ संस्थापने समाधिः। "अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्" गीता। सम्यगारोपणे "सोऽहं भारं समाधास्ये त्वयि त्वं वोढुमर्हसि" भा० द्रो० ११ अ०। "तदात्मसम्भवं राज्ये मन्त्रिवृद्धाः समादधुः" रघुः।

आविस्+आविर्भवने प्रकाशने "आविर्हितस्त्वनुयुगं स हि सत्यवत्याम्" भाग० २।७।२।

उप+सामीप्येन स्थापने उपलक्षणतया स्थापने च। "क्रिया हि वस्तूपहिता प्रसीदति" रघुः। "एतदुपहितचैतन्यम्" वेदा०सा०। "यदिन्द्रियैस्तूपहितं पुरस्तात् प्राप्तान् गुणान् न स्मरते चिराय" भा० शा० ७४१७ श्लो०। स्थापने स्व-रूपप्रच्छादने उपधय्यच्छद्मकैतवमित्यमरोक्तेः।

तिरस्+अन्तर्द्धाने प्रच्छादने। "इति बाहूत्य विबुधान् विश्व-योनिस्तिरोदधे" कुमा०।

नि+स्थापने अज्ञातस्वामिकतया द्रव्यस्य स्थितौ स्थापने च "कनि-धायैव बहुद्रव्यमाचान्तः शुचितामियात्" मनुः। "शिरसि निदधानोऽञ्जलिपुटम्" सा०द०। "अतं प्रयत्नेन वा तत्र वा निधाः पदं पद्व्यां सगरस्य सन्ततेः" रघुः। "वस्तु पक्षे-ष्विधिं राजा पुराणं निहितं क्षितौ" मनुः।

प्र+नि+ऐकाग्र्येण मनसः स्थापने। "ईश्वरप्रणिधानाद्वा" पात०सू०। "प्रणिधानं भक्तिविशेषः" भा०। प्रेरणे च "नीविं प्रति प्रणिहिते तु करे प्रियेण" सा० द०। मनो-ऽभिवेशने च "किष्किन्ध्याद्रिगुहां गन्तुं मनः प्रणिदधे द्रुतम्" भट्टिः।

प्रति+नि+तुल्यरूपतया करणादौ प्रतिनिधिः। "द्रव्ये-ऽविद्यमाने यत् सामान्यतमं मन्येत तत्प्रतिनिदध्यात्" का० श्रौ० १।२०।९ प्रतिनिधिशब्दे दृश्यम्।

सम्+नि+सम्यग्निधाने। "मेघेष्वंशुं सन्निधत्ते प्राणानां पवनः पतिः। तच्च मेघगतं वारि शक्रो वर्षति भारत।" भा० अनु० ६त०। "दूरादाहृत्य समिधः संनिदध्याद्विहायसि" मनुः। नैकट्येन सम्बन्धे "समवेशं न कुर्वीत लोष्ठैः सन्निहितो हसेत्" भा० वि० ४ अ०। "गुरो गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत्" मनुः। "अचिरं लतामण्डपे सन्निहितया त्वया भाव्यम्" शकु०। "भग-वान् हरिरथापि तत्सखानां निजजननी वात्सल्येन सन्निधाप्यत दृक्छायारूपेण" भाग० ५।७।८। नैकट्येन स्थापने तु सक०। "स चाहं सहस्रशा धनमितेन तत्र संन्यधिषि" दशकुमा०।

परि+वेष्टने आच्छादने। "यं परिधिं पर्य्यधत्" यजु० २।१७। "येनेन्द्रस्य बृहस्पतिर्वासः पर्य्यधात्" यजुर्वे० ३।२ "वासश्च परिधावेकम्" भा० कि० ९ अ०। "परि-हिते प्रातरनुवाके" आ० श्रौ० ६।९।१। "दृष्टिं परिदधे कृष्णो रौहिणेये च दारुणाम्" हरिवं० ७१ अ०।

अपि+परि+परिवर्त्तनेन आच्छादने। "आचान्तः पुनराचामेत् वासो विपरिधाय च" याज्ञ०।

पुरस्+अग्रतः स्थापने। पुरोहितः। "तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुः" कुमा०।

प्र+प्रकर्षेण धारणे। "दिग्गजास्ताः सहसा प्रधापिताः" भाग० १० स्क०। प्रधानम्।

प्रति+प्रक्षेपे "तदग्ने चक्षुः प्रतिधेहि रेभे" ऋ०१०।८७।१२। प्रतीकारार्थे विधाने "दुष्टदैवतनराशाय वज्रो ध्यान समाधिना। सर्वत्राघातविक्षेपात् शान्तिकं प्रतिधास्यति" शतरुद्र० प्रतिविधाने।

वि+करणे "तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्" गीता। "विदधाति विभज्येह फलं पूर्वकृतं नृणाम्" भा० व० यज्ञाध्ययनमपि कर्त्तव्यं तद्विधत्स्व महामते" स० ७६ अ०। कर्त्तव्यतयोपदेशे "यश्मिष्टायनं ह्येतत् सनातनं विधीयते" मनुः। "चिकीर्षाकृतिसाध्यत्वहेतुधीविषयो विधिः" शब्द०श० विधिशब्दे दृश्यम्। "न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते" मनुः।

अनु+वि+तुल्यरूपाचरणे पश्चात्करणे च। "आनुपूर्व्येण ह विधां दैवत उच्चैरुपांशुतायां चाध्वर्युमनुविदधीत" शांख्य०श्रौ० १२।१।२ "वृत्तिं च तेभ्योऽनुविधाय कांश्चित्" भा०उ०२६अ०। "उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति। करोति कुर्वतः कर्म छायेवानुविधीयते" भा० शा० १८१। "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" गीता।

प्रति+वि+प्रतिकूलाचरणे "क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम्" रामा०सुन्द० प्रतीकारे च "क्षिप्रमेव कस्मांश्च प्रतिविहितमार्थेण" मुद्राराक्ष० चन्द्रगुप्तोक्तिः "न पारितं प्रतिविधातुम्" तत्रैव चाणक्योक्तिः।

श्रद्+आदरे विश्वासे च। "श्रद्दधाति क इहेह न साध्वात्" नैष०।

सम्+सम्यग्विधाने योजने क्षेपणे अभिसन्धौ। "मनस्येतानि सन्धाय मनसा सम्प्रधारयेत्" भा० आश्व० ४२ अ०। "यथा सूच्या वासः संदध्यात्" ऐ० ब्रा० ८३।४८। "धनुष्यमोघं समधत्त सायकम्" कुमा०। "संदधे धनुषि वायुदैवतम्" रघुः। "भवति क्षतसन्धानमिव तत्" शकु०। मेलने "सकृद्दुष्टं यो हि मित्रं पुनः सन्धातुमिच्छति" चाणक्यः।

अति+सम्+अतिशयेन यन्त्रादिना व्यथने संयोजने। "त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः" शकु०।

अनु+सम्+अनुसन्धाने विचारजन्यज्ञानभेदे अनुचिन्तने "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" मनुः। अन्वेषणे च "दुर्गमनुसन्धेहि" हितो०।

अभि+सम्+तात्पर्ये अभिलाषभेदे। "अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्" गीता। "भवन्तमभिसन्धाय जिघांसन्ति भवत् प्रियम्" भा०शा०१०५ अ०। "श्राद्धानि चैव कुर्वन्ति फलकामाः सदा नराः। अभिसन्धाय पितरं पितुश्च पितरं तथा" हरिवं०१६अ० "मूढाभिसन्धिः शङ्कते" जगदीशः। "अभिसन्ध्यादिषु चैवम्" शा० सू०।

प्रति+सम्+प्रतिरूपसन्धाने। "प्रतिसन्धाय चास्त्राणि तेऽन्योन्यस्य विशाम्पते!। मुमुचुः पाण्डवाश्चैव कौरवाश्च महाहवे" भा० भी० ७५ अ०। "पश्यतः प्रतिसन्धाय विध्यतः सव्यसाचिनः" भा० वि० ६१ अ०।

**धाक** त्रि० धा—उणा०क तस्य नेत्त्वम्। १धारके २ब्रह्मणि पु० मेदि०। ३वृषे ४आहारे च ५अन्ने ६स्तम्भे च संक्षिप्त सा० उणादिवृत्तिः।

**धा(घा)टी** स्त्री घटन्ते हिंसन्तेऽत्र घट—हिंसायं आधारे अच् गौरा० ङीष् पृषो० धस्य घः घाटी वा तत्र पाठः। अभ्यवस्कन्दने शत्रुसम्मुखगमने हेमच०।

**धाणक** पु० धण—आणक। दीनारभागे परिमाणभेदे। उज्ज्वलद०।

**धातक** पु० धातुं करोति णिच् टिलोपः ण्वुल्। पुष्करद्वीपस्थापतेः वीतहोत्रस्य १पुत्रभेदे "तद्द्वीपस्याधिपतिः प्रैयव्रतो वीतिहोत्रो नाम तस्यात्मजौ रमणधातकनामानौ वर्षपती नियुज्य" भाग० ५।२०।२२। गौरा० ङीष्। (धाइफुल) २धातुपुष्प्याम् राजनि०। "धातकी कटुका शीता मदकृत् तुवरा लघुः। तृष्णातीसारपित्तास्रविषकृमिविसर्पजित्" भावप्र०तद्गुणाः। ३तीर्थभेदे शिवपु०।

**धातक्यादिलेह** चक्रदत्तोक्ते लेहभेदे "धातकीविल्वधन्याकलोध्रेन्द्रयववालकैः। लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्" चक्र०।

**धातु** पु०धीयते सर्वं निःक्षिप्यते सृष्टिप्रलयादावस्मिन् धा—आधारे तुन्। १परमात्मनि। "स एष चिद्धातुः" श्रुतिः। दधाति शब्दान्। २सर्वेषां नाम्नां प्रकृतिभूते भूप्रभृतौ तस्य लक्षणविभागादिकं शब्दार्थरत्नेऽस्माभिर्दर्शितं यथा

"धातुर्नाम क्रियावाचकोगणादिपठितः शब्दविशेषः क्रिया च पूर्वोक्तफलानुकूलो व्यापार एव सर्वेषाञ्च मतः

काणामन्वयोपपत्तये कालान्वयोपपत्तये च धातूनां क्रियावाचकत्वाङ्गीकारात्। तथाहि। "क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिकेति" वाक्यपदीये कालानां क्रियाभेदकत्वमुक्तमुक्तञ्च तत्रैव "क्रिया नियतसाधना" इत्यादिना साधनानां क्रियाकाङ्क्षित्वं तत्र यदि धातुभिः क्रिया न बोध्येत क्व तदा तेषामन्वयो विशेषणत्वं वा भवेदतोऽवश्यं सर्वेषां क्रियावाचकत्वं स्वीकार्यं धातूनां फलमात्रवाचकत्वे आख्यातानां व्यापारार्थकत्वे कृदादिस्थले आख्याताभावेन कारकाद्यन्वयानुपपत्तेः नापि क्रियामात्रवाचकत्वं त्यजिगम्योः पर्य्यायतापत्तेः। तथाच फलवाचकत्वस्य तेषां प्रायशो गणपाठे एव उक्तत्वात् न तदंशे विवादः। किञ्च फलावच्छिन्नक्रियायाः पृथक्शक्त्या विशिष्टशक्त्या वा धात्वर्थत्वाभावे सकर्म्मकाकर्म्मकविभागोच्छेदः स्यात् स्याच्च फलमात्रधात्वर्थत्वे सर्व्वेषां कारकाणां तत्रानन्वयः तत्रैव कालान्वयोपगमे च व्यापारविगमकालेऽपि फलसत्त्वेन वर्त्तमानत्वादिप्रयोगापत्तिः। अतोऽवश्यं क्रियावाचकत्वं स्वीकार्य्यमतएव "धातोरर्थः क्रियोच्यते" इत्यनेन धात्वर्थत्वेनैव क्रियात्वस्वीकारः। अतएव च "भूवादयोधातवः" इतिपाणिनीयसूत्रमपि क्रियावाचकत्वं धातुमात्राणां प्रतिपादयति। तथाहि भूश्च वा च भूवौ आदिश्चादिश्चादी भूवौ आदी येषां ते धातवइति तथा चात्र प्रथम आदिशब्दो व्यवस्थावाची भुवा सह तदन्वयात् भूप्रभृतयइत्यर्थलाभः द्वितीयश्चादिशब्दः सादृश्यवाची वाधातुना तदन्वयस्तेन वासदृशा इत्यर्थलाभः तत्सादृश्यञ्च क्रियावाचित्वेन वाधातोर्गत्यर्थतया क्रियावाचित्वप्रसिद्धेस्तथा च भूप्रभृतयः क्रियावाचित्वेन वासदृशा धातव इत्येव फलितम्। भुवश्चादित्वं गणपाठापेक्षया तस्य च क्रियावाचकत्वं पूर्व्वोक्तयुक्तेरिति संक्षेपः। अत्र क्रियावाचित्वानुक्तौ गणपठितत्वेन सर्व्वनामाव्ययादीनामपि धातुत्वापत्तिः तन्मात्रोक्तौ च हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिरत उभयमुक्तम्। उक्तञ्च "किञ्च क्रियावाचकतां विना धातुत्वमेव नो। सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः। न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटमिति"। तत्पाठः गणपाठः। विदि अवयवे गडि वदनैकदेशे इत्यादिद्रव्यवाचिनामपि तत्साधनक्रियावाचित्वमस्त्येव कालकारकाद्यन्वयानुरोधात् तत्फलस्य द्रव्यरूपत्वेऽपि न क्षतिः। मण्यादीत्या-

दिपदेन सूत्रसंग्रहसूत्रपठ्यां तेन सौत्राणां स्तम्भुप्रभृतीनां सनाद्यन्ता धातव इत्यादीनाञ्च प्रत्ययान्तानां धातुत्वमव्याहतमेव दर्शितयुक्तेः तत्रापि 'क्रियावाचित्वादेरवश्यं स्वीकाराच्च नाप्रसङ्ग इति दिक्।

ते च सर्व्वेऽपि धातवः सकर्म्मकाकर्म्मकभेदेन द्विविधाः। तत्र व्यापाराधिकरणमात्रावृत्तिफलवाचकः सकर्म्मकः पच्यादेः व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्म्मकत्वं कर्त्तृकर्म्मोभयनिष्ठफलबोधकस्यापि गम्यादेः व्यापाराधिकरणमात्रावृत्तिफलबोधकतया सकर्म्मकत्वम्। भूप्रभृतीनां तु व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न सकर्म्मकत्वं फलस्य सत्तायास्तत्सम्बन्धरूपव्यापारस्यैकस्मिन्नेव धर्म्मिणि घटादौ सत्त्वात्। उक्तञ्च वाक्यपदीये "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकः" इति। अस्यायमर्थः आत्मानं स्वरूपं बिभ्रत् आत्मधारणानुकूलव्यापाराश्रयः अस्तीतिपदेन समानाधिकरणतया व्यपदिश्यते तदभेदबोधनाय तिङादिकं प्रयुज्यतेइति यावत् तेनात्मनात्मरूपेण कर्म्मणा धारणकर्म्मणा धातुः न सकर्म्मकः। अत्र हेतुरन्तर्भावात् धात्वर्थ एव तस्य कर्म्मणः प्रवेशात् आत्मधारणानुकूलव्यापाररूपधात्वर्थेनात्मन उपसंग्रहादित्यर्थः। अथ वा अन्तरेव व्यापाराधिकरण एव भावात् फलस्य सत्त्वात् व्यापारसामानाधिकरण्यादित्यर्थः तेन भुवादेरुत्पत्त्यनुकूलव्यापारवाचितया धात्वर्थोपसंगृहीतकर्म्मकत्वाभावेऽपि फलसमानाधिकरणव्यापारवाचित्वादकर्म्मकत्वम्। अतएव "फलव्यापारयोरेकनिष्ठतायामकर्म्मकः। धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत" इति फलसामानाधिकरण्यादिकृताकर्म्मकसकर्म्मकविभागोऽभिहितः। एकनिष्ठतायामेकमात्रवृत्तितायामित्यर्थः तेन गम्यादेर्व्यापाराधिकरणवृत्तिफलवाचित्वेऽपि नाकर्म्मकत्वमिति धर्म्मिभेदेऽधिकरणान्यत्वे इत्यर्थः। एवमेव शब्दकौस्तुभकारादयः। एतन्मते सकर्म्मकाकर्म्मकशब्दौ पारिभाषिकाविति द्रष्टव्यम्। मञ्जूषाकृतस्तु "कर्म्मणा सहेति नास्ति कर्म्म यस्येति व्युत्पत्त्या सकर्म्मकाकर्म्मकशब्दौ यौगिकौ तत्र साहित्यं तदन्वितस्वार्थबोधकत्वम् अन्वयश्च पृथक्पदोपस्थाप्ययोः सम्बन्धरूपोप्याद्यस्तेन जीवत्यादीनां प्राणधारणानुकूलव्यापारार्थकतया तत्कर्म्मणः प्राणादेर्धात्वर्थमध्यपातात् न सकर्म्मकत्वं धात्वर्थोपसंगृहीतकर्म्मकत्वेनाकर्म्मकत्वात्। कर्म्म च व्याकरणशा-

स्वीयफलाश्रयभावापत्तिसिद्धकर्मसंज्ञाविशिष्टमुच्यते तेनाधिशय्यते प्रासाद इत्यादौ कर्मणि लकारोपपत्तिः अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वात् अन्यथा पूर्वमते तस्य फलसमानाधिकरणव्यापारबोधकतयाऽकर्मकत्वेन "भावे चाकर्मकेभ्यः" इति भाव एव लकारापत्तेः। नयति च ग्रामं गच्छतीत्यादौ गम्यादिः ईप्सिततमत्वेन कर्मसंज्ञाविशिष्टेन पृथग्भूतेन ग्रामेणान्वितं स्वार्थं बोधयन् सकर्मकः, अधिवसतिस्तु अधिकरणत्वेन कर्मसंज्ञाविशिष्टेनेति विवेकः" इति प्राहुः। युक्तञ्चैतत् धात्वर्थोपसंगृहीतकर्मकाणां व्यापारव्यधिकरणफलवाचितया पूर्वकल्पे सकर्मकत्वापत्तेः तत्तद्भिन्नत्वेन निवेशे गौरवं तस्य कर्मणोऽविवक्षायां गम्यादेरपि वाकर्मकत्वस्वीकारेण अविवक्षाविशिष्टत्वेन निवेशे गौरवञ्च। एतन्मते तु कर्माभावादेव तदन्वितस्वार्थबोधकत्वाभावान्नाकर्मकत्वहानिरिति सूक्ष्ममीक्षणीयम्। अत्र पक्षे अकर्मकस्तु तदनन्वितस्वार्थबोधक इति बोध्यम्।

सकर्मकाश्च द्विविधाः एककर्मका द्विकर्मकाश्च। एककर्मान्वितस्वार्थबोधकाः गम्यादयः एककर्मकाः। द्विकर्मकाश्चापि द्विविधाः द्विकर्मान्वितैकव्यापारार्थकाः द्विकर्मान्वितद्विव्यापारार्थकाश्च। तत्राद्या दुह्यादयः। न च ते णिजन्ता द्विव्यापारार्थकाः तथात्वे ईप्सिततमाभ्यामेव कर्मभ्यां व्यापारद्वयेऽन्वयसम्भवेन द्वितीयाद्युत्पत्तौ "अकथितञ्चेति" सूत्रेण दुह्यादीनां कारकान्तरसंज्ञानापन्नस्याकथितस्य कर्मसंज्ञाविधानानौचित्यात्। दर्शयिष्यते च दुह्यादीनामेकव्यापारार्थकता। यदा पुनस्तेषां द्विव्यापारार्थकता विवक्षिता तदा ईप्सिततमसूत्रेणैव कर्मसंज्ञायां जातायां द्विकर्मान्वितद्विव्यापारार्थका एव ते णिजन्तादिवदिति बोध्यम्। द्विकर्मान्वितद्विव्यापारार्थकाश्च णिजन्ताः तत्र च धातुना एकव्यापारोऽभिधीयते द्वितीयस्तु णिचा, तद्व्यापारद्वये च ईप्सितकर्मणः प्रयोज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः। तथात्वञ्च गम्यादीनामिति बोध्यम्। पाच्यादीनां तु नैवं, तद्योगे प्रयोज्यकर्तुः कर्मसंज्ञाभावेन व्यापारद्वये कर्मद्वयान्वयाभावात्। नच पाच्यादेः क्रियाकाङ्क्षाश्रयत्वेनोद्देश्यतया प्रयोज्यकर्तुः कर्मसंज्ञा भविष्यत्येव गत्यादिधातुयोगे एव तन्नियमात्। उक्तञ्च हरिणा "गुणक्रियायां स्वातन्त्र्यं प्रधाने कर्मतां गतम्। नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते" इति [illegible] गतिबुद्ध्यादिसूत्रेण तदितरेषां निषेधात् स्वातन्त्र्यं कर्तृत्वमेव स्वधर्मेण तृतीययाऽभिधीयते इति तदर्थः। वस्तुतस्तु प्रयोज्यकर्तुरीप्सिततमत्वेऽपि परत्वात् कर्तृसंज्ञया तस्य बाधात् कर्मत्वाप्रसक्तौ गत्यादिसूत्रेण अप्राप्तप्रापकत्वरूपविधित्वाश्रयेण गम्यादेः कर्मत्वं विहितं न पाच्यादेरिति द्रष्टव्यम्। उक्तञ्च हरिणा "परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचितेति"। परत्वात् "विप्रतिषेधे परं कार्यम्" इत्युक्तेः "अपादानसम्प्रदानकरणाधारकर्मणाम्। कर्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते" इति चोक्तेः "अन्तरङ्गत्वात् पच्यादिरूपप्रकृत्याकाङ्क्षितकर्तृसंज्ञारूपकार्यस्य "अन्तरङ्गं बलीय" इति न्यायात् पाच्याद्याकाङ्क्षितकर्मसंज्ञायाः प्रत्ययान्वितत्वेन दुर्बलत्वादिति भावः। उपजीव्यतया उपजीव्यजातीयतया सर्वेषामेव कारकाणां कर्तृप्रयोज्यत्वेन कर्तुरुपजीव्यजातीयत्वादिति फलितोऽर्थः तेन पाच्याद्यपेक्षया तस्योपजीव्यत्वाभावेऽपि न क्षतिः। एवं पाच्यादियोगे प्रयोज्यस्य कर्मसंज्ञाया अप्रवृत्तेः न द्विकर्मकत्वं तेषामित्यन्यत्र विस्तरः।

अकर्मका अपि धातवः हेतुचतुष्टयाधीनाकर्मकक्रियार्थत्वात् चतुर्विधाः। अकर्मकक्रियायाश्च हेतवश्च चत्वारो हरिणा प्रदर्शिता यथा "धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति"। धातोः स्वबोधकधातोरर्थान्तरे स्वसजातीयभिन्ने वृत्तेः सामर्थ्यात् स्वविजातीयार्थबोधकत्वादित्येकः। यथा जानातिः ज्ञानं वदन् सकर्मकः प्रवृत्त्यादिकं बोधयन्नकर्मकः न तु गतिवाची गम्यादिः ज्ञानाद्यर्थेऽप्यकर्मकः तयोर्द्वयोरर्थयोः सकर्मकत्वेन स्वसजातीयत्वात्। धात्वर्थेनोपसंग्रहादिति द्वितीयः। कर्मणो धात्वर्थेन उपसंग्रहात् स्वशरीरे प्रवेशनात् यथा जीवत्यादीनां प्राणधारणानुकूलव्यापाररूपक्रियार्थतया तत्कर्मणः प्राणादेर्धात्वर्थ एव प्रवेशः। प्रसिद्धेः सत्तालज्जादिरूपाणामकर्मकत्वेन प्रसिद्धेः। सत्तादिकञ्चानुपदं प्रदर्श्यते तेषां फलसमानाधिकरणव्यापारबोधकत्वादित्यर्थः। इति तृतीयो हेतुः। कर्मणोऽविवक्षातः अकर्मकः ४। अत्र च कर्मपदं व्यपदेशिवद्भावेन फलस्याप्युपलक्षणं तेन फलस्याविवक्षायामेव गम्यादेरकर्मकत्वमिति कौस्तुभानुसारिणः तेषाञ्च व्यापारमात्रबोधकतया फलावाचित्वाच्च सकर्मकत्वमिति द्रष्टव्यम्। अत्र चाविवक्षा नाम येन

रूपेणान्वयविवक्षया यस्य कर्मसंज्ञा तेन रूपेणान्वयविवक्षाभावः। तत्र क्वचित् कर्मणोऽविवक्षया यथा पच्यते इत्यादौ, क्वचिच्च कर्मत्वाविवक्षया यथा मातुः स्मर्यते इत्यादौ। अत्र मातुः कर्मत्वेनैव स्मरणान्वये कर्मसंज्ञा न पुनः सम्बन्धत्वेन, तथा विवक्षायामेव कर्मणि षष्ठीविधानात् स्मरणादेः कर्मान्वयसत्त्वेऽपि कर्मत्वेन तदन्वयाभावादकर्मकत्वं तेन भावे लकारादय इति बोध्यम्। क्वचित्तु कार्यप्रवृत्तिवेलायामविवक्षा पश्चाद्विवक्षा। यथा कृतपूर्वी कटम् भुक्तपूर्वी ओदनमित्यादौ। तथाहि कृतं पूर्वमनेनेति विग्रहे तत्कृतमनेनेति पूर्वस्तत्वादिनिमवनुवर्त्य सपूर्वाच्चेति सूत्रेण विद्यमानपूर्वात् पूर्वशब्दादपि इनिर्विहितः तत्र यदि कृतमिति कर्मणि क्तः स्यात्तदा तस्य कटादिरूपकर्मविशेषणतया सापेक्षत्वेन समासादिवृत्तिर्न स्यात् एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् वृत्तिश्चात्र जायते भाष्यादिषु तथाप्रयोगादतोऽवश्यं प्रथमं कर्माविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्वादिभिः सुप्सुपेति समासे च कृते तत्पूर्वकात् पूर्वशब्दात् कर्त्तरि इनिप्रत्ययोभवति। पश्चाच्च कर्त्तृकृतक्रियायाः कर्मविशेषाकाङ्क्षायां कटादिकर्मणोऽन्वयः। उक्तञ्च हरिणा "अकर्मत्वे सत्येव क्तान्ते भावाभिधायिनि। पश्चात् क्रियावता कर्त्रा योगो भवति कर्मणाम्। अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्वादिषु स्थितेति"। क्रियावतेत्यनेन क्रियाद्वारैव कर्मणोऽन्वय इति द्योतितम् क्रियायाश्च वृत्तिशब्दैकदेशतयाऽनन्वयशङ्कायामाहाविग्रहेति। नास्ति विशेषेण ग्रहोपादानं यस्याः सा पृथगुपस्थित्यभावेन ज्ञातुमशक्येत्यर्थः गतादिस्था कर्त्तृबोधकनिष्ठान्तगतपदोपस्थाप्यगमनकर्त्तृरूपार्थप्रविष्टापि यथा ग्रामं गतइत्यादौ विभिन्नपदोपात्तैरपि ग्रामादिकर्मभिः क्रिया सम्बध्यते तथेत्यर्थः समुदायशक्तिस्वीकारे एकदेशान्वयाभ्युपगमादवयवशक्तिस्वीकारे तु तदनुपगमे क्षत्यभावादिति भावः। कृतपूर्व्वादिष्वित्यादिपदेनाध्वरेष्विष्टीत्यादयोगृह्यन्ते तत्रापि इष्टादिभ्यश्चेत्यनेन कर्त्तरि इनिविधानात्। अत्रेदं बोध्यं "निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके" इत्युक्तेः कर्मणोऽपि स्वव्यापारद्वारा क्रियानिष्पत्तिहेतुत्वेन कर्तृत्वे स्थिते तद्व्यापारस्य धात्वर्थत्वविवक्षायां धात्वर्थक्रियाश्रयत्वेन तस्य कर्तृत्वं समानानुपूर्व्वीकमुख्यार्थबोधकधातूपात्तफलाश्रयत्वेन च कर्मत्वमित्येकस्यैव कर्मकर्तृता एवञ्च तत्र धातोरर्थान्तरे वृत्तेरेवाकर्मकत्वम्। तथाहि अन्नं पच्यते स्वयमेवेत्यादौ विक्लित्तिस्तदनुकूलो ऽग्निस्थाल्यादिसंयोगरूपो व्यापारश्च तद्विशिष्टो वा पच्यर्थः तयोः फलव्यापारयोरेकनिष्ठतया तद्बोधकधातोरकर्मकत्वं तेन अन्नेन पच्यते स्वयमेवेत्यादौ भावे लकारोपपत्तिः। द्विकर्मकाणान्तु एककर्मणः कर्तृत्वविवक्षया ऽपरस्याविवक्षयैवाकर्मकत्वं पचिदुह्योस्तु कर्मान्तरसत्त्वेऽपि कर्मवद्भावविधानात् सकर्मकत्वं तेन तयोर्न भावे लकारादयः किन्तु कर्मण्येव तेन दुह्यते गवा दुग्धं स्वयमेवेत्यादि। एवञ्च सर्व्वेषामेव धातूनां कर्मणः कर्तृत्वविवक्षायां कर्मवद्भावे प्राप्ते धातुविशेषयोग एव कर्मवत्कार्य्यातिदेशो न सर्व्वधातुयोगे तेन गम्यादियोगे कर्त्तरि वाच्ये न कर्मवद्भावः किन्तु कर्तृवत्कार्यं, भावे तु इष्यते एव कर्मवत्कार्यम्। पच्यादियोगे तु कर्त्तरि भावे च वाच्ये कर्मवद्भाव इति विवेकः। उक्तञ्च "कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत्। कर्तृस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्तृवदिति"। कर्मवत् कर्मवत्कार्यवानित्यर्थः अतएव "कर्मवत् कर्मणा तुल्यक्रियः" इति सूत्रे कर्मपदेन कर्मस्थक्रिया लक्षिता शास्त्रकारैस्तेन कर्मस्थक्रियातुल्यक्रियावति कर्त्तरि कर्मवत् कार्यमित्यर्थः क्रिययोस्तुल्यत्वञ्च एकाधिकरणमात्रवृत्तित्वेन तथाच कर्मस्थक्रियया फलेन व्यापारस्य सामानाधिकरण्य एव कर्मवद्भावविधानात् पच्यादेस्तथाभूतार्थकतया तत्कर्त्तरि कर्मवत्कार्यं, गम्यादेस्तु व्यापारस्योक्तफलसामानाधिकरण्याभावात् कर्तृस्वभावकत्वमिति विवेकः। तथा तुल्यक्रिये कर्तरीत्यभिधानेन गम्यादीनामपि भावे कर्मवत्कार्यं यागादि भवत्येव। यद्यपि सर्व्वेषामेवाकर्मकाणां फलव्यापारयोः सामानाधिकरण्यबोधकतया कर्मवद्भावापत्तिस्तथापि सूत्रे कर्मणा तुल्येति निर्देशात् येषां धातूनां मुख्यार्थवाचिनां सकर्मकत्वं तेषामेव कर्मवद्भाव इति गम्यते अस्त्यादेः सत्तादिरूपमुख्यार्थे सकर्मकत्वाभावात् न तत्प्रसङ्गः। भवतेस्तु प्राप्त्यर्थकानुभवार्थे वर्त्तमानस्य सकर्मकत्वेऽपि सत्तारूपमुख्यार्थे तथात्वाभावान्न प्रसङ्गः। एवञ्च सर्व्वेषामेव सकर्मकाणां कर्तृकर्मोभयस्वभावकत्वेनाव्यवस्थायां हरिणा क्रियाकृतविशेषेण व्यवस्था दर्शिता यथा "विशेष-

दर्शनं यत्र क्रिया तत्र व्यवस्थिता। शब्दप्रवृत्तिरन्येषां शब्दैरेव प्रकल्पितेति"। यत्र कर्मणि कर्त्तरि वा विशेषः क्रियाकृतोऽसाधारणधर्मो दृश्यते तत्रैव क्रिया व्यवस्थितेत्यर्थः धात्वर्थयोः फलव्यापाररूपयोः क्रिययोरुभयनिष्ठत्वेऽपि तत्कृतविशेषादेव तन्निष्ठत्वव्यवहार इति भावः। विशेषश्च द्विविधः धातूपस्थाप्यः तदनुपस्थाप्यश्च तत्राभ्यर्हितत्वेन उपस्थितत्वेन च धातूपात्तविशेषस्यैव प्रथमं ग्रहणं तदप्राप्तौ तु अपरस्येति विवेकः। तेन पच्यादयः स्वोपस्थाप्यस्य कर्त्रपेक्षयाऽसाधारणधर्मस्य व्यापाररूपक्रियाकृतस्य विक्लित्तिरूपफलस्य बोधकाः कर्मस्थभावकाएव गम्यादयस्तु नैवं तदुपस्थाप्यफलस्य संयोगादेरुभयनिष्ठतया साधारण्यात् धातूपस्थाप्यविशेषासत्त्वात् धात्वनुपस्थाप्यस्य क्रियाकृतस्य श्रमादिरूपासाधारणधर्मस्य ग्रहणं तस्य च कर्त्तरि दर्शनात् कर्त्तृस्थत्वम्। एवञ्च कर्त्तृस्थादिविभाग एतन्मते न्यायमूल एव। अन्येषां मते पुनः शब्दप्रवृत्तिः कर्मवत्कार्य्यप्रवृत्तिः शब्दैरेव नियामकशास्त्रैरेव प्रकल्पितेति द्रष्टव्यम्। तच्च शास्त्रं यथा "कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः। कर्त्तृस्थो वुध्यतेर्भावः कर्त्तृस्थाश्च गमादयः" इति कर्मस्थाः कर्मस्थक्रियार्थका इत्यर्थः एवमग्रेऽपि। सम्प्रदायविदस्तु एतच्छास्त्रमपि न्यायमूलकं पूर्वोक्तरीत्या एतेषां कर्मस्थत्वादिव्यवस्थापनात् अन्यथा प्रातस्विकरूपेण तद्गणनस्य कर्त्तुमशक्यतयाऽव्यवस्थापत्तेरित्याहुः। एवञ्च क्रियाकृतविशेषेणैव क्रियाव्यवस्थेति पक्षमवलम्ब्य "निर्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते। न तु प्राप्ये कर्मणि तु सिद्धान्तोऽयं व्यवस्थितः" इत्यभियुक्तैर्व्यवस्था भङ्ग्यन्तरेण दर्शिता। तथा च निवर्त्त्यविकार्य्ययोरेव क्रियाकृतस्य उत्पत्त्यादिरूपस्य विशेषस्य सत्त्वात्, प्राप्ये तदसत्त्वाच्च तेषु कर्मवद्भावाभावौ बोध्यौ। "क्रियाकृतविशेषाणां सिद्धिर्यत्र न तिष्ठति" इत्यभिमप्राप्यकर्मलक्षणे प्राप्यस्य क्रियाकृतविशेषाभावकथनात् व्यतिरेकेण निर्वर्त्त्यविकार्य्ययोस्तत्सत्त्वमर्थायातमित्यलं विस्तरेण। सनन्तधातूनां धात्वर्थेच्छार्थकत्वेन कर्त्तृस्थत्वेऽपि तत्प्रकृतीभूतधातोरेव कर्मस्थकर्त्तृस्थभावकतया व्यवस्था तत्प्रकृतेरात्मनेपदादिना तदन्तस्यात्मनेपदादिवदिति द्रष्टव्यम्' बोधस्तु कर्मकर्त्तरि कर्त्तरीव यथा ओदनः पच्यते स्वयमेवेत्यादौ ओदनाभिन्नैकाश्रयकविक्लित्त्यनुकूलस्थाल्यादिसंयोगरूपोव्यापारः।

अपरे तु कर्त्तुराश्रयांशे विशेषणत्ववत् व्युत्पत्तिवैचित्र्येण फलेऽपि विशेषणत्वमङ्गीचक्रुरङ्गीचक्रुश्चात्र नामार्थधात्वर्थयोरपि साक्षादन्वयम्। वस्तुतस्तु तिङर्थाश्रयस्यैव व्युत्पत्तिवैचित्र्येणोभयत्रान्वय इति द्रष्टव्यम्, अकर्मकत्वेन प्रसिद्धाः सत्ताद्यर्थका अभियुक्तैरन्यत्र संगृहीता यथा "सत्ताजीवनदर्पभीतिशयनक्रीड़ानिवासद्युयाव्यक्तध्वाननभोगतिस्थितिजराबज्जाप्रमादोदये। मोहे खेटनवेगयुद्धदहनख्यातिज्वरोन्मादके शुद्धिखेदपलायनभ्रमणकेशान्तौ स्रुतौ मज्जने। दृप्तौ जागरशोषवक्रगमनोत्साहे क्षतौ संशये ग्लानौ मन्दगतौ च नृत्यपतने चेष्टाक्रुधौ रोदने। वृद्धौ हावकृतौ च सिद्धिविरतौ हर्षोपवेशे बले कम्पोद्वेगनिमेषभङ्गयतनार्थे धातवोऽकर्मकाः। दौर्बल्यादिषु चार्थेषु वर्त्तमानास्तु धातवः। वाचका भावमात्रस्य यतस्तस्मादकर्मकाः। कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते तु धातवः। तद्भावेऽकर्मकाः स्युस्तद्वत्कृत्यां सकर्मकाः। क्रियावाचित्वमाख्यातुं प्रसिद्धोऽर्थः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः" इति। ३आकाशादिमहाभूतेषु। ४इन्द्रियेषु ५शब्दाद्याकाशादिगुणेषु। देहस्थेषु "रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इत्युक्तेषु रसादिषु। ७मनःशिलाद्यश्मविकारे। ८कफादौ अमरः। अत्राह सुश्रुतः। "ते धातवोऽपि विद्भिर्गदिता देहधारणात्। विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा। धारयन्ति जगद्देहं कफपित्तानिलास्तथेति"। ९अस्थ्नि। १०स्वर्णादौ तत्राष्टधातवो यथा "हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च। रङ्गमायसरैत्यञ्च धातवोऽष्टौ प्रकीर्त्तिता" इति दानसागरः। "सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम्। रङ्गञ्च सीसकञ्चैव इत्यष्टौ देवसम्भवाः" इति वैद्यकम्। सप्त धातवो यथा। "स्वर्णं रूप्यञ्च ताम्रञ्च रङ्गं यशदमेव च। सीसं लौहञ्च सप्तैते धातवो गिरिसम्भवाः" इति भावप्र०। "बलीपलितखालित्यकार्श्याग्निबल्यजरामयान्। निवार्य्य देहं दधति नृणां तद्धातवो यथा। "सुवर्णरूप्यताम्राणि हरितालमनःशिला। गैरिकाञ्जनकासीससीसलौहाः सहिङ्गुलाः। गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः"। नव धातवो यथा "हेमताराऽरनागाश्च ताम्ररङ्गे च तीक्ष्णकम्। कांस्यकं कान्तलौहञ्च धातवो नव कीर्त्तिताः"। माक्षिकं तुत्थकाभ्रे च नीलाञ्जनशिलाऽलकाः। रसकश्चेति

विज्ञेया एते सप्तोपधातवः। शरीरस्थसप्तधातुभवस-प्तोपधातवो यथा। "स्तन्यं रजश्च नारीणां काले भवति गच्छति। शुद्धमांसभवस्नेहो यः सा सङ्कीर्त्यते वसा। स्वेदोदन्तास्तथा केशास्तथैवौजश्च सप्तमम्। इति धातुभवाज्ञेया एते सप्तोपधातवः" इति सुश्रुतः। ११लोकेषु १२वस्तुनि शब्दार्थचि०।

रसादेर्धातुवाच्यतायां निरुक्तिस्तत्कर्माणि च भावप्र० उक्तानि यथा "एते सप्तस्वयं स्थित्वा देहं दधति यन्नृणाम्। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः। प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे। गर्भोत्पादश्च कर्माणि धातूनां कथितानि च। रसादीनां धातूनां क्रमेण प्रीणनादिकर्माणीति बोध्यम्। एतेषाञ्च पूर्वपूर्वस्योत्तरोत्तरहेतुत्वं तच्च कायशब्दे १९०८ पृ० दर्शितम्। उपधातवः तद्गुणाश्च भावप्र० अन्यथोक्ताः यथा

"सप्तोपधातवः स्वर्णमाक्षिकं तारमाक्षिकम्। तुत्थं कांस्यञ्च रीतिश्च सिन्दूरं च शिलाजतु। उपधातुषु सर्वेषु तत्तद्धातुगुणा अपि। सन्ति किन्त्वेषु तेऽल्पीनास्तत्तदंशाल्पभावतः"। तत्र स्वर्णादिधातौ "दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः" मनुः। उपधातवश्च गौणधातवस्तेन तत्रापि धातुशब्दप्रवृत्तिः। अतएव उपधात्वभिप्रायेण गैरिकादीनां धातुशब्दवाच्यता दृश्यते यथा "न्यस्ताक्षरा धातुरसेन यत्र" "अकालसन्ध्यामिव धातुमत्ताम्" कुमा०। "वर्द्धयन्निव तत् कूटान् उद्धूतैर्धातुरेणुभिः" रघुः। "त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्" मेघ०। "अद्रीणामिव कूटानि धातुरक्तानि शेरते" भा० द्रो० १९ अ०। १३देहादिधारके आत्मनि "स्त्रीपुंसयोस्तु संयोगे विशुद्धे शुक्रशोणिते। पञ्च धातून् स्वयं षष्ठः आदत्ते युगपत् प्रभुः" याज्ञ०। "पञ्च धातून् पृथिव्यादिपञ्चभूतानि शरीरारम्भकतया षष्ठश्चिद्धातुरात्मा प्रभुः शरीरारम्भकादृष्टकर्मयोगितया समर्थः युगपदादत्ते भोगायतनत्वेन स्वीकरोति" मिता०। आकाशादौ "तदव्ययमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम्। नवद्वारं पुरं विद्यात् त्रिगुणं पञ्चधातुकम्" भा० आश्व० २६ अ०। "भूतेषु धातवः पञ्च ब्रह्मा तानसृजत् पुरा। आवृता यैरिमे लोकाः महाभूताभिसंज्ञिताः" भा० शा० १८४ अ०। "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषम्" छा० उप०। धातौ "धातोः स्थाने इवादेशं सुग्रीवं संन्यवेशयत्"। "अवेक्ष्य धातोर्गमनार्थमर्थवित्" रघुः। रसादौ "शरीरधातवो ह्यस्य मांसं रुधिरमेव च। नेशुर्मन्त्राग्निनिर्दग्धाः न च भस्माप्यदृश्यत" भा० व० २८९ अ०। परमेश्वरे "अनादिनिधनो धाता विधाता धातुरुत्तमः" विष्णुस०। धातुर्विरिञ्चेरुत्कृष्टः इति वा नामद्वयं कार्य्यकरणाद् प्रपञ्चधारणात् वा चिद्धातुः" भा०। "वायुं पूर्वमथो सृष्ट्वा यो धातुर्धातुसत्तमः। धारणाद्धातुशब्दञ्च लभते लोकसंज्ञितम्" हरिवं० २० अ०। केशाद्युपधातौ "काकपदमक्षिका केशधातुयुक्तानि शर्करावद्भम्" वृ० सं० ८० अ०। १४धारके। "अत्यं हविः सचते सच्च धातु चारिष्टगातुः" ऋ० ५।४४।२। "धातु सर्वधारकम्" भा०। १५प्रकारे "त्रिधातवः परमा अस्य गावः" ऋ० ५।५०।४ "त्रिधातुः प्रथयद्विभूम" "त्रिधातुः त्रिप्रकारः" भा०

**धातुकासीस** न० धातुरूपं कासीसम्। कासीसे उपधातुभेदे हेमच०। [२देशभेदे च। २कूर्म्मविभागशब्दे दृश्यम्।

**धातुकुशल** त्रि० धातुषु कुशलः। १धातुक्रियायां कुशले।

**धातुक्षय** पु० धातूनां क्षयो यस्य। कासरोगभेदे।

**धातुघ्न** त्रि० धातुं स्वर्णादि हन्ति हन-टक्। १धातुनाशनशीले २काञ्जिके न० हेमच०। तस्य पारदादिधातुमारकत्वात् तथात्वम्।

**धातुद्रावक** पु० धातुं द्रावयति द्रु-णिच्-ण्वुल्। धातुद्रुतिकारके (सोहागा) ख्याते पदार्थे पारस्करनि०।

**धातुनाशन** त्रि० धातुं नाशयति नश-णिच् ल्यु। स्वर्णादिधातुमारके २काञ्जिके न० त्रिका०।

**धातुप** पु० धातुं पाति रक्षति पा-क। रसरूपे प्रथमधातौ शब्दच०। "आरुह्य धमनीर्गत्वा धातून् सर्वानयं रसः। पुष्णाति, तदनु स्वीयैर्व्याप्नोति च तनुं गुणैः" भावप्र० तस्य सर्वधातुपोषकत्वोक्तेस्तथात्वम्। "रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्द्धयेत्। केदारेषु यथा कुल्याः पुष्णन्ति विविधौषधीः। तथा कलेवरे धातून् सर्वान् वर्द्धयते रसः" भावप्र०।

**धातुपाठ** पु० धातूनां पाठो यत्र धातवः पठ्यन्तेऽत्र आधारे घञ् वा। पाणिन्यादिप्रणीते धातूनामर्थावबोधकग्रन्थभेदे। "धातुपाठः स्वरादाद्यक्रमादन्तादिसक्रमः "धातवः पठिताः पाठस्तत्रलोकागमस्थिताः" इति च कविकल्पद्रुमः। एवं पाणिनीयः भूसत्तायामित्यादिधातुपाठोज्ञेयः।

**धातुपारायण** पु० धातूनां पारायणं यत्र । धातुप्रतिपादकग्रन्थभेदे ।

**धातुपुष्पी** स्त्री धातुरिव पुष्पं यस्याः जातित्वात् ङीष् । (धाइफुल) ख्याते धातुपुष्प्यां भावप्र० । बहु० वा कप् अत इत्त्वम् । धातुपुष्पिकाऽप्यत्र शब्दरत्ना० । धातकीशब्दे तद्गुणा दृश्याः । [ ६त० । पर्वते त्रिका० ।

**धातुभृत्** पु०धातुं गैरिकादिकमुपधातुं विभर्त्ति भृ–क्विप् तुक्

**धातुमल** पु० ६त० । धातूनां रसादीनां पाकतो जायमाने केशादौ कफपित्तमलाः केशः प्रस्वेदो नखरोम च । नेत्रविट् चक्षुषः स्नेहो धातूनां क्रमशोमलाः" सुश्रुतः । शुक्रस्य तु मलोनास्ति यथाह भावप्र० ।
"स्वाग्निभिः पच्यमानेषु मलः षट्सु रसादिषु । षट्सु धातुषु जायन्ते मलानि मुनयो जगुः । यथा सुदृढसुध्माते न मलं किल काञ्चने । तथा रसे सुशुद्धः पक्वे न मलं शुक्रताङ्गते" । "आहार्य्यस्य रसः सारः सारहीनो मलद्रवः । शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात्" भावप्र० । अहङ्कारशब्दे ५५८ पृ० तत्पाकप्रकारो दृश्यः ।

**धातुमाक्षिक** न० धातुरूपधातुरूपं माक्षिकम् । माक्षिके उपधातुभेदे राजनि० ।

**धातुमारिणी** धातुं मारयति मृ–णिच्–णिनि ६त० ङीप् । (सोहागा) सर्जिकायां शब्दच० ।

**धातुराजक** न० धातुषु राजते राज–ण्वुल् धातूनां राजा टच्समा० स्वार्थे क वा । शुक्रे तस्य च सर्वधातूनां चरमत्वात् तथात्वम् ।

**धातुवल्लभ** न० ६त० । टङ्कणे राजवल्लभः ।

**धातुवादिन्** धातुं वदति उपायान्तरेण कर्त्तुम् । कारन्धमे कौशलभेदात् रसायनादिना स्वर्णरौप्यादिकरे हारा०

**धातुवैरिन्** पु० ६त० । गन्धके शब्दच० ।

**धातुशेखर** न० धातूनामुपधातूनां शेखरमिव । कासीसे उपधातुभेदे हेमच० । [(खांड़) हारा०

**धातूपल** पु० धातुरूपधातुरूप उपलः । कठिनिकायां

**धातृ** त्रि० धा–तृच् । १धारके २पोषके ३ब्रह्मणि पु० अमरः "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" सन्ध्यामन्त्रः ४विष्णौ । "अनादिनिधनो धाता" विष्णुस० । धातृशब्दे उदा० दृश्यम् । ५आत्मनि ६वायुभेदेऽनिलशब्दे १६६पृ० दृश्यम् । ७आदित्यभेदे आदित्यशब्दे ६९५ पृ० दृश्यम् । तत्रादित्यभेदे "कौशल्या सुषुवे रामं धातारमदितिर्यथा" रामा० बाल०९२ अ० । ८ब्रह्मणः पुत्रभेदे "द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् । लोके धाता विधाता च यौ स्थितौ मनुना सह" भा० आ० ६६अ० । ९भृगुसुतभेदे "भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् । धातारञ्च विधातारं श्रियञ्च भगवत्पराम्" भाग०४।१।३५ १०प्रजासर्गकारकेषु सप्तर्षिषु "सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् । पुरातनाः पुराविद्भिः धातार इति कीर्त्तिताः" कुमा० ।

**धातृपुत्र** पु० ६त० । ब्रह्मणः पुत्रे सनत्कुमारे शब्दर० ।

**धातृपुष्पी** स्त्री धातृ पुष्टिकर्तृ पुष्पमस्याः ङीप् । (धाइफुल) धातक्याम् अमरः । वा. कप् अत इत्त्वम् । धातृपुष्पिका तत्रार्थे अमरः ।

**धात्र** न० धीयतेऽन्नादिकमत्र धा–आधारे ष्ट्रन् । १भाजने उणादिवृत्तिः । धाता ब्रह्मा आदित्यो वा देवताऽस्य अण् २आदित्यदेवताके ३ब्रह्मदेवताके च द्वादशकपालसंस्कृते पुरोडाशादौ त्रि० । "स यः स धातासौ स आदित्यः । अथ यत्तद्दिशां परमं क्रान्तमेतत्तद्यस्मिन्नेष एतत् प्रतिष्ठितस्तपति । स यः स धातायमेव स धात्रः द्वादशकपालः पुरोडाशो द्वादशकपालो द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्धाता" शतब्रा०९।५।१।३८ । "अनुमतिराकाशिनीवालीकुहूभ्यश्चरवो धात्रो द्वादशकपालः सर्वहुतः" कात्या० श्रौ० १८।६।२१ ।

**धात्री** स्त्री धीयते पीयते धेट–कर्मणि ष्ट्रन् धीयन्ते पुरुषार्था अनया वा धा–करणे ष्ट्रन्, विश्वं वा दधाति ष्ट्रन् षित्त्वात् ङीष् तृच् ङीप् वा । १उपमातरि (धाइमा) ।
भावप्र० धात्रीलक्षणादि "पीताय (पानाय) यदि बालस्य विदध्यादुपमातरम् । सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम् । सवर्णां मध्यवयसां सच्छीलां मुदितां सदा । शुद्धदुग्धाम्बुजाक्षीरां वत्सवामतिवत्सलाम् । स्वाधीनामलसन्तुष्टां कुलीनां सज्जनात्मजाम् । कैतवेनापरित्यक्तां निजपुत्रवतीं शिवौ । अथ निषिद्धां धात्रीमाह । शोकाकुला क्षुधार्त्ता च श्रान्ता व्याधिमती सदा । अत्युच्चानितरां नीचा स्थूलातीव कृशांगता । गर्भिणी ज्वरिणी चापि लम्बोन्नतपयोधरा । अजीर्णभोजिनी चापि तथा पथ्यविवर्जिता । आसक्ता क्षुद्रकार्य्ये तु दुःखार्त्ता चञ्चलापि च । एतासां स्तन्यपानेन शिशुर्भवति सामयः । अथ बालस्य स्तन्यपानविधिः । तत्र माता प्रशस्ताङ्गी चारुवस्त्रा पुरोमुखी । उपविश्य–

स्तने सम्यग्दक्षिणं स्तनमम्बुना । प्रक्षाल्येषत् परिस्राव्य मन्त्राभ्यामभिमन्त्रितम् । उदङ्मुखं शिशुं क्रोडे शनैः सन्धार्य पाययेत् । मातेत्युपलक्षणं धात्री च ईषत् परिस्राव्य । अन्यथा वैगुण्यमाह सुश्रुतः । अस्रावितं स्तनं बालः पिबन् स्तन्येन भूयसा । पूर्णस्रोता वमीकासश्वासैर्भवति पीड़ितः । अभिमन्त्रणमाह । क्षीरनीरनिधिस्तेऽस्तु स्तनयोः क्षीरपूरकः । सदैव सुभगो बालो भवत्वेष महाबलः । पयोऽमृतसमं पीत्वा कुमारस्ते शुभानने । दीर्घमायुरवाप्नोतु देवाः प्राश्यामृतं यथा । मन्त्रौ च पितृस्थानेन ब्राह्मणेन पठनीयौ । यावत् मन्त्रपाठस्तावन्माता धात्र्या वा दक्षिणहस्तेन स्पर्शः कार्य्यः” “उवाच धात्र्या प्रथमोदितं वचः” रघुः । “धात्र्यङ्गुलीभिः प्रतिसार्य्यमाणः” कुमा० । २क्षितौ च तस्या विश्वधारणात् । “मेखलेव स्थिता धात्र्या देवासुरविभागकृत्” हर० वि० । ३धारणकर्त्र्यां स्त्रियां । ४आमलक्यां च मेदि० । तस्याः धारणादेः पुरुषार्थसाधनत्वात् तथात्वम् । आमलकीशब्दे ७६४पृ० तद्गुणा उक्ताः । तस्या उत्पत्तिर्माहात्म्यञ्च पाद्मोत्तरख० १२७ अ० उक्तं यथा “अथ च्छिन्नेभ्यो वीजेभ्यो वनस्पत्यः स्त्रियोऽभवन् । धात्री च मालती चैव तुलसी च नृपोत्तम ! । स्वधाभवा स्मृता धात्री माभवा मालती तथा । गौरीभवा च तुलसी तमःसत्त्वरजोगुणा”

स्थानान्तरे तत्रैवतन्माहात्म्यं यथा

“शृणुष्व धात्रीमाहात्म्यं सर्वपापहरं शुभम् । यत् पुरा हरिणा प्रोक्तं वशिष्ठं प्रति नारद ! । धात्री वत्स ! नृणां धात्री मातृवत् कुरुते कृपाम् । दद्यादायुः पयःपानात् स्नानाद्वै धर्मसञ्चयम् । अलक्ष्मीनाशनं सद्योऽप्यन्ते निर्वाणमेव च । विघ्नानि नैव जायन्ते धात्रीस्नानेन वै नृणाम् । तस्मात् त्वं कुरु विप्रेन्द्र ! धात्रीस्नानं हि यत्नतः । प्रयास्यसि हरेर्धाम देवत्वं प्राप्य नारद ! । यत्र यत्र मुनिश्रेष्ठ ! धात्रीस्नानं समाचरेत् । तीर्थे वापि गृहे वापि तत्र तत्र श्रियः स्थिताः । धात्रीस्नातानि तिष्ठन्ति यस्यास्थीनि कलेवरे । प्रक्षालितानि विप्रेन्द्र ! न स स्याद्गर्भसम्भवः । धात्रीफलेन विप्रेन्द्र ! येषां केशाश्च रञ्जिताः । ते नराः केशवं यान्ति नाशयित्वा कलेर्मलम् । धात्रीफलं महापुण्यं स्नाने पुण्यवरं स्मृतम् । पुण्यात् पुण्यतरं वत्स ! भक्षणे मुनिपुङ्गव ! । न गङ्गा न गया पुण्या न काशी न च पुष्करम् । एकैव च यथा पुण्या धात्री माधववासरे । कार्त्तिके मासि विप्रेन्द्र ! धात्रीस्नानं समाचरेत् । यश्च तज्जलमश्नीयात् सोऽश्वमेधमवाप्नुयात् । धात्रीफलं स्मरेद्यस्तु सदैव मुनिसत्तम ! । प्राग्जन्मनि कृतात् पापात् मुच्यते नात्र संशयः । संस्मरेद्यस्तु धात्रीं तामहन्यहनि मानवः । मुच्यते पातकैः सर्वैर्मनोवाक्कायसम्भवैः । धात्रीफलान्यमावास्यामष्टमीनवमीषु च । रविवारे च संक्रान्तौ संस्मरेन् मुनिपुङ्गव ! । यस्य गेहे मुनिश्रेष्ठ ! धात्री तिष्ठति सर्वदा । तस्य गेहं न गच्छन्ति प्रेतकुष्माण्डराक्षसाः । धात्रीस्नाने हरेर्नाम्नि जागरे हरिवासरे । जन्मवन्ध्यो विनश्येत इयमेषायुतं फलम् । स्नायादामलकैर्यस्तु कार्त्तिके हरिवल्लभ ! । परितोषं समायाति तस्य वै माधवः स्वयम् । धात्रीच्छायां समासाद्य कुर्य्यात् श्राद्धन्तु यो मुने ! । मुक्तिं प्रयान्ति पितरः प्रसादात्तस्य वै हरेः । मूर्ध्नि पाणौ मुखे कण्ठे देहे च मुनिसत्तम ! । धत्ते धात्रीफलं यस्तु स महात्मा स पुण्यभाक् । धात्रीफलविलिप्ताङ्गो धात्रीफलविभूषितः । धात्रीफलकृताहारो नरो नारायणो भवेत् । यः कश्चिद्वैष्णवो लोके धत्ते धात्रीफलं मुने ! । प्रियो भवति विष्णोः स मनुष्याणाञ्च का कथा । धात्रीफलानि यो नित्यं वहते करसंपुटे । तस्य नारायणो देवो वरमेकं प्रयच्छति । धात्रीफलं न मोक्तव्यं कदाचित् करसंपुटात् । य इच्छेद्विपुलान् भोगानन्ते यो मुक्तिमिच्छति । धात्रीफलकृतां मालां कण्ठस्थां यो वहेन्न हि । स वैष्णवो न विज्ञेयो विष्णुभक्तिपरोऽपि च । न त्याज्या तुलसीमाला धात्रीमाला विशेषतः । तथा रुद्राक्षमालापि धर्मकामार्थमिच्छता । यावल्लुठति कण्ठस्था धात्रीमाला नरस्य हि । तावन्मनसि हृत्स्थोऽपि सदा लुठति केशवः । यावद्दिनानि वहते धात्रीमालां करे नरः । तावद्युगसहस्राणि वैकुण्ठे वसतिर्भवेत् । सर्वदेवमयी धात्री वासुदेवमनःप्रिया । आरोपणीया सेव्या च सेचनीया सदा बुधैः । एतत्ते सर्वमाख्यातं धात्र्या माहात्म्यमुत्तमम् । श्रोतव्यञ्च सदा सद्भिश्चतुर्वर्गफलप्रदम्” अधिकमामलकीशब्दे द्रष्टव्यम् । ५अनन्त्यां विश्वः । “पुनर्धात्रीं पुनर्गर्भमोजस्तस्य प्रधावति” याज्ञ० । [६तत० । आमलक्याः पत्रे ।

धात्रीपत्र न० धात्र्या इव पत्रमस्य । तालीशपत्रे राजनि० ।

धात्रीपुत्र पु० ६तत० । उपमातुः सुते हेमच० ।

**धात्रीफल** न० ६त०। आमलकीफले तस्य पाकविशेषगुणाः। "अङ्गारपाकस्वदुयत्नसुपाचितानि सिन्धूत्थहिङ्गुमरिचादि-समन्वितानि। तप्ते घृते पुनरपि प्रतिभर्जितानि धात्री-फलानि जनयन्ति हि जाठराग्निम्" वैद्यके उक्ताः।

**धात्रेयी** स्त्री धात्र्या अपत्यम् स्त्री स्वार्थे वा ढक् ङीप्। १धात्र्याः स्त्र्यपत्ये २धात्र्याञ्च। "दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी" सा०द०। स्वार्थे क तत्रार्थे। "अतश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्दीक्षते यदि। पठेद्धात्रे-यिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः" ति० त०। धात्रेयिकावाक्यञ्च "सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक! मा रोदीस्तव ह्येष स्यमन्तकः विष्णुपु० "अस्वं हृष्टं च तं मत्वा न सा देवी जगाम ह। स्वान्तु धात्रेयिकां तस्मै प्रदाय प्राद्रवत् तथा"। "अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम" भा० आ० १०५ अ०।

**धात्र्यरिष्ट** पु० "धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्। क्षौद्राष्टभागं पिप्पल्याश्चार्द्धं कुड़वान्वितम्। शर्करा-र्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्। प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः। कामलापाण्डु-हृद्रोगवातासृग्विषमज्वरान्। कासहिक्काऽरुचिश्वासा-नेषोऽरिष्टः प्रणाशयेत्" चक्रदत्तोक्ते धात्र्यारसपक्वे रिष्टनामके पदार्थे।

**धान** न० धा–भावे ल्युट्। १धारणे २पोषणे च आधारे ल्युट्। ३आधारमात्रे स्त्रियां ङीप् राजधानी मतस्यधानी

**धानक** न० धन्याक+पृषो०। १धन्याके राजनि० २मानभेदे पु० भावप्र०। "षड्भिस्तु रत्तिकाभिः स्यात् माषको हेमधानकौ"। अत्र हेमधाणकौ पाठान्तरम्।

**धाना** स्त्री ब० व०। धा–न टाप्। (मुड़री) ख्याते १भृष्ट-यवे अमरः। २धन्याके ३अभिनवोद्भिन्ने अङ्कुरे ४चूर्ण-सक्तुषु च मेदि०। "यवास्तु निस्तुषा भृष्टाः स्मृता धाना इति स्त्रियाम्। धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुर-वश्च ताः। तथा मेदःकफच्छर्दिनाशिन्यः सम्प्रकीर्त्तिताः" राजनि०। "धाना सत्स्यान् पयोमांसं शाकञ्चैव न निर्णुदेत्" मनुः। स्वार्थे क धानाका तत्रार्थे ब०ब० शब्दर०।

**धानाचूर्ण** न० ६त०। सक्तुषु।

**धानी** स्त्री धा–आधारे ल्युट् ङीप्। १आधारे राजधानी २पीलुवृक्षे स्त्री राजनि०। स्वार्थे क धानिका तत्रार्थे "अङ्गारधानिका" अमरः।

**धानुर्दण्डिक** पु० धनुर्दण्ड इव तेन जीवति वेतना० ठक्। धनुरुपजीविनि धानुष्के।

**धानुष्क** पु० धनुःप्रहरणमस्य धनुषा जीवति वा वेतना० ठक् इसुसुक्तान्तात् ठस्य कः। १धनुषा युध्यमाने २धनुषा जीविनि च अमरः। "पारश्वधिकधानुष्कशाक्तीकप्रासि-कान्वितौ" भट्टिः। धनुरिवावयवोऽस्य वा०ठक्। ३अपा-मार्गे स्त्री शब्दच०।

**धानुष्य** व० धनुषि साधुः वा० ञ्य। वंशे राजनि०।

**धानेय** न० धानैव स्वार्थे ढक्। धन्याके राजनि० स्वार्थे क धानेयक तत्रार्थे न० जटाधरः।

**धान्धा** स्त्री (एलाइच) एलायां शब्दच०।

**धान्य** न० धाने पोषणे साधु यत्। १सतुषे (धान) ख्याते व्री-ह्यादौ "शस्यं क्षेत्रगतं प्रोक्तं सतुषं धान्यमुच्यते" स्मृतिः। धान्यवर्गः सगुणोऽभिहितो भावप्र० यथा "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम्। शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम्। शा-लयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः। यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यञ्च तत् स्मृतम्"।

तत्र शालिधान्यस्य लक्षणं गुणाश्च "कण्डनेन विना शुक्ला हैमन्ताः "शालयः स्मृताः"। अथ शालीनां नामानि। रक्तशालिः सकलमः पाण्डुकः शकुनाहृतः। सुगन्धकः कर्द्दमको महाशालिश्च दूषकः। पुष्पाण्डकः पुण्डरी-कस्तथा महिषमस्तकः। दीर्घशूकः काञ्चनको हायनो लोध्रपुष्पकः। इत्याद्याः शालयः सन्ति बहवो बहुदे-शजाः। ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिताः"।

अथ तेषां गुणाः "शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्च्चसः। कषाया लघवो रुच्याः स्वर्य्या वृष्याश्च बृंहणाः। अल्पानिलकफाः शीताः पित्तघ्ना मूत्रला-स्तथा। शालयो दग्धमृज्जाताः कषाया लघुपाकिनः। सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः। कैदारा वात-पित्तघ्नाः गुरवः कफशुक्रलाः। कषाया अल्पवर्च्चस्का मेध्याश्चैते बलावहाः"। कैदाराः कृष्टक्षेत्रजाः उप्ताः। "स्थलजाः स्वादवः पित्तकफघ्ना वातपित्तदाः। किञ्चि-त्तिक्ताः कषायाश्च विपाके कटुका अपि। स्थलजाः अकृष्टभूमिजाताः स्वयंजाता। वापिता मधुरा वृष्या बल्याः पित्तप्रणाशनाः। श्लेष्मलाश्चाल्पवर्च्चस्काः कषाया गुरवो हिमाः"। वापिताः कृष्टक्षेत्रे अकृष्टक्षेत्रे

च। परोद्देशश्च मनसा त्यक्तद्रव्यस्य दापनम्। स्तवपाठश्च मौनञ्च नीचालापविवर्ज्जनम्। केवलं वारिपानञ्च कर्त्तव्यं ब्रह्मभावतः। एतानि किल कर्माणि चैव नारायणे चरेत्”।

**नारायणतीर्थ** न० तीर्थभेदे शिवपु०।

**नारायणप्रिय** पु० ६त०। १शिवे २पीतचन्दने नैघण्टुप्रका०।

**नारायणवलि** पु० नारायणमुद्दिश्य देयो वलिः। दुर्मरणमृतानामौर्द्ध्वदैहिकक्रियासम्प्रदानतायोग्यत्वार्थं नारायणादिपञ्चदेवतोद्देशेन देये वलिभेदे तस्य निमित्तञ्च आत्मघातिन्शब्दे ६६०पृ० उक्तं तद्विधानं निर्णयसिन्धावुक्तं यथा

“नारायणवलिस्तु हेमाद्र्याद्यनुसारेणोच्यते तत्रादौ क्रियानिबन्धे गारुड़े तर्पणमुक्तम् ‘कार्य्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि। दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन्। अनादिनिधनो देवः शङ्खचक्रगदाधरः। अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भवेति”। शुक्लैकादश्यां देशकालौ संकीर्त्यामुकगोत्रस्यामुकस्य दुर्मरणात्मघातजदोषनाशार्थम् औौर्द्ध्वदैहिकसम्प्रदानत्वयोग्यतासिद्ध्यर्थं नारायणवलिं करिष्ये इति सङ्कल्प्य ब्रह्माणं विष्णुं शिवं यमं प्रेतञ्च पञ्चकुम्भेषु स्थापयेत् “विष्णुः स्वर्णमयः कार्यो रुद्रस्ताम्रमयस्तथा। ब्रह्मा रौप्यमयस्तत्र यमो लोहमयो भवेत्। प्रेतो दर्भमयः कार्य्य इति देवप्रकल्पनेति” गारुड़ोक्तासु सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्तेनाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृचं नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणाग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन् नामगोत्राभ्यां मधुघृततिलयुतान् दश पिण्डान् यज्ञोपवीत्येवामुकगोत्रामुकशर्म्मन्! प्रेत। विष्णुरूपाय ते पिण्ड उपतिष्ठतामिति दत्त्वा पुरुषसूक्तेनाभिमन्त्र्य तेनैव शङ्खोदकेनाभिषिच्याभ्यर्च्यामुकशर्म्माणममुकगोत्रं विष्णुरूपं प्रेतं तर्पयामीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एवमामान्नं ब्रह्मादिपञ्चभ्यो दद्यात् मन्त्रस्तु “ब्रह्मविष्णुमहादेवा यमश्चैव सकिङ्करः। वलिं गृहीत्वा कुर्वन्तु प्रेतस्य च शुभां गतिम्”। मिताक्षरायान्तु होमवल्यादि नोक्तम्। ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुगुडघृतानि च निवेद्य पिण्डानभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नव सप्त पञ्च वा विप्रान्निमन्त्र्योपोषितो जागरं कृत्वा श्वोभूते पुनर्विष्णुं ब्रह्माणं रुद्रं यमं संपूज्यैकोद्दिष्टविधिना श्राद्धपञ्चकं करिष्ये इत्युक्त्वा विष्णुयमब्रह्मरुद्रप्रेतान् स्मरन् विप्रानुपवेश्य प्रेतस्थाने चैकं विष्णुं स्मरन् पाद्यावाहनार्घ्ययुतं तृप्तिप्रश्नान्तं कृत्वोल्लेखनादि कृत्वानुक्रमेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतुरः पिण्डान् दत्त्वा प्रेतनामगोत्रे स्मृत्वा विष्णुनाम्ना पञ्चमं दत्त्वाभ्यर्च्याचान्तेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः सन्तोष्य विप्रैः प्रेतायेदं तिलोदकमुपतिष्ठतामिति सतिलमुदकं दापयित्वा भुञ्जीतेति। अत्र विशेषान्तरं च अनन्तभट्टकृतान्त्येष्टिपद्धतौ ज्ञेयम्”।

**नारायणसरस्** न० ६त०। तीर्थभेदे। “तेऽपि (शवलाश्वाः) पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः। नारायणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः” भाग० ६।५।२२

**नारायणाश्रम** न० ६त०। तीर्थभेदे “वाराणसी मधुपुरी पम्पा विन्दुसरस्तथा। नारायणाश्रमो नन्दा सीतारामाश्रमादयः” भाग० ७।१४।२६

**नारायणी** स्त्री नारायणस्येयम् अण् ङीप्। नारायणस्य १शक्तौ २लक्ष्म्यां ३दुर्गायाञ्च तन्निरुक्तिः “यशसा तेजसा रूपैर्नारायणसमा गुणैः। शक्तिर्नारायणस्येयं तेन नारायणी स्मृता” ब्रह्मवै० प्र०ख० ४५अ०। “नारायणार्द्धाङ्गभूता तेन तुल्या च तेजसा। तथा तस्य शरीरस्था तेन नारायणी स्मृता” जन्मख० २७अ०। नारस्य जीवसंघस्य जलस्य वा अयनी स्थानभूता। “जलायना नराधारा समुद्रशयनाऽपि वा। नारायणी समाख्याता नरनारीप्रवर्त्तिका। वसत्यदृष्टा सर्वेषु भूतेष्वन्तर्हिता यतः। देव्या व्याप्तमिदं सर्वं जगत् स्थावरजङ्गमम्” देवीपु०। ४शतावर्य्यां हेमच०। ५मुद्गलमुनिपत्न्यां च। “सर्वस्यार्त्तिहरे देवि! नारायणि! नमोऽस्तु ते” देवीमा०

**नारायणीय** त्रि० नारायणस्येदम् “वृद्धाच्छः” पा० छ। १नारायणसम्बन्धिनि २तदुपाख्याने। तच्चोपाख्यानं नारदनारायणर्षिसंवादरूपं भा०शा०३३६ अ० अध्यायावधि “नारदस्य च संवादमृषेर्नारायणस्य च” इत्युपक्रमे “नारायणीयमाख्यानमेतत्ते कथितं तव” इत्यन्तेन ३४८ अध्यायान्तेन दर्शितम्। ३तत्प्रतिपादकोपनिषद्भेदे च उपनिषच्छब्दे दृश्यम्। [१२२२ पृ० दृश्यम्।

**नारायणोपनिषद्** स्त्री ६त०। उपनिषद्भेदे उपनिषच्छब्दे

**नाराशंस** पु० नरैरांशस्यते आ+शन्स–कर्मणि घञ् नराशंसाः पितरः तेषामयम् अण्। नाराशंसानां पितॄणां सोमपानसाधने १चमसे “ते नाराशंसा

श्वावैश्वदेवात्" कात्या०श्रौ० ६।१२।८ "ते चमसा नाराशंससंज्ञाभवन्ति" कर्कः "आप्यायितांश्चमसान् सादयन्ति ते नाराशंसा भवन्ति" आश्व०श्रौ० ५।६।३०। नाराशंसा भवन्ति इत्यर्थः अन्वर्थसंज्ञेयं नाराशंसा नाम तय ! पितृगणा ऊमाः ऊर्वाः काव्याश्चेति तेषामनुसवनं यथासङ्ख्येनाप्यायितानां चमसानां देवता भवन्तीति नाराशंसाश्चमसा भवन्ति"नारायण। २तद्देवतासु पितृषु "अथ यदि नाराशंसेषु सद्यः किञ्चिदापद्यते पितृभ्यः नाराशंसेभ्यः इति जुहुयात् पितरोऽहि तर्हि नाराशंसाः" शत०ब्रा०१२।६।३३। ३पितृयचमसस्थसोमे च"मनो न्वा हुवामहे नाराशंसेन सोमेन" ऋ०१०।५७।३ "नाराशंसेन चमसगतेन सोमेन। नरैः शंसन्ते इति नराशंसाः पितरः तेषां चमसानां कस्यनमेव होमः। तथाविधेन सोमेन" भा०। ४मन्त्रभेदे "येन नराः प्रशस्यन्ते स नाराशंसमन्त्रः" निरु० ६।८ स च रुद्रदैवत्यः यथाह "वाकोवाक्यं पुराणञ्च नाराशंसांश्च गाथिकाः" याज्ञ० व्याख्याने "नाराशंसान् रुद्रदैवत्यामन्त्रान्" मिता०।

**नारिकेल** पु० नल–इण् नालिः केन वायुना जलेन वा इलति चलति इल–क कर्म० रलयोरैक्यम्। स्वनामख्याते ऽक्षे अमरः। नालिकेरोऽपि तत्रार्थे शब्दरत्ना०। "नारिकेलफलं शीतं दुर्जरं वस्तिशोधनम्। विष्टम्भि वृंहणं बल्यं वातपित्तास्रदाहनुत्। विशेषतः कोमलं नारिकेलं निहन्ति पित्तज्वरमूत्रदोषान्। तदेव जीर्णं गुरुपित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः" नवस्य जलगुणाः। "तस्याम्भः शीतलं हृद्यं दीपनं शुक्रलं लघु। पिपासा पित्तजित् स्वादु वस्तिशुद्धिकरं परम्"। तस्य मस्तिष्कगुणाः "नारिकेलस्य तालस्य खार्जूरस्य शिरांसि तु। कषायस्निग्धमधुरवृंहणानि गुरूणि च" भावप्र० "वालस्य नारिकेलस्य जलं प्रायो विरेचनम्" इति राजवल्लभः। कांस्यपात्रे तत् जलं मद्यतुल्यं यथाह "नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना" इति कर्मलोचनम्। तस्येदमण्। २तदीये त्रि० "नारिकेलासवं तत्र शात्रवं व यशः पपुः"रघुः। अष्टम्यां तद्भक्षणनिषेधः"नारिकेले च मूर्खता" ति०त० तिथिभेदेऽभक्ष्योक्तौ "कोजागररात्रौ तदुदकपानं कार्यं यथाह "नारिकेलोदकं पीत्वा कोजागर्त्ति महीतले" ति०त० कोजागरशब्दे दृश्यम्।

**नारिकेलक्षीरी** स्त्री क्षीरिकाभेदे "नारिकेलं तनूकृत्य छिन्नं पयसि गोः क्षिपेत्। सितागव्याज्यसंयुक्तं तत् पचेन्मृदुनाग्निना। नारिकेलोद्भवा क्षीरी स्निग्धा शीतातिपुष्टिदा। गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा" भावप्र०।

**नारी** स्त्री नरजातिः स्त्री नृ+नर+वा जातौ ङीप् नि०। १नरजातिस्त्रियां तद्भेदा रतिमञ्जर्यामुक्ता यथा "पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा। चतस्रो जातयो नार्य्याः रतौ ज्ञेया विशेषतः" अन्यथाऽपि त्रिधा "योषितस्त्रिविधा ब्रह्मन् गर्हिताः मूढचेतसाम्। साध्वी भोग्या च कुलटा ताः सर्वाः स्वार्थतत्पराः। परलोकभयात् साध्वी तथेह यशसेऽर्थतः। कामस्नेहाच्च कुरुते भर्त्तुः सेवाञ्च सन्ततम्। भोग्या भोगार्थिनी शश्वत् कामस्नेहेऽध केवलम्। कुरुते पतिसेवाञ्च न च भोगात्ते क्षणम्। वस्त्रालङ्कारसम्भोगं सुस्निग्धाहारमुत्तमम्। यावत् प्राप्नोति सा भोग्या तावच्च वशगा प्रिया। कुलाङ्गारसमा नारी कुलटा कुलनाशिनी। कपटात् कुरुते सेवां स्वामिनो न च भक्तितः। सदा पुंयोगमाशंसुर्मत्ता मदनातुरा। आहारादधिकं जारं प्रार्थयन्ती नवं नवम्। जारार्थं स्वपतिं तात! हन्तुमिच्छति पुंश्चली। तस्यां यो विश्वसेन्मूढो जीवनं तस्य निष्फलम्। कथिता योषितः सर्वा उत्तमाधममध्यमाः। स्वात्मारामा विजानन्ति मनसा ता न पण्डिताः" ब्रह्मवै०ब्रह्म०ख० २३अ०। २गुरुत्रयपादके छन्दोभेदे "सो नारी" इ०र०।

**नारीकवच** पु० सूर्य्यवंश्ये अश्मकस्य पुत्रे मूलकापरपर्य्याये नृपभेदे "अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः। नारीकवच इत्युक्तो निक्षत्रे मूलकोऽभवत्" भाग० ९।९।३२ "स्त्रीभिः संवेष्ट्य परशुरामतः परिरक्षितः। अतो नारीकवच इत्युक्तः निःक्षत्रे सति क्षत्रवंशस्य मूलमभवत् अतो मूलक इति प्रोक्तः" श्रीधरः।

**नारीकेल** पु० नारिकेल+पृषो०। नारिकेलशब्दार्थे शब्दरत्ना० गौरा० ङीष्। नारीकेलीत्यप्यत्र स्त्री शब्दरत्ना०।

**नारीच** न० नाडीच+पृषो०। (नालिता) शाकभेदे राजवल्ल०।

**नारीतरङ्गक** पु० नारीं तरङ्गयति तरङ्ग+क्वतौ णिच् ण्वुल्। नाडीचित्तचञ्चलकारके जारे त्रिकां० शब्दमा०।

**नारीतीर्थ** न० तीर्थभेदे भा०आ० २२६।२७अ०. तदाविर्भावकथा दृश्या "तीर्णि पुण्यानि तीर्थानि ततः प्रभृति

श्चैव ह। नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वतः। पुण्यानि च भविष्यन्ति पावनानि मनीषिणाम्” यत्र वर्गाप्रभृतिपञ्चाप्सरसः विप्रशापेन ग्राहतां प्राप्ता अर्जुनेन मोचिताः अतस्तत्तीर्थनारीतीर्थत्वेन ख्यातम्।

**नारीदूषण** न० ६त०। “पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्” मनूक्ते स्त्रीणां दोषभेदे। पानं सुरापानम्।

**नारीमुख** पु० नारी मुखं प्रधानं यत्र। वृ०सं० १४अ० कूर्मविभागे नैरृत्यामुक्ते देशभेदे “वडवामुखारवाम्बष्ठकपिलनारीमुखानर्त्ताः”।

**नारीष्ट** त्रि० ६त०। १नारीप्रिये २मल्लिकायां स्त्री राजनि०।

**नारीष्ठ** त्रि० नार्य्यां तदानुकूल्ये तिष्ठति स्था–क षत्वम्। गन्धर्वभेदे “गन्धर्वाभ्यां नारीष्ठाभ्यां महाहाहाहूहूभ्यां स्वाहा” सां० श्रौ० ४।१०।७

**नारेय** पु० सत्राजित्पुत्रभङ्गकारस्य पुत्रभेदे “सभाक्षो भङ्गकारात्तु नारेयश्च नरोत्तमौ। जज्ञाते गुणसम्पन्नौ” हरिवं० ३८ अ०।

**नार्य्य** पु० नृ–ण्यत् नरहिते नर्य्यं तस्येदं अण् वा। नरहितसम्बन्धिनि यज्ञे निघण्टुः “नार्य्यस्य दक्षिणा” ऋ० ८।४।२६। [सुम् च। नारङ्गे जम्बीरभेदे हेमच०।

**नार्य्यङ्ग** पु० नार्य्यं नरहितसम्बन्धिनं गच्छति गम–ड

**नार्य्यतिक्त** पु० नित्यकर्म०। किराततिक्ते नैघण्टुप्रकाशिका तस्य नरहितत्वात् तिक्तत्वाच्च तथात्वम्।

**नाल** स्त्री न०नल–बन्धे ज्वला० ण। १काण्डे २पद्मादिदण्डे हेमच० “नालास्त्वणालाप्रभुजो भजामः” नैष० “कश्चित् कराभ्यामुपगूढनालम्” रघुः “तयोरुपर्य्यायतनालदण्डः” कुमा०। नल–घञ्। ३जलनिर्गमे जलादेः प्रवाहे पु० “यथा तोयार्थिनस्तोयं यन्त्रनालादिभिः शनैः” मार्कण्डेयपु०।

**नालस्वी** स्त्री शिवस्य वीणायाम् हेमच०।

**नालवंश** पु० नाल वंश इव। नले तृणभेदे राजनि०।

**नालि(ली)** स्त्री नल–णिच् इन् वा ङीप्। १नाड्यां दण्डे २सिरायां ३पद्मादिदण्डे ४शाकभेदे च द्विरूपकोषः।

**नालिक** पु० नलमेव नालमस्त्यस्य ठन्। १पद्मे शब्दरत्ना०। २महिषे पुंस्त्री० त्रिका० नाला+स्वार्थे क। नालिका नालायां स्त्री नालिताशाके शब्दच०। चर्मकषायां स्त्री जटाध०। हस्तिकर्णवेधनिकायां स्त्री हारा०। “गजाः सहत्करतलचोलनालिका” माघः। श्वेतकलम्ब्यां कल्पतरुः “कुसुम्भं नालिकाशाकमिति” ति०त० पाठान्तरम्।

**नालिकेर** पु० नल–वा० इण् केन वायुना ईर्य्यते ईर–घञ् कर्म०। नारिकेले तच्छब्दे दृश्यम्। तस्य खण्डपाकविधिगुणादि वैद्यके उक्तं यथा “कुड़वं नालिकेरस्य सूक्ष्मं दृषदि पेषितम्। शुद्धखण्डस्य कुड़वं गव्यक्षीरे चतुर्गुणे। आलोड्य नालिकेरस्य जले मृद्वग्निना पचेत्। धान्यकं पिप्पलीं शुण्ठीं चातुर्जातं सुचूर्णितम्। शाणप्रमाणं प्रत्येकं शीतीभूते क्षिपेद्बुधः। नालिकेरस्य खण्डोऽयं पुंस्त्वनिद्राबलप्रदः। अम्लपित्तं क्षयं कासं शूलं च परिणामजम्। नाशयेद्रक्तपित्तञ्च शुष्कं दावानलो यथा”। अत्र घृतपक्वेन कुष्माण्डवन्नालिकेरस्य भर्जनं विधेयमिति सम्प्रदायः। वृ०सं० १४अ० कूर्मविभागे आग्नेय्यामुक्ते २देशभेदे “वृषनालिकेरचर्मद्वीपेत्यादि” तद्वाक्यम्। पृषो० रस्य लः। नालिकेलोऽप्यत्र।

**नालिता** स्त्री नल–णिच्–क्त। नारीचशब्दोक्तगुणके पट्टशाके स्वनामख्याते शाकभेदे शब्दर०।

**नाली** स्त्री नालि+वा ङीप्। १शाककडम्बे (डाँटा) ख्याते पदार्थे मेदि०। “नालेन रहिता नाली सुस्विन्ना सुष्टिपीडिता। घृते तप्ते परिक्षिप्ता चिञ्चिणीपत्रसंयुता। नाली सरा लघुः शीता पित्तनुत् कफवातला। सुक्तशोककरी ज्ञेया क्षिप्ता शोथघ्निका मता” शब्दार्थचि०। २हस्तिकर्णवेधन्याम् ३दण्डात्मककाले घट्याम् त्रिका०। ४पद्मे शब्दर०५पद्मदण्डे ६प्रणाल्याम् ७वाद्यविशेषे शब्दार्थचि०।

**नालीक** पु०नाल्या कायति कै–क। सुखमात्रे लौहसंयुक्ते अन्तश्छिद्रे १शरभेदे २शल्याङ्गे ३पद्मसमूहे च न०मेदि० ४शल्ये विश्वः “कर्णिनालीकनाराचानुत्सृजन्तो महारथाः” भा०व० ६१अ० ५नारिकेलकमण्डलौ “तल्पे न शयीत नग्नो नालीकं बिभृयाद्व्रती” स्मृतिः “कान्तकानिव नालीकांस्त्विषताः सहसाऽमुचन्” माघः। ततः पुष्करा० देशे इनि। नालीकिनी तत्समूहे स्त्री।

**नालीघटी** स्त्री नाड्या दण्डकालस्य बोधनार्था घटी ङस्य लः। घटीवादनवाद्यभेदे स्त्री शब्दार्थचि०।

**नालीप** पु० कदम्बके नैघण्टुप्रकाशिका। [शब्दार्थ

**नालीव्रण** पु०न० नाडी तत्र व्रणः+डस्य लः। नाडीव्रण-

**नाल्व** त्रि०नडस्यादूरदेशादि सङ्काशा०ण्य। नलस्यादूरदेशादौ

**नावयज्ञिक** पु० नवयज्ञस्य तत्प्रतिपादकग्रन्थस्य व्याख्यानो

ग्रन्थः ठञ्। नवयज्ञप्रतिपादकग्रन्थव्याख्याने १ग्रन्थे नवयज्ञो वर्त्ततेऽस्मिन् काले तम इति वा ठञ्। २नवयज्ञविधानयोग्ये काले च।

**नाविक** पु० नावा तरति "नौद्व्यचष्ठन्" पा० ठन्। १नावा तारिणि। नौरस्त्यस्य बाह्वतया व्रीह्या० पक्षे ठन्। नौपृष्ठस्थदण्डचालनेन नौकाचालके २कर्णधारे "महावातसमुद्भूतामपरीक्षितनाविकाम्। अन्यनौप्रतिबद्धां वानोमेयान्नावमातुराम्" काम०नी० "नाविकपुरुषे न विश्वासः"। "अख्यातिरिति ते कृष्ण! मग्ना नौर्नाविके त्वयि" इति च उद्भटः।

**नाविन्** त्रि०नौरस्त्यस्य व्रीह्या० पक्षे इनि। नाविके स्वामी।

**नावोपजीवन** पु० नावा उपजीवनमस्य आर्षे अलुक्स०। १नौचालनोपजीविजातिभेदे "निषादो मद्गुरं सूते दासं नावोपजीवनम्" भा०अनु० ४८अ०सङ्करजात्युक्तौ।

**नाव्य** त्रि०नावा तार्य्यं यत् "वान्तो यि प्रत्यये" पा०आवादेशः। १नौकयातार्य्ये देशे २नौतार्य्ये नद्यादौ च "नाव्याः सुप्रतराः नदीः" रघुः। नवस्य भावः ष्यञ्। ३नूतनत्वे न०

**नाव्युदक** न० नावि स्थितमुदकं नावि अग्निहोत्रसमाप्तिं यावदुदकम्। १नौकास्थिते जले अग्निहोत्रार्थमग्निप्रणने कृते जलमात्रे च "तयोर्जलयोराहिताग्निना पाननिषेधः कात्या०श्रौ० ४।१०।१५ उक्तो यथा "अन्ततातिथ्यपनोदपूतिदार्वाधानवीपक्वनाव्युदकानि वर्जयेत्" सू० नाव्युदकम् नौशब्देन "नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रमिति" श्रुतेरग्निहोत्रमुच्यते तेन अग्निहोत्रार्थमुद्धरणे कृते तत्समाप्तिं यावत् उदकपानं न कुर्य्यादित्यर्थः। अथ वा नावि नौकायां यदुदकम् तस्य पानं न कुर्य्यादिति मानवे "या अन्तर्नौव्यापः स्युर्न तासामाचामेन्न किञ्चं दावीदध्यादिति"। यजमान आधानानन्तरमेतानि यावज्जीवं वर्जयेत्" कर्क०।

**नाश** पु० नश–भावे घञ्। १ध्वंसे निधने २अदर्शने ३पलायने ४अनुपलम्भे च मेदि०। ध्वंसस्य जन्याभावः इति नैयायिकाः अतीतावस्थेति सांख्याः "नाशः कारणलयः" सा०सू० "लीङ् श्लेषणे इत्यनुशासनात् लयः सूक्ष्मतया कारणेष्वविभागः सएषातीतावस्थाख्यो नाश इत्युच्यते" प्र०व०भा०। आत्यन्तिकनाशस्य कारणेन सह नाशः इति भेदः "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते" संक्षेप० "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" वेदा०प० "स्मृतिभ्रंशात् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति" गीता।

**नाशन** त्रि० नाशयति नश–णिच् ल्यु। नाशके "त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः" गीता। ण्वुल् नाशकोऽप्यत्र "ये परस्वापहर्त्तारः परस्वानाञ्च नाशकाः" भा० अनु० २३अ०।

**नाष्टिक** त्रि०नष्टं द्रव्यं स्वामित्वेनार्हति वा० ठञ्। १नष्टद्रव्यार्हे तत्स्वामिनि। "अथ मूलनाहार्य्यं प्रकाशक्रयशोधितः। अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम्" इति मनुः "यदि स्वं नैव कुरुते स्वामिभिर्नाष्टिको धनम्। प्रसङ्गविनिवृत्त्यर्थं चोरवद्दण्डमर्हति" वी०मि० व्यासः। प्रसङ्गः चोरत्वसंशयः।

**नाष्ट्र** त्रि० नश+णिच्–ष्ट्रन्। नाशके स्त्रियां टाप् गौरादिगणे मातामहीशब्दस्यपहणात् षित्तां ङीष् अनित्य इति षित्त्वेऽपि स्त्रियां न ङीप्। "सूर्य्यो मा दिवाभ्यो नाष्ट्राभ्यः पातु" ताण्ड्य० ब्रा० १।४।२ "विश्वाभ्यो मा नाष्ट्राभ्यःपाहि" यजु० २०।१२

**नासत्य** पु० द्वि०व०। नास्ति असत्यं यस्य नभ्राडित्यादिना पा० नञः प्रकृतिभावः। अश्विनीकुमारयोः अमरः। "नासत्याभ्यां वयति वपुः" यजु० १९।८२ अश्विनीकुमारौ च द्वौ नासत्यदस्रनामानौ यथाह "देवौ तस्यामजायेतामश्विनौ भिषजां वरौ। नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति" हरिवं० ९अ०। तेनास्य प्रत्येकाभिप्रायत्वेएकवचनान्ततापि हरिवंशे तथाप्रयोगात्। निरुक्तकारस्तु ६।१३ "ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी टेभगं नासत्या पुरन्धिम्" इमामृचमधिकृत्य नासत्यशब्दस्य निरुक्तिभेदा नाह। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य २प्रणेताराविन्याग्रायणः, नासिकाप्रभवौ बभूवतुरिति वा"। तयोर्नासाभवत्वं च अरुणात्मजशब्दे ३५९पृ० दृश्यम्।

**नासमीजस्** पु० भजमानवंश्यस्य कम्बलवर्हिषः पुत्रभेदे "असमौजाः सुतस्तस्य नासमौजाश्च तावुभौ" हरिवं०३९अ० तत्पुत्रोक्तौ।

**नासा** स्त्री नास–शब्दे भावे अ। १शब्दे वा० करणे अ। २नासिकायां ३गन्धग्राहकेन्द्रियभेदे च। द्वारोपस्थित काष्ठे (आनकाठ) (कपालि) ख्याते ४पदार्थे अमरः ५वासकवृक्षे राजनि० तत्पुष्पस्य नासाकृतित्वात्तस्य तथात्वम्। नासायाः शुभाशुभलक्षणं गारुडे उक्तं यथा "शुकनासः सुखी स्याच्च शुकनासेऽतिजीवनम्। छिन्नाग्रह्रस्वनासः स्यादगम्यागमने रतः। दीर्घनासे च सौभाग्यं चौर आकुञ्चितेन्द्रियः। स्त्रीस्तत्युच्चिपिटनास

ऋजुर्भाग्यरतां भवेत् । अल्पच्छिद्रा सुपुटा च अवक्रा च दृपेश्वरे । क्रूरे दक्षिणवक्रा स्यादङ्गनिनां च सुतं समत्" इति गरुडपु० ।

**नासागतरोग** पु० सुश्रुतोक्ते नासागतव्याधिभेदे यथा "अथातो नासागतरोगविज्ञानीयमध्यायं व्याख्यास्यामः । अपीनसः१ पूतिनस्यं२ नासापाकस्तथैव च । तथा-शोणितपित्त४श्च पूयशोणित५मेव च । क्षवथुर्भ्रंशथु७-र्दीप्तो८ नासानाहः९ परिस्रवः१० । नासाशोषेण११ सहिता दशैकश्चेरिता गदाः । चत्वार्यर्शांसि चत्वारः शोफाः सप्तार्वुदानि च । प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः । एकत्रिंशन्मितास्ते तु नासा-रोगाः प्रकीर्त्तिताः । आनह्यते यस्य विधूप्यते च प्रपच्यते क्लिद्यति चापि नासा । न वेत्ति यो गन्ध-रसांश्च जन्तुर्जुष्टं व्यवस्येत्तमपीनसेन१ । तस्यानिलश्लेष्म-प्रभवं विकारं ब्रूयात्प्रतिश्यायसमानलिङ्गम् । दोषै-र्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु । निरेति पूतिर्मुखनासिकाभ्यान्तं पूतिनस्यं२ प्रवदन्ति रोगम् । घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन्विकारे बलवांश्च पाकः । तं नासिकापाक३मिति व्यवस्येद्विक्लेद-कोथावपि यत्र दृष्टौ । चतुर्विधं द्विप्रभवं द्विमार्गं वक्ष्यामि भूयः खलु रक्तपित्तम्४ । दोषैर्विदग्धैरथ वापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु । नासा स्रवेत् पूयमसृक्-विमिश्रं तं पूयरक्तं५ प्रवदन्ति रोगम् । घ्राणाश्रिते कर्मणि सम्प्रदुष्टे यस्यानिलो नासिकया निरेति । कफानुयातो बहुशः सशब्दस्तं रोगमाहुः क्षवथुं६ वि-पश्चितः । तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् क-टूनर्कनिरीक्षणाद्वा । सूत्रादिभिर्वा तरुणास्थिमर्मण्यु-द्घाटिते यः क्षवथुर्निरेति । प्रभ्रश्यते नासिकयैव यश्च सान्द्रो विदग्धो लवणः कफस्तु । प्राक्सञ्चितो मूर्ध्नि च पित्ततप्तं तं भ्रंशथुं७ व्याधिमुदाहरन्ति । घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवेह वायुः । नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्त८मुदाहरन्ति । कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात् । घ्राणं वृणोतीव तदा स रोगो नासाप्रतीनाह९ इति प्रदिष्टः । अजस्रमच्छं सलिलप्रकाशं यस्याविवर्णं स्रवतीह १० नासा । रात्रौ विशेषेण हि तं नासापरि-स्रावमिति व्यवस्येत् । घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च । समुच्छ्वसित्यूर्द्ध्वमधश्च कृच्छ्राद्यस्तस्य नासापरिशोष ११ उक्तः । दोषैस्त्रिभिस्तैः पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान् । शालाक्य-सिद्धान्तमवेक्ष्य वापि सर्वात्मकं सप्तममर्बुदं तु । रोगः प्रतिश्याय इह प्रदिष्टः स वक्ष्यते पञ्चविधः पुरस्तात् । शोफाश्च शोफविज्ञाने नासास्रोतोव्यवस्थिताः । निदाने-ऽर्शांसि निर्दिष्टान्येवं तानि विभावयेत्" । [विश्वा० ।

**नासाच्छिन्नी** स्त्री नासा च्छिन्ना यस्याः ङीप् । पुर्षिकाख्ये

**नासादारु** न० नासार्थं दारु । द्वारोर्द्ध्वस्थे काष्ठे (मन-काठ) (कपालि) अमरः ।

**नासालु** पु० नासायै नासिकाशब्दाय अलति पर्य्याप्नोति अल–उण् । कट्फलवृक्षे शब्दच० नासायां तत्फलचूर्णयोगे हि नासिकाशब्दो भवतीति तस्य तथात्वम् ।

**नासावंश** पु० नासा तन्मध्यभागोवंश इव उन्नतत्वात् । नासा-पृष्ठस्थमध्यभागे । [काण्डीरलतायां राजनि० ।

**नासासंवेदन** पु० नासा संविद्यतेऽनेन सम्+विद–ल्युट् ।

**नासिकन्धम** त्रि० नासिकां धमति नासिका+ध्मा–खश् मुम् हुस्वश्च । नासिकां शब्दायमानां कुर्वति नासिकया शब्दकारके ।

**नासिन्धय** त्रि० नासिकां तत्स्थजलं धयति नासिका+धे-खश् मुम् हुस्वश्च । नासिकास्थजलपायके नासिकया जलपायके ।

**नासिका** स्त्री नास–शब्दे ण्वुल् । १घ्राणेन्द्रिये २तदाधार-गोलके नासाशब्दार्थे । अस्य प्रसादौ भत्वे च नसा-देशः । नसः नसा नोभ्याम् नसमित्यादि । [हारा० ।

**नासिकामल** पु०६त० । नासास्थिते मले सिङ्घाणे (शिकनी)

**नासिक्य** त्रि०नासिका+चतुरर्थ्यां सङ्काशा०ण्य । १नासिका-समीपादौ । स्वार्थे ष्यञ् । २नासिकायाम् । भवार्थे शरी-रावयवत्वात् यत् । ३नासिकाभवे त्रि०४अश्विनीकुमारयोः पु० द्वि०व० हेमच० । ५दक्षिणदेशभेदे "कर्णाटमहाटवि-चित्रकूटनासिक्यकोल्लगिरिः" वृ०सं० १४अ० दक्षिणस्थदे-शोक्तौ । स्वार्थे क । नासिक्यक नासायां शब्दमा० ।

**नासीर** न० नासाय शब्दाय ईर्त्ते ईर–क । अग्रसरसैन्ये त्रिका० २अग्रेसरमात्रे त्रि० शब्दर० "नवस्य नासीर-गते वितेनतुः" नैष० ।

**नास्ति** अव्य० अस्तीति विभक्तिप्रतिरूपमव्ययं "सह सुपा" पा० नञर्थेन स० । अविद्यमानतायां सत्ताभावे यथा नास्तिक्षीरा "अस्ति नास्ति न जानाति" इति चाणक्यः

**नास्तिक** त्रि० नास्ति परलोकस्तत्साधनमदृष्टं तत्साक्षी

वा इति मतिरस्य ठन् । १परलोकाभाववादिनि २तत्साधनादृष्टाभाववादिनि ३तत्साक्षिण ईश्वरस्यासत्त्ववादिनि च चार्वाकादौ चार्वाकादिश्च चार्वाकः माध्यमिकः योगाचारः सौत्रान्तिकः वैभाषिकः दिगम्बरश्चेत षड्विधः । "अतिमात्रोज्झितभीरनास्तिकः" माघः ।

**नास्तिकता** स्त्री नास्तिकस्य भावः तल् । मिथ्यादृष्टौ परलोकाद्यभावज्ञानस्य मिथ्यात्वात् "प्रज्ञानाशात्मकोमोहस्तथा धर्मार्थनाशकः । तस्मान्नास्तिकता चैव दुराचारश्च जायते" भा०शा० १२३अ० ।

**नास्तिक्य** न० नास्तिकस्य भावः ष्यञ् । नास्तिकतायाम् "नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्" मनुः ।

**नास्तिद** पु० आम्रवृक्षे शब्दच० ।

**नास्तिवाद** पु० नास्ति परलोकादिरिति वादः । नास्तिकतायाम् "नास्तिवादार्थशास्त्रं हि धर्मविद्वेषणं परम्" हरिवं० २८अ० ।

**नास्य** न० नासायां भवम् शरीरावयवत्वात् यत् । १बलीवर्द्दनासाबन्धनरज्ज्वाम् "छिन्ननास्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते" मनुः । नासा+चतुरर्थ्यां यत् । २नासासन्निकृष्टादौ त्रि० "मनुष्यान् स्वपुषो दृष्ट्वा नास्यहासं चकार यः" हरिवं० २१७अ० नासासन्निकृष्टस्यहासमित्यर्थः ।

**नाह** पु० नह—बन्धने भावे घञ् । १बन्धने २कूटे च मेदि० ।

**नाहल** पु० म्लेच्छजातिभेदे हेमच० ।

**नाहुष(षि)** पु० नहुषस्यापत्यं वा० अण् अत इञ् वा । नहुषनृपापत्ये ययातौ । "ययातिर्नाहुषः सम्राडासीत् सत्यपराक्रमः" भा०आ० ७५अ० ।

**नि** अव्य० नी—बा० डि प्रादिः उपसर्गः । १संघे २अधोभावे न्यग्भावे ३भृशे ४आदेशे ५नित्ये ६कौशले ७बन्धने ८अन्तर्भावे ९समीपे १०दर्शने ११उपरमे १२आश्रये च गणरत्नमहोदधिः उदाहृतं च तत्रैव क्रमशस्तेष्वर्थेषु १निकरो मणीनां, २निपतितः । ३निगृहीतं ४निदेशितं, ५निविशते ६निपुणः ७निबन्धः ८निपीतमुदकम् । ९निकटः १०निदर्शनं ११निवृत्तः १२निलयः । १३संशये १४क्षेपे १५दाने १६मोक्षे १७विन्यासे च मेदि० । १८निषेधे १९निश्चये दुर्गादासः ।

**नि:(नि)क्षेप** पु० निर्—(नि)वा क्षिप—भावे घञ् । १अर्पणे (गच्छितराखा) अष्टादशविवादान्तर्गते २विवादभेदे । स च वीर०मि० विस्तरेण दर्शितो यथा

"अथ नि:(नि)क्षेपाख्यव्यवहारपदम् । तत्र नि:(नि)क्षेपो नाम स्वद्रव्यस्य विश्वासेन पुरुषान्तरे स्थापनम् । तथा च नारदः "स्वद्रव्यं यत्र विस्रम्भान्नि:(नि)क्षिपत्यविशङ्कितः । नि:(नि)क्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैरिति" मच न्यासोपनिध्योरतिव्याप्तिस्तयोर्लक्ष्यत्वान्नि:(नि)क्षेप एव । ग्राहकस्यासमक्षं समर्पितो न्यास इत्युच्यते । अतएव वृहस्पतिः "राजचौरादिकभयाद्दायादानां च वञ्चनात् । स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्त्तितः" इति । अयमेवाशङ्कितद्रव्यस्थापने उपनिधिरित्युच्यते । तथा च नारदः "असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते । तज्जानीयादुपनिधिं नि:(नि)क्षेपङ्गणितं विदुरिति" । असङ्ख्यातम् अनाख्यातम् अविज्ञातम् अदर्शितम् । अतएव वृहस्पतिः "असमक्षं व्यवहितमसङ्ख्यातमदर्शितम् । मुद्राङ्कितञ्च यद्द्रव्यं तदौपनिधिकं स्मृतमिति" व्यवहितं करण्डकादौ प्रक्षिप्य पिहितम् । अतएव याज्ञवल्क्यः "वासनस्थमविज्ञातं हस्तेऽन्यस्य यदर्प्यते । द्रव्यन्तदौपनिधिकं प्रतिदेयन्तथैव तदिति" वासनं द्रव्याधारकरण्डकादि तत्स्थं वासनस्थम् । हस्तग्रहणमुपलक्षणम् । अतएव नारदः "नि:(नि)क्षिप्यते परगृहे तदौपनिधिकं स्मृतमिति" । तथा चायमेतेषाम्भेदः । ग्राहकस्य समक्षं गणयित्वा स्थापितं नि:(नि)क्षेपः । गृहस्वामिनोऽसमक्षं गणितं वा तस्मिन्नागते एतद्दातव्यमित्युक्त्वाऽन्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यासः । मुद्राङ्कितमसङ्ख्यमगणितं स्थापितमुपनिधिरिति । नि:(नि)क्षेपादीनां स्थापनप्रकारमाह मनुः "कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि । महापक्षे धनिन्यार्य्ये नि:(नि)क्षेपं नि:(नि)क्षिपेद्बुधः" इति । महापक्षे बहुतरबन्धुयुक्ते । नि:(नि)क्षेपग्रहणमुपलक्षणम् । वृहस्पतिः "स्थानं गृहञ्च तद्वर्णं विधानञ्च गुणांस्तथा । सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिमिति" निधिरुपनिधिः । एतदप्युपलक्षणम् । नि:(नि)क्षेपादीनां रक्षणं कथं कर्तव्यं ग्राहकेणेत्याह वृहस्पतिः "सप्राक्षिकं रहोदत्तं द्विविधं समुदाहृतम् । पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षणे" इति । पालयितुः फलमपालयितुर्दोषञ्चाह "ददतो यद्भवेत् पुण्यं हेमकूप्याम्बरादिकम् । तत् स्यात्फलमतो न्यासो यथैव शरणागतः । भर्तृद्रोहं यथा नार्याः पुंसः पुत्रसुहृद्वधे । दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् । न्यास-

द्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः। गृहीतं पालयेद्यत्नात् सकृद्याचितमर्पयेदिति" न्यासग्रहणमुपलक्षणम्। तेन फलरक्षणादिकं निः(नि)क्षेपादिवयसाधारणमिति मन्तव्यम्। दैवराजोपघाते ग्राहकस्य न दोष इत्याह बृहस्पतिः "दैवराजोपघातेन यदि तन्नाशमाप्नुयात्। गृहीतद्रव्यसहितं न तद्दोषोऽत्र विद्यत" इति। गृहीतुरिति शेषः उपेक्षादिद्रव्यदोषाभावादिति भावः। गृहीतद्रव्यसहितमित्युपेक्षाभावनिश्चयायोक्तम्। तेन कथञ्चिन्निः(नि)क्षिप्तमात्रस्य विनाशे प्रमाणान्तरादुपेक्षाभावे निश्चिते गृहीतुर्दोषो न विद्यते इति मन्तव्यम्। दैवराजग्रहणमसमाधेयनिमित्तोपलक्षणार्थम्। अतएव कात्यायनः "राजदैविकचौरैर्वा निः(नि)क्षिप्तं यत्र नाशितम्। गृहीतुः सह भाण्डेन दातुर्नष्टन्तदुच्यते" इति। भाण्डेन स्वार्थेन। नारदोऽपि "गृहीतुः सह योऽर्थेन नष्ट एव स दायिनः। दैवराजकृते तद्वन्न चेत्तज्जिह्मकारितमिति" तद्वदितिपदेनैकमुपमेयमन्यदुपमानमित्यवगम्यते। तेनैवं योजना गृहीतुरर्थेन सह यो नष्टः स दायिन एव एवन्दैवराजकृते यो नष्टः सोऽपि दायिन एव नष्ट इति दैवग्रहणन्तस्करोपलक्षणम्। अतएव याज्ञवल्क्यः "न दाप्योपहृतन्तु राजदैविकतस्करैरिति" दैविकपदस्यार्थो विवृतो मनुना "चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा। न दद्याद्यदि तस्मात् स न संहरति किञ्चनेति"। यदि तस्मान्निः(नि)क्षेपादल्पमपि धनञ्च संहरति न गृह्णाति तर्हि न दद्यादित्यर्थः। तथा च स एव "समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेदिति" क्वचित् केनचिद्धेतुना नष्टमपि गृहीता मूल्यद्वारेण न दाप्य इत्याह कात्यायनः "ज्ञात्वा द्रव्यवियोगन्तु दाता यत्र विनिः(नि)क्षिपेत्। सर्वोपायविनाशेऽपि गृहीता नैव दाप्यते" इति। निः(नि)क्षेपगृहीतारं प्रत्याह कात्यायनः। "निः(नि)क्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत्। दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते" इति। यस्य पार्श्वे यत् स्थापितन्तत्तेनावहितेन रक्षणीयम्। यतो दैवराजकृतादन्यो विनाशस्तस्य ग्राहकस्य दोषेण कृतत्वेन कीर्त्यते इत्यर्थः। न केवलन्दुष्कीर्त्तिरेव तस्य किन्तु विनाशे जाते वस्तुगत्या दोषो वह्वर्थहानिश्चेत्याह स एव "यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा। तद्द्रव्यं सोदयन्दाप्यो दैवराजकृताद्विनेति"। दोषः उपेक्षादिलक्षणः। बृहस्पतिरपि "भेदेनोपेक्षया न्यासं गृहीता यदि नाशयेत्। याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयम्भवेदिति" कात्यायनोऽपि "न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्। अज्ञानानाशितञ्चैव येन दाप्यः स एव तदिति" अत्र विशेषमाहतुर्व्यासकात्यायनौ "भक्षिते सोदयन्दाप्यः समन्दाप्य उपेक्षिते। किञ्चिदूनं प्रदाप्यः स्याद्द्रव्यमज्ञानानाशितमिति" किञ्चिदूनञ्चतुर्थांशन्यूनमिति मिताक्षरायाम्। याचनानन्तरमदत्तस्य पश्चाद्दैवराजकृतेऽपि विनाशे तन्मूल्यमात्रं दातव्यमित्याह व्यासः "याचनानन्तरं नाशे दैवराजकृतेऽपि सः। गृहीता प्रतिदाप्यः स्यान्मूल्यमात्रञ्च संशयः" इति। प्रत्यर्पणविलम्बमात्रापराधे सवृद्धिकदानस्यान्याय्यत्वात्। राज्ञे च तत्समो दण्डो देय इत्याह नारदः "याच्यमानस्तु यो दातुर्निः(नि)क्षेपञ्च प्रयच्छति। दण्ड्यः स राज्ञो भवति नष्टे दाप्यश्च तत्सममिति" नष्टे दैवतो राजतो वेति शेषः। याज्ञवल्क्योऽपि "भ्रंशश्चेन्मार्गितेऽदत्ते दाप्यो दण्डञ्च तत्सममिति"। मार्गिते याचितेऽदत्ते सति यदि भ्रंशो दैवराजकृतो नाशो भवति तथापि तद्द्रव्यं मूल्यपरिकल्पनेन। "धनिने ग्राहको दाप्यो दण्डो राज्ञे च तत्समम्"। तत्समं दण्डमित्यर्थः। यः पुनः स्थापकाननुज्ञया निः(नि)क्षेपमुपभुङ्क्ते तस्य दण्डमाह नारदः "यश्चार्थं साधयेत्तेन निः(नि)क्षेप्तुरननुज्ञया। तत्रापि दण्ड्यः स भवेत्तच्च सोदयमावहेदिति" दण्डश्च साधितद्रव्यानुसारेण। याज्ञवल्क्योऽपि "आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयमिति" आजीवन् भोगवृद्ध्यर्थप्रयोगादिना उपजीवन् स्वेच्छया स्वाम्यननुज्ञया। वृद्धिप्रमाणमाह कात्यायनः। "निः(नि)क्षेपं वृद्धिशेषञ्च क्रयविक्रयमेव च। याच्यमानं न चेद्दद्याद्वर्द्धते पञ्चकं शतमिति"। निः(नि)क्षेपहर्त्तारमत्याह विष्णुः "निः(नि)क्षेपापहारी सवृद्धिसहितन्धनं धनिकस्य दाप्यः"। अस्य दण्डमाह मनुः "निः(नि)क्षेपस्यापहर्त्तारं तत्समन्दापयेद्दमम्। तथोपनिधिहर्त्तारमविशेषेण पार्थिवः" निः(नि)क्षेपापह्नवे कर्त्तव्यमाह व्यासः "निः(नि)क्षेपन्निह्नुते यस्तु नरो वञ्चनयान्वितः। साक्षिभिर्वाथ द्रव्येण विभाव्य प्रतिदाप्यते" दण्डमाह बृहस्पतिः "गृहीत्वापह्नुते यत्र साक्षिभिः शपथेन वा। विभाव्य दापयेद्राजा तत्समं विनयन्तथेति" विनयं दण्डम्। सप्रात्ययिकनिः(नि)क्षेपादौ स्थापकस्या-

न्यतवादित्वे साक्षिभ्यो यथास्थितमर्थमवगत्य दण्डनीयः स राज्ञेत्याह मनुः “निः(नि)क्षेपो यः कृतो येन यावांश्च कुलसन्निधौ । तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हतीति” कुलं साक्षिवृन्दम् । असाक्षिके त्वाह वृहस्पति “रहोदत्ते निधौ यत्र विसंवादः प्रजायते । विभावकन्तत्र दिव्यमुभयोरपि च स्मृतमिति” उभयोर्मध्ये एकस्येत्यर्थः उभयग्रहणं “इच्छया वान्यतरः कुर्य्यादित्ययमेव पक्षो यथा स्यादिति । ग्रहीतृस्थापकयोरन्यतवादित्वे दण्डमाह मनुः “निः(नि)क्षेपस्यापहर्त्तारमनिः(नि)क्षेप्तारमेव च । सर्व्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः । यो निः(नि)क्षेपं नार्पयति यश्चानिः(नि)क्षिप्य याचते । उभौ तौ चौरवच्छास्यौ दाप्यौ वा तत्समं दममिति” चौरवच्छास्यौ चौरवद्दण्ड्यौ चौरदण्डेन दण्ड्यावितियावत् । दण्डस्य प्रमाणमाह सममिति । मत्स्यपुराणे । यस्तु “यो निः(नि)क्षेपं नार्पयति यश्चानिः(नि)क्षिप्य याचते । तावुभौ चौरवच्छास्यौ दाप्यौ च द्विगुणं दममिति” द्विगुणो दण्ड उक्तः स दुर्वृत्तविषयो ब्राह्मणातिरिक्तविषयो वा अन्यथा समदण्डप्रतिपादकमनुवचनविरोधः स्यादिति । निः(नि)क्षिप्तं द्रव्यमकाले ददतो द्विगुणोदम इत्याह कात्यायनः “ग्राह्यस्तूपनिधिः काले कालहीनन्तु वर्जयेत् । कालहीने ददद्दण्डं द्विगुणञ्च प्रदापयेदिति” ग्राह्यः निः(नि)क्षेपकारिणेति शेषः यद्भयादुपनिधिरन्यस्य हस्ते न्यस्तस्तद्भयातीते काले न ग्राह्य इत्यर्थः । भयातीते काले स्वयमेव नायाचितमर्पणीयम् “सदा याचितमर्पयेदिति” वृहस्पतिस्मरणात् । तद्भये वर्त्तमाने स्वयमेवायाचितन्दीयमानं कालहीनन्तस्य दानन्दौष्ठ्येनैवेति तद्ददतोऽपि दण्डोयुक्तः । प्राड्विवाकं प्रत्याह मनुः “यो निः(नि)क्षिपं याच्यमानो निः(नि)क्षेप्तुर्न प्रयच्छति । स याच्यः प्राड्विवाकेन तन्निः(नि)क्षेप्तुरसन्निधौ । स यदि प्रतिपद्येत यथान्यस्तं यथाश्रितम् । न तत्र विद्यते किञ्चित् यत्परैरभियुज्यते” इति । यदा तु न प्रतिपद्येत तदा राजानं प्रत्याह स एव “तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि । इयं निगृह्य दाप्यः स्यादिति धर्म्मस्य धारणा । निःक्षिप्तस्य धनस्यैव प्रीत्योपनिहितस्य च । राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणमिति” तेषां अभियोक्तॄणाम् । इयं द्विगुणम् । निगृह्य दण्डयित्वा अक्षिण्वन् अताडयन् । निः(नि)क्षेप ग्रहीतारं प्रत्याह वृहस्पतिः “स्थापितं येन विधिना येन यच्च यथाविधि । तथैव तस्य तद्देयं न देयं प्रत्यनन्तरे” इति । स्थापितेतरस्य यस्य स्थापितद्रव्यस्वाम्यमस्ति स इह प्रत्यनन्तर उच्यत इति स्मृतिचन्द्रिकायां, प्रत्यनन्तरे पुत्रादाविति कल्पतरौ । स्थापकं प्रत्याह मनुः “यो यथा निः(नि)क्षिपेद्धस्ते यमर्थं यस्य मानवः । स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः । मिथोदायः कृतो येन ग्रहीतो मिथ एव वा । मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः । समुद्रे नाप्नुयात् किञ्चिद्यदि तस्मान्न संहरेदिति” दायो दानं स्थापनमिति यावत् । ग्रहोग्रहणं मिथः अन्योन्यमेव एतदुक्तम्भवति ससाक्षिकं स्थापितम् साक्षिसमक्षं ग्रहीतव्यम् । रहसि स्थापितं रहस्येवेति । समुद्रे मुद्रासहिते निःक्षेपेतु मूषकादिनोपहृते निः(नि)क्षेपं स्थापयित्वा न किञ्चिद्दुःखमाप्नुयात् । यदि तस्मान्निः(नि)क्षेपात् प्रतिमुद्राकरणादिना न संहरेत्किञ्चिदित्यर्थः । स्थापयितुर्मरणे प्रत्यनन्तरे तद्देयमित्याह स एव “स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे । न स राज्ञाऽभियोक्तव्यो न निःक्षेप्तुश्च बन्धुभिरिति” अनेन वचनेन वचोभङ्ग्या स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्य्यमित्युक्तम् । स्वयमेव याचनमन्तरेणेत्यर्थः । याचनमन्तरेण दानम्भयादिकालापाये मन्तव्यम् अन्यथा दोषापत्तेः । प्रत्यनन्तरबहुत्वे तु नैकस्मिन् प्रत्यनन्तरे देयं किन्तु सर्व्वप्रत्यनन्तरसन्निधाविति न निःक्षेप्तुर्बन्धुभिरभियोक्तव्य इत्यनेन सूचयाम्बभूव । यदा तु ग्राहकः स्वयमेव न ददाति तदा प्रत्यनन्तरकर्त्तव्यमाह स एव । “अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्व्वकम् । विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेदिति” अन्विच्छेत् अवधारयेत्परिसाधनं ग्राहकसकाशादादानन्तद्ग्राहकवृत्तिं विचार्य्य स तद्वृत्तग्राहकविषये साम्नैव कार्य्यं न भयादिप्रदर्शनेन । दुर्वृत्तग्राहकविषये तु ऋणादानप्रकरणोक्तेन भयादिप्रदर्शनाद्युपायान्तरेण छलादिना कार्य्यमित्यस्मादेव वचनादवगम्यते । तथा सद्वृत्ते विप्रतिपन्ने भूतानुसारेण साधयितुमशक्ये साक्ष्याद्यभावे प्रत्यनन्तरादिना साधयेत् । दुर्वृत्ते तु विप्रतिपन्ने छलादिना परिहरेदिति चाकादेव वचनादवगम्यते । सद्वृत्ते छलादिप्रयोगवच्छपथेन शोधनस्याप्यनुचितत्वात् । ग्राहके तु मृते पश्चाद्यदधीनं निःक्षेपादि जायते तेनैव स्थापके प्रत्यनन्तरे

षा प्रत्यर्पणीयमित्यतिस्थूलत्वात् स्मृतिकारैरुपेक्षितमित्यसाद्दशादानप्रकारवदुक्तञ्चेयं यदि याद्दकोऽसौ स्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणान्विच्छेत् सम्प्रतिपन्नं पूर्वोक्तेन प्रकारेण परिपन्थं साधयेदित्येतदपि स्मृतिकारैरुपेक्षितं ज्ञातं शक्यत्वादिति । "द्वयीषु निः(नि)क्षेप इवार्पितं द्वयम्" कुमा० ।

**निःप्रभ** त्रि० निर्गता प्रभा यस्य "प्रादिभ्यो धातुजस्य वाच्योत्तरपदलोपः" वार्त्ति० । गतशब्दलोपः वा विसर्गस्य सत्वम्, १प्रभाशून्ये पक्षे षत्वे निष्प्रभ इत्यपि तत्रार्थे

**निःशम** पु० निर्गतः शमात् "निरादयः क्रान्ताद्यर्थे पञ्चम्याः" वार्त्ति० निरा० ५त० । १क्रोधे त्रिका० पक्षे सत्वम् ।

**निःशलाक** त्रि० निर्गतः शलाकायाः निर्गता शलाका यस्मात् वा । १निर्जने रहसि अमरः । "अरण्ये निःशलाके वा मन्त्रयेदविभावितः" मनुः वा सत्वम् ।

**निःशल्या** स्त्री निर्गतं शल्यं यस्याः ५ब० । १दन्तीवृक्षे राजनि० तत्सेवने हि शीघ्रं शल्यं निर्गच्छति । २शल्यवत्पतिबन्धकरहिते त्रि० "निःशल्यमुत्सृज्जेयं जीवितम्" दशकुमा० पक्षे सत्वम् । [२अग्रशून्यमात्रे त्रि० । वा सत्वम्

**निःशूक** पु० निर्गतः शूकोऽस्मात् । १शूकशालौ राजनि०

**निःशेष** त्रि० निर्गतः शेषो यस्य । समस्ते सकले "निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरः" काव्यप्र० वा सत्वम् । निश्शेष तत्रार्थे [पक्षे सत्वम् ।

**निःशोध्य** त्रि० निर्गतं शोध्यमस्मात् । निर्मले धौते अमरः ।

**निःश्रयणी** स्त्री निश्चितं श्रीयतेऽनया श्रि–करणे ल्युट् ङीप् । काष्ठमयसोपाने शब्दरत्ना० वा सत्वम् । निःश्रि–इनि ङीप् । निःश्रयिणीत्यप्यत्र शब्दर० ।

**निःश्रेणि** स्त्री निश्चिता श्रेणिरिव । काष्ठसोपाने अमरः । वा सत्वम् । "चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम्" रघुः ।

**निःश्रेयस** न० नितराम् श्रेयः नि० अच् समा० । १मोक्षे २मङ्गले ३विज्ञाने ४भक्तौ ५अनुभावे च शब्दरत्ना० । "पण्डितो ह्यर्थकृच्छ्रेषु निःश्रेयसकरं वचः" भा०स० ३६८श्लो० "तपो विद्या च विप्रस्य निःश्रेयसकरं परम्" मनुः । नितरां श्रेयो यस्मात् अच् समा० । ६शङ्करे पु० मेदि० वा सत्वम् । निश्श्रेयस तत्रार्थे

**निःश्वास** पु० निर्+श्वस–भावे घञ् । प्राणवायोर्नासया बहिर्निःसरणे "इष्टकीफेनपीतस्य निःश्वासोपहतस्य च" मनुः । वा सत्वम् । निश्श्वास तत्रार्थे

**निःषम** अव्य० निर् सम+तिष्ठद्ग्वा०स० सुषामा० षत्वम् । निन्दायाम् अमरः ।

**निःषन्धि** त्रि० निष्क्रान्तः सन्धेः सुश्लिष्टत्वात् निरादि स० सुषामा० षत्वम् । १सन्धिशून्ये २दृढे त्रिका० वा षत्वम् ।

**निःषामन्** त्रि० निष्क्रान्तः साम्नः निरा० सुषामा० षत्वम् । सामरहिते वा षत्वम् ।

**निःसम्पात** पु० निर्गतः सम्पातो यत्र प्रादि० बहु० । गमनशून्ये १निशीथे त्रिका० वा सत्वम् । २गतिशून्ये च "आकाशमपि बाणौघैर्निःसम्पातं विधीयताम्" हरिवं० ८८अ० ।

**निःसंशय** त्रि० निर्गतः संशयोऽस्मात् प्रा० ब० । सन्देहशून्ये "क्षते निःसंशये पापे न भुञ्जीतानुपस्थितः" प्रा०त० । पक्षे सत्वम् । निःसन्देहोऽप्यत्र ।

**निःसङ्ग** त्रि० निर्गतः सङ्गो यस्मात् प्रा० बहु० । सङ्गरहिते सङ्गश्च स्नेहः फलाभिसन्धिश्च "निःसङ्गता मुक्तिपदं यतीनाम्" विष्णुपु० "वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे" मल०त० धृत भाग०११ स्कन्धवचनम् ।

**निःसरण** न० निर्+सृ–भावे ल्युट् । १निर्गमे करणे ल्युट् । २गृहादिमुखे ३मरणे ४निर्वाणे ५उपाये च हेमच० । "दुःखनिःसरणं वेद सर्वज्ञः स सुखी भवेत्" भा०शा० २१५अ० वा सत्वम् ।

**निःसार** पु० निर्गतः सारो यस्मात् । १शाखोटकवृक्षे (सेओडा) २श्योनाकभेदे राजनि० ३साररहिते त्रि० । "मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम्" शु०त० "जगत् सर्वन्तु निःसारमनित्यं दुःखभाजनम्" कालिकापु० २७अ० । ४कदल्यां स्त्री वा सत्वम् ।

**निःसारण** न० निर्+सृ–णिच् ल्युट् । १बहिष्करणे स्वार्थे णिच् करणे ल्युट् वा । २गृहादिमुखे ३निःसरणे च शब्दर० वा सत्वम् । [जटाधरः ।

**निःसारित** त्रि० निर्+सृ–णिच् कर्मणि क्त । बहिष्कृते

**निःसीम(न्)** निर्गता सीमा यस्मात् निरादि० बहु० । सीमारहिते अवधिशून्ये "निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः" नैष० "आरुह्य महतां निःसीमानमरितविभूतयः" भार० र०अत्र डापोऽभावपक्षे नान्तत्वात् स्त्रियां वा टाप् मनन्तत्वात् न ङीप् इति भेदः । वा सत्वम्

**निःस्नेह** त्रि० निर्गतः स्नेहो यस्य प्रादि० बहु० । स्नेहशून्ये स्नेहश्च तैलादिद्रव्यं प्रीतिश्च । "निःस्नेहं कीटभक्षितम्" स्मृतिः "ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः" भा०अनु० २३अ० । २अतस्यां स्त्री त्रिका० तस्य

निष्काशितत्वे इत्वात् तथात्वम्। वा विसर्गस्य सत्वम्।

**निःस्नेहफला** स्त्री निःस्नेहं फलं यस्याः। श्वेतकण्टकार्य्यां राजनि०। [त्वपि निःस्नेहोऽभवत्" रघुः।

**निःस्पृह** त्रि० निर्गता स्पृहाऽस्य। आशाशून्ये "लिदिवस्ले

**निःस्रव** पु० निर्+स्रु—अप्। व्ययशेषे "राजनि स्थापितो योऽर्थः प्रत्यहं तेन विक्रयः। क्रयो वा, निस्रवस्तस्मात् वणिजां लाभकृत् स्मृतः" याज्ञ० "निःस्रवः व्ययशेषः" मिता०।

**निःस्राव** पु० निःस्रवति निर्+स्रु—ण। (माड)(फेन) १भक्तरसे हेमच० भावे घञ्। २व्यये "वह्वादानोऽल्पनिःस्रावः ख्यातः पूजितदैवतः" कामन्द०।

**निःस्व** त्रि० निर्गतं स्वमस्य प्रा०ब०। १दरिद्रे "शूर्पाकारौ विरूक्षौ च वक्रौ पादौ शिरालकौ। संशुष्कौ पाण्डुरनखौ निःस्वस्य विरलाङ्गुली" गरुडपु०। २धनरहिते ३ज्ञातिरहिते च।

**निःस्वभाव** त्रि० निर्गतः स्वभावो यस्य प्रा०ब०। स्वभावशून्ये। बौद्धमते वस्तुमात्रस्य निःस्वभावत्वम् यथोक्तं लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" (ते पदार्थाः)

**निकक्ष** अव्य० कक्षस्य समीपम् सामीप्येऽव्ययी०। पश्चिमापरसन्धिसमीपे "चित्यं परिचिन्वत्यग्नीदृत्विग्ये निकक्षे" कात्या०श्रौ०१८।२।१ "पश्चिमापरसन्धिः कक्षस्तस्य समीपं निकक्षम्" वेददी०। अव्ययीभावे अदन्तात् सप्तम्या वा न लुक्।

**निकट** त्रि० निवद्धम् निवद्धार्थात् नेः "सम्प्रोदश्च" पा० चात् कटच्। आसन्ने सन्निकृष्टे। "अदूरे गम्यतां किञ्चिन्निकटं वरः" पञ्चत०।

**निकर** पु० नि+कॄ+भावादौ अप्। १समूहे अमरः। २सारे ३न्यायदत्तधने ४निधौ च मेदि० "निर्यन्निनीरनिकरेण कृताभिषेका" माघः।

**निकर्षण** न०निर्गतं कर्षणमस्मात् प्रा०ब०। १कर्षणरहिते भूभागे २गृहादिपरिच्छिन्नदेशे सन्निवेशे ३पुरग्रामादुवहिर्भागस्थविहारभूमौ कर्षणशून्यत्वात् तयोस्तथात्वम्।

**निकष(स)** पु० नि+कष(स)—अच् निकष(स)त्यनेन करणे घो वा। १कषणे २कषपाषाणे च (कष्टीपातर) अमरः। "निकषे हेमरेखेव श्रीरासीदनपायिनी" रघुः कर्मणि च। ३परीक्षार्थं कषणकर्महेमादौ त्रि० "यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम्। तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा" भा०शा० २०५ अ०। ४शाणे यस्माद्दितीक्ष्णताशाधनास्ते अमरः।

**निकषा** अव्य० नि+कष—वा० आ। १निकटे अमरः। "विलङ्घ्य लङ्कां निकषा हनिष्यति" माघः निकषायोगे शेषार्थे द्वितीया २मध्ये च मेदि०। ३राक्षसमातरि स्त्री

**निकषात्मज** पु० ६त०। राक्षसे अमरः।

**निकषोपल** पु० कर्म०। १शाणे (कष्टी) २प्रस्तरभेदे च।

**निकाम** न० नि+कम—घञ् अभिधानात् क्लीवता। १इष्टानतिक्रमे २पर्य्याप्तौ ३अतिशये च अमरः। "निकामतप्ता विविधेन वह्निना" कुमा० "नित्यं हरेः सन्निहिता निकामम्" माघः।

**निकामन्** त्रि० नि+कम वा० मनिन्। नितरां कामुके "सिषक्ति सृजमानानि कामभिः" ऋ०१०।६२।६। "निकामभिः नितरामभिलाषुकैः" भा०।

**निकाय** पु० नि+चि—घञ् कुत्वम्। १निवासे २सजातीयप्राणिसङ्घे ३लक्ष्ये ४परमात्मनि मेदि० "तथा देवनिकायानां सेन्द्राणां दिवौकसाम्" भा० आ० १२३अ०। "तस्य सर्वनिकायेषु निर्भरेषु गुहासु च" रामा०४।४४।२१

**निकाय्य** पु० नि+चि—ण्यत् कुत्वम्। गृहे अमरः। "न प्रवाय्यः जनः कश्चित् निकाय्यं तेऽधितिष्ठति" भट्टिः।

**निकार** पु० नि+कृ—कॄ—वा भावे घञ्। १मारणे २परिभवे अमरः "राज्ञां निकारे सहसा प्रवृत्तः" भा० आ० १८८अ०। "निकारोऽयं प्रयत्नेनमहता भोक्तुमिच्छ निधनम्" शान्ति०प० ३भर्त्सने च ४धान्यादेरुर्द्ध्वक्षेपणे अमरः। ४खलीकारे शब्दमा०।

**निकारण** न० नि+कॄ—णिच्—ल्युट्। १मारणे २वधे अमरः

**निकाल्य** त्रि० नि+कल—ण्यत्। चालनीये त्रिका०।

**निकाश** पु०नि+काश—घञ्। १प्रकाशे २समीपे च। तुल्यार्थे अस्य निभादित्वात् नित्यस० वा दीर्घश्च। "उवाच पूर्णेन्दुनिकाशवक्त्राम्" हरिवं १५४ अ० "आकर्णमुल्लसितमम्बु विकाशिकाशनीकाशमाप समतां सितचामरस्य" माघः। साहश्येऽस्य न पृथक्प्रयोगः।

**निकाष** पु० नि+कष—भावे घञ्। समुल्लिखने कषणे "तेजोभिः कनकनिकाषराजिगौरैः" किरा०।

**निकास** पु०नि+कास—घञ्। प्रकाशे नीकाशशब्दार्थे सादृश्ये भरतः निभादिवत् नास्य पृथक्प्रयोगः।

निकुच्यकर्णि अव्य० निकुच्यौ सङ्कुचौ कर्णौ यत्र द्वि-दण्ड्या० इच् समा० । सङ्कुच्यकर्णके

निकुञ्चक पु० नि+कुन्च–ण्वुल् । १कुडवपादे प्रस्थतपरि-माणे अमरः २वानीरभेदे जलवेतसे भावप्र० ।

निकुञ्ज पु०न० नितरां कौ जायते जन–ड पृषो० । लता-दिपिहितोदरे कुञ्जे "कपिकुलमुपयाति क्लान्तमद्रेर्नि-कुञ्जम्" ऋतुस० ।

निकुञ्जिकाम्ला स्त्री निकुञ्जस्थलत्तिस्थानत्तेनास्त्यस्या ठन् कर्म० । कुञ्जवल्ल्यां श्रीफलतुल्यगुणायां लतायाम् राजनि० ।

निकुम्भ पु० नि+कुभि–अच् । १दन्तीवृक्षे २कुम्भकर्णराक्षस-पुत्रभेदे च मेदि० । "स कुम्भश्च निकुम्भश्च कुम्भकर्णा-त्मजावुभौ" रामा० लङ्का० ७५।४६श्लो० । ३दानवभेदे "निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा" भा०आ० ७५ अ० । प्रह्लादस्य ४पुत्रभेदे "प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत! । विरोचनश्च कुम्भश्च निकु-म्भश्चेति भारत!" भा०आ० ६५अ० । ५हर्यश्वनृप-पुत्रे "हर्यश्वस्य निकुम्भोऽभूत् क्षात्रधर्मरतः सदा" हरिवं० १२अ० । ६विश्वदेवभेदे "विश्वदेवाश्च विश्वायां धर्माज्जाता इति श्रुतिः" इत्युपक्रमे "विश्वावसु-सुपर्णौ निकुम्भश्च महायशाः" हरिवं० २०४ अ० । तत्र निकुम्भ इत्यत्र विषकुम्भ इति पाठान्तरम् । ७कुरुसे-नाधिपान्तर्गते नृपभेदे "दुःशासनो निकुम्भश्च कुण्डभेदी पराक्रमी" भा०द्रो०१५६अ० । ८कुमारानुचरभेदे "शङ्कु-कर्णौ निकुम्भश्च पद्मः कुमुद एव च" भा०श०४६अ० तत्-सेनाध्यक्षोक्तौ । ६राक्षसेशे शिवानुचरभेदे "पार्श्वे तिष्ठन्तमाहूय निकुम्भमिदमब्रवीत् । राक्षसेश! पुरीं गत्वा शून्यां वाराणसीं कुरु" हरिवं० २६अ० "अवेहि मां किङ्करमष्टमूर्त्तेः कुम्भोदरं नाम निकुम्भमित्रम्" रघुः १०दन्तीवृक्षे स्त्री गौरा० ङीष् वा राजनि० ।

निकुम्भाख्यवीज न० निकुम्भं दन्तिकाद्वक्षबीजमाख्याति स्ववीजेन आ+ख्या–क । जयपाले राजनि० ।

निकुम्भित न० नि+कुभि–क्त । नृत्यकरणभेदे "करणानान्तु सर्वेषां सामान्यं लक्षणन्त्विदम् । प्रायो वामकरो वक्षः-स्थितोऽन्यः पुरतोऽन्नतः । पादाभ्यां करणं ज्ञेयं यत्र-मष्टोत्तरं मतम्" इत्युपक्रमे "निकुम्भितं पार्श्वक्रान्त-मतिक्रान्तं विवर्त्तनम्" सङ्गीतदा० ।

निकुम्भिला स्त्री लङ्कायाः पश्चिमभागस्थायां १गुहायां २तत्स्थदेव्याञ्च "मातुषं मांसमास्थाद्य प्रत्यान्तो नि-कुम्भिलाम्" रामा०सु०२४।४५ "निकुम्भिला नाम लङ्कायाः पश्चिमभागवर्त्तिनी भद्रकाली तां तत्समीपं गत्वा प्रत्य-त्याम:" इति तट्टीका । "तेन वीरेण तपसा वरदानात् स्वयम्भुवः । अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुर-ङ्गमाः । स एष किल सैन्येन प्राप्तः किल निकुम्भिलाम् । यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः। निकुम्भि-लामसंप्राप्तमकृताग्निं च यो रिपुः" रामा०लङ्का०८५।११श्लो०

निकुरम्ब न०नि+कुर–शब्दे बा० अम्बच् । समूहे अमरः । "अनिलतरलकिसलयनिकरेण करेण लतानिकुरम्बम्" गीतगोविन्दम् ।

निकुलीनिका स्त्री निपाते "गतागतं प्रतिगतं चक्रुश्च निकुलीनिकाः" भा०क० ४८अ०। "निकुलीनिकाः नि-पाताः" नीलकण्ठः ।

निकूल पु० नरमेधाङ्गे षष्ठ्यूपे पशुभेदालम्भोद्देश्ये देव-भेदे "ऊतकूलनिकूलाभ्यन्त्विषिनम्" यजु० ३०।१४।

निकृत त्रि०नि+कृ–क्त । १पराभूते २दूरीकृते ३शठे अमरः । ४पतिते ५नीचे च मेदि० ।

निकृति स्त्री नि+कृ–भावे क्तिन् । १भर्त्सने २क्षेपे ३शाठ्ये मेदि० ४दैन्ये शब्दरत्ना० "निकृतिपरेषु परेषु भूरिधाम्नः" किरा० "निकृत्या कामये नाहं सुखान्युत धनानि वा" भा०स० २०४ श्लो० । ५पृथिव्यां निघण्टुः । साध्यायां धर्मस्य पुत्रे ६वसुभेदे "सप्तमश्च ततो वायुरष्टमं निकृतिं वसुम् । धर्मस्यापत्यमित्येवं साध्यायां वै व्यजायत" हरिवं० २०४अ० । [अमरः ।

निकृष्ट त्रि० नि+कृष–क्त । अधमे जात्याचारादिनिन्दिते

निकेचाय पु० नि+चि–यङ् लुक्–घञ् "आदेश कः" इति सूत्रे च कः इति वक्तव्ये आदेरित्युक्तियङ्लुका देरेव सि०कौ०उक्तेः आदेः चस्य कः । गोमयादीनां पुनःपुनः राशीकरणे

निकेत पु० नि+कित–निवासे आधारे घञ् । १गृहे निकेतने भरतः । "निकेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः" भा०व० ८६अ० ।

निकेतन न० नि+कित–निवासे आधारे ल्युट् । १गृहे अमरः "शरण्येष्वनियमश्चैव वृक्षमूलनिकेतनः" मनुः । कर्मणि ल्युट् । २पलाण्डौ पु० शब्दच० ।

निकोचक पु० नि+कुच–शब्दे वुन् । अङ्कोटे अमरः अच् निकोच-तत्रार्थे "निचुलपिचु निकोचघोरमायप्रभृतीनि

पित्तरोगहराग्याहः स्निग्धोष्णानि गुरूणि च" सुश्रुतः।

**निकोठक** पु० नि+कुठि—वुन् पृषो० नलोपः। अङ्कोठवृक्षे भरतः।

**निक्रमण** न० नितरां क्रमते यत्र नि+क्रम-आधारे ल्युट्। स्थाने "निक्रमणं निषदनं निवर्त्तनं यच्च पड्वीशमर्वतः" ऋ० १६२।१४ "निक्रमणं स्थानम्" भा०।

**निक्वण** पु० नि+क्वण—शब्दे "क्वणो वीणायाम्" पा० पक्षे अप्। वीणायाः शब्दे अमरः।

**निक्वाण** पु० क्वण—शब्दे पक्षे घञ्। वीणादेः शब्दे अमरः

**निचा** स्त्री निच—अच्। निच्यायां (निकी) ख्याते क्षुद्रयूके उणादिकोषः।

**निक्षुभा** स्त्री नि+क्षुभ—क। १सूर्यपत्न्यां २ब्राह्मण्याञ्च हेमा० व्र०ख० भविष्यपु० "निक्षुभार्कव्रतं भानोः सदा प्रीतिविवर्द्धनम्" इत्युपक्रमे "निक्षुभा सूर्यपत्नी तया सहितोऽर्कः निक्षुभार्कः" तत्र व्याख्या, "निक्षुभा ब्राह्मणी ज्ञेया वाचकोऽर्कः प्रकीर्त्तितः" तत्रैव भविष्यपु०।

**निक्षिप्त** त्रि०नि+क्षिप—क्त।१त्यक्ते जटा०२कृतनिःक्षेपद्रव्ये च

**निक्षेप** पु० नि+क्षिप—घञ्। १निःक्षेपशब्दार्थे निःक्षेपशब्दे दृश्यम्। २शिल्पिहस्ते संस्कारार्थं द्रव्यादेरर्पणे च

**निखर्व** पु०१अयुतकोटिसंख्यायां २तत्संख्येये च "अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्" लीला० नितरां खर्वः ३वामने त्रि० हेमच०।

**निखर्वट** पु० रावणसैन्यगतराक्षसभेदे "विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः" भा०व० २८४अ०।

**निखात** त्रि० नि+खन—क्त। खनित्वाऽऽरोपिते "अष्टादशद्वीपनिखातयूपः" रघुः।

**निखिल** त्रि० निवृत्तं खिलं शेषो यस्मात्। सकले समग्रे अमरः। "सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा" मनुः।

**निगड** पु०न०। नि+गल—अच् लस्य डः। १शृङ्खलायाम् (बेडी)। निवृत्तो गडः सेचनमस्मात् कठिनत्वात्।२लोहमये हस्तिपादबन्धने अन्दुके अमरः। "संसारे संनिबद्धानां निगडच्छेदकर्त्तरि" ब्रह्मवै०पु० "वज्रापराणि परितो निगडान्यलावीत्" माघः। ३बद्धे त्रि० "बद्धस्य निगडस्य च" मनुः "निगडः निगडितः" कुल्लू०। लस्य नडः। निगलः तत्रार्थे हेमच०।

**निगडित** त्रि०निगडो जातोऽस्य तार० इतच्। १बद्धे संयते

**निगण** पु० निगरण+पृषो०। १होमधूमे त्रिका०।

**निगद** पु० नि+गद—अच्।१भाषणे २शब्दमात्रे च अमरः। "यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते" ऋ० भाष्यधृतमन्त्रः। "निगदस्तु जनैर्वेद्यः" आगमोक्ते ३जपे च। कर्मणि घञ्। उच्चैर्जप्ये ४मन्त्रे च "य एवात्र मन्त्रो यो निगदः" शत०ब्रा० ११।२।१६।

**निगम** पु० निगम्यतेऽत्र अनेन वा नि+गम—घञ्। १पुरभेदे तत्र भवः अण् न वृद्धिः। २वाणिजे ३कटभेदे ४वणिक्पथे हट्टे मेदि०। ५निश्चये ६अध्वनि पर्य्यायकथनेन वेदार्थबोधके ७ग्रन्थभेदे हेमच० न्यायमतसिद्धे पञ्चावयवन्यायमध्ये चरमावयवे निगमनशब्दे दृश्यम्। ८न्यायशास्त्रे ९तन्त्रभेदे १०वेदे च। "निगमकल्पतरोर्गलितं फलम्" भाग०१।१।३

"आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा" ऋ०व्यतिक्रमणिकायाम् "निगमशब्दो वेदवाची यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात् तस्मिन् निगम एव प्रायेण वर्त्तमानानां शब्दानां चतुर्थोध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम्" ऋग्वेदभाष्ये माधवः।

**निगमन** न० निगम्यतेऽनेन करणे ल्युट्। १न्यायस्य चरमावयवे। निगमनलक्षणं गौ०सू० उक्तं यथा

"हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम्" गौ०सू० "साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः इति निगमनम् निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम् निगम्यन्ते समर्थ्यन्ते सम्बोध्यन्ते तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम् अनित्यः शब्दः इति प्रतिज्ञा, उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादिद्रव्यमनित्यमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् वैधर्म्योक्तेऽपि अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम् न च तथाऽनुत्पत्तिधर्मकः शब्दः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति" भाष्यम्।

तत्सूत्रं वृत्तौ तु अन्यथा व्याख्यातम्।

"हेतोर्व्याप्तिविशिष्टपक्षधर्मस्य व्यपदेशः कथनं प्रतिज्ञायाः प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य वचनं निगमनं तथा च व्याप्तिविशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्यपक्षधर्महेतुज्ञाप्यसाध्यविशिष्ट-

पक्षबोधकत्वाद्यबोधको वान्यायावयवो निगमनम् इति” अनु०चिन्ता० तल्लक्षणं यथा “उपनयानन्तरं निगमनं तच्चानुमितिहेतुलिङ्गपरामर्शप्रयोजकशब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्यधीजनकं वाक्यम्” ।

प्रतिकूलप्रमाणाभावसूचके २प्रतिज्ञोपसंहारवचने तस्मात् तथेति वचने यथा “असकृदनुचिन्तितानामव्याहततरनिजोपदेशानाम् । प्रामाण्यपरमसीम्नां निगमनमिदमेव निखिलनिगमानाम्” वेदान्तप्र० ।

**निगरण** न० नि+गॄ–ल्युट् । गरणस्य ग्रसनस्य प्रतिरूप व्यापारे १भक्षणे मेदि० । निगीर्य्यतेऽनेन करणे ल्युट् । २गले पु०मेदि० । ३होमधूमे शब्दरत्ना० । रस्य लः । निगलनमप्यत्र ।

**निगा(ग)ल** पु० नि+गॄ–घञ् अप् वा रस्य लः । १भक्षणे करणे घञ् । २अश्वगलदेशे अमरः “घण्टागलसमीपस्थो निगालः कीर्त्तितो बुधैः” अश्वशास्त्रम् । [शब्दार्थचि० ।

**निगालवत्** पु० निगाल+अस्त्यर्थे मतुप् मस्य वः । अश्वे

**निगीर्ण** त्रि० नि+गॄ–क्त । १भक्षिते २अन्तर्भाविते च “विषयिणारोप्यमाणेऽन्तःकृते–निगीर्णे अन्यस्मिन्नारोपविषये” काव्यप्र० ।

**निगु** पु० निगृह्यते ज्ञायते पदार्थोऽनेन नि+ग्रह वा० डु रलोपश्च । १मनसि त्रिका० । २मले ३मूले ४चित्रकर्मणि च संक्षिप्तसारोणादिवृत्तिः ।

**निगुत्** त्रि० नि+गु–शब्दे क्विप् तुक् । भयादिना अव्यक्तशब्दकारके “प्रत्यञ्चोयन्तु निगुतः” ऋ०१०।१२८।६

**निगूढ** त्रि० नि+गुह–क्त । १गुप्ते २अवगुण्ठे पु० हेमच० “सुराजेव निगूढमन्त्रसाधनकथितविग्रहः” काद० ।

**निग्रन्थन** न० नि+ग्रन्थ–भावे ल्युट् । मारणे हेमच० ।

**निग्रह** पु० नि+ग्रह–अप् । १भर्त्सने २सीमायाम् ३बन्धने ४अनुग्रहाभावे ५चिकित्सायां निषिद्धे प्रवृत्तस्य ६तिरस्कारे ७मारणे प्रवृत्तिवारणाय ८रोधे च निरोधरूप योगेन अभ्यासवैराग्यां ९मनसोनिरोधे “निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते” । “तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्” गीता । १०परमेश्वरे पु० “प्रग्रहो निग्रहो व्यग्रः” विष्णुसं० । “सर्वं प्रलये निगृह्णातीति निग्रहः” भा० ।

**निग्रहस्थान** न० गौतमोक्ते वादिनोनिग्रहास्पदे वाक्यभेदे तल्लक्षणं यथा “विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्” गौ० सू० “क्रमप्राप्तं निग्रहस्थानम् लक्षयति । निग्रहस्य खलीकारस्य स्थानं तत्र विप्रतिपत्तिरप्रतिपत्तिश्च विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिरप्रतिपत्तिः प्रकृताज्ञानं यद्यपि तदन्यतरत् परनिष्ठं नोद्भावयितुमर्हं प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथापि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति” वृत्तिः । निग्रहस्थानानि द्वाविंशतिः यथा “प्रतिज्ञाहानिः१ प्रतिज्ञान्तरम्२ प्रतिज्ञाविरोधः३ प्रतिज्ञासन्न्यासो४ हेत्वन्तरम्५ अर्थान्तरं६ निरर्थक७मविज्ञातार्थ८मपार्थक९मप्राप्तकालं१० न्यूनं११मधिकं१२ पुनरुक्तं१३मननुभाषणं१४मज्ञानम्१५ऽप्रतिभा१६विक्षेपो१७ मतानुज्ञा१८पर्य्यनुयोज्योपेक्षणं१९ निरनुयोज्यानुयोगो२०ऽपसिद्धान्तो२१ हेत्वाभासाश्च२२ गौ०सू०उक्तानि । [गाधे ।

**निग्राह** पु० नि+ग्रह–घञ् । अनिष्टं ते भूयादित्येवं रूपे

**निघ** पु० निर्विशेषेण हन्यते हन–क नि० । समविस्तारदैर्घ्ये तुल्यारोहपरिणाहे पदार्थे अमरः । निघा निघतरुच्छदैः” भट्टिः “निघो निमितम्” पा० निमितमिह समारोहपरिणाहाभ्यां मितं निमितमित्युच्यते” जयम० ।

**निघण्टिका** स्त्री कन्दभेदे राजनि० ।

**निघण्टु** पु० नि+घटि–उ । पर्य्यायनाम्नामेकत्रार्थकथनाय संग्रहे कोषाभिधानादौ तत्र ऋग्वेदभाष्योपक्रमे उक्तं यथा “आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा” अस्यार्थः एकार्थवाचिनां पर्यायशब्दानां सङ्घो यत्र प्रायेणोपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेष्वमरसिंहवैजयन्तीहलायुधादिषु इव निघण्टव इति व्यवहारात् । एवमत्रापि पर्यायशब्दसङ्घोपदेशादाद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन् काण्डे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि, द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि, तृतीये तदुभयद्रव्यगततनुबहुत्वह्रस्वत्वादिधर्मविषयाणि” ।

**निघर्ष** पु० नि+घृष–भावे घञ् । घर्षणे (घषा) “तरुशाखान्निघर्षजोऽनलः” किरा० ल्युट् । निघर्षणमप्यत्र न० । यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः” भा०या० १२२ ५७श्लो० ।

**निघस** पु० नि+अद+अप् घसादेशः । भोजने अमरः ।

ष्वष्ट वर्जयेत्" । "निमन्त्रयेत पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः । तैश्चापि संयतैर्भाव्यम् मनोवाक्कायकर्मभिः" याज्ञ० "पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते । निमन्त्रयेत त्र्यवरान् सम्यक् विप्रान् यथोदितान्" मनुः। "पूर्वेद्युर्निवेदनम् वेदनं परेद्युर्द्वितीयं, तृतीयमामन्त्रणम्" आपस्तम्बः "निवेदनं श्वोमया श्राद्धं कर्त्तव्यं तत्र भवन्तो निमन्त्रणीया इत्येवंरूपं निवेदनम् । द्वितीयं वेदनं त्वामहं निमन्त्रये इत्यनेन निमन्त्रणम् । त्वयि श्राद्धमहं करिष्ये" इति तृतीयमनुज्ञाग्रहणरूपम्" श्रा०त० रघु०

**निमय** पु० नि+मि—अच् । परिवर्त्तने द्रव्यान्तरदानेन द्रव्यान्तरग्रहणरूपे विनिमये तत्र अविक्रेयद्रव्याणां विनिमयेनैव ग्रहणं कर्त्तव्यं यथा भा०शा० ७८अ० "रसा-रसैर्न्निमातव्या नत्वेव लवणं रसैः । कृतान्नञ्चाकृतान्नेन तिलाधान्येन तत्समाः" । अविक्रेयाणि अपण्यशब्दे २२४पृ० दर्शितानि ।

**निमान** न०निमीयतेऽनेन नि+मा—ल्युट् । मूल्ये "संख्यायागुणस्य निमाने मयट्" पा० "निमानं मूल्यम्" सि०कौ० ।

**निमि** पु०अत्रिवंश्ये १दत्तात्रेयपुत्रे "स्वायम्भुवोऽत्रिः कौरव्य ! परमर्षिः प्रतापवान् । तस्य वंशे महाराज ! दत्तात्रेय इति स्मृतः । दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः" भा०अनु० ९१अ० । २कौरववंश्ये भाविनृपभेदे "दण्डपाणिर्निमिस्तस्य क्षेमको भविता ततः । क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ" भाग० ९।२२।९। द्वापरयुगीये असुरांशनृपभेदे "अश्वप्रपातने चैव निमिर्हंसश्च दानवौ" हरिवं० १६१अ० । ४इक्ष्वाकुवंश्ये नृपभेदे "आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् । पुत्रो द्वादशमो वीर्ये धर्मे च परिनिष्ठितः" रामा०उ०५५ स० तस्य वसिष्ठशापेन विदेहप्राप्तिकथा "यस्मात्त्वमन्यं वृतवान् मामवज्ञाय पार्थिव ! । चेतनेन विनाभूतो देहस्ते पार्थिवैष्यति"। तदनन्तरं तस्य सर्वभूतानां नेत्रेषु निमेषरूपतया स्थितिकथा "सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तदाऽब्रुवन् । वरं वरय राजर्षे ! क्व ते चेतो निरूप्यताम् । एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाऽब्रवीत् । नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ! । वाढमित्येव विबुधा निमेश्चेतस्तदाऽब्रुवन् । नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि । त्वत्कृते निमिषिष्यन्ति चक्षूंषि पृथिवीपते ! । वायुभूतेन चरता विश्रमार्थं मुहुर्मुहुः"

**निमित** त्रि० नि+मि—क्त । समदीर्घविस्तारपरिमाणयुक्ते निषशब्दे दृश्यम् ।

**निमित्त** न० नि+मिद्—क्त । "अनात्मनेपदनिमित्ते" पा सूत्रनिर्देशान्न न दस्य नः । १हेतौ २चिह्ने च अमरः "निमित्तेषु च सर्वेषु ह्यप्रमत्तो च भवेन्नरः" स्मृतिः "मयैव पूर्वं निहता धार्त्तराष्ट्राः निमित्तमात्रं भव सव्यसाचिन् !" गीता "अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह" ति० त० भविष्यपु० "मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग् भवेत्"ति०त० भविष्यपु०। ब्रह्माण्डे "निमित्तानि च शंसन्ति शुभाशुभफलोदयम्" "निमित्तं मनश्चक्षुरादिप्रवृत्तौ" हस्तामलकम् । शुभाशुभसूचके ३शकुने "निमित्तानि च पश्यामि विपरीतानि केशव !" गीता ४फले उद्देश्ये "निमित्तात् कर्मयोगे" वार्त्ति० निमित्तमिह फलम् । ५निमित्तनिश्चये नैमित्तिकं निमित्तनिश्चयादागतम् । ६शरव्ये च शब्दार्थचि० स्वार्थे क तत्रार्थे संज्ञायां कन् । निमित्तक चुम्बने शब्दमाला ।

**निमित्तकारण** न० कर्म०। नैयायिकमते समवायिकारणाऽसमवायिकारणभिन्नकारणे तथाहि घटादौ मृत्तिकादि समवायि कारणम् कपालद्वयसंयोगोऽसमयवायिकारणम् । कुलालचक्रदण्डसलिलसूत्रादि निमित्तकारणम् । अदृष्टादि कालादि च । एवमन्यत्र यथायथमुन्नेयम् ।

**निमित्तकृत्** त्रि० निमित्तं शकुनं रुतेन करोति कृ—क्विप् तुक् । रवेण दुष्टादुष्टशकुनकारके काके राजनि० । तस्य रवेण शकुनसूचकत्वात् तथात्वम् । काकरुतशब्दे १८४४ पृ० दृश्यम् ।

**निमित्तवध** पु० निमित्तेन रोधादिहेतुना वधः । रोधादिनिमित्ते १गवादेर्वधे तत्र प्रायश्चित्तादि प्रा०त०उक्तं यथा "रोधादिनिमित्तकप्रायश्चित्तम् । तत्राङ्गिराः "रोधने बन्धने चापि योजने च गवां रुजः । उत्पाद्य मरणं वापि निमित्ती तत्र लिप्यते । पादञ्चरेद्रोधवधे द्वौ पादौ बन्धने चरेत् । योजने पादहीनं स्याच्चरेत् सर्वं निपातने" । निमित्ती लिप्यत इति यथाकथञ्चित् मरणनिमित्ततारतम्येन "यो भूय आरभते तस्मिन् फलविशेषः" इत्यापस्तम्बवचनात् पापविशेषेण लिप्यते तद्विशेषात् प्रायश्चित्तविशेषमाह पादञ्चरेदित्यादि । रोधः क्षीणायाः गोराहारप्रचारनिर्गमविरोधः । बन्धनमयथाबन्धनमकालबन्धनञ्च । योजनं हलशकटादौ

योजनं तत्रातिवाहादिनेति शेषः। अत्रैव विषये व्यवनः "प्राजापत्यद्वयं गोहत्याप्रायश्चित्तं रोधनबन्धनयोक्त्रवधे पादहीना नखानि लोमानि शिखावर्जं सशिखं वपनं त्रिषवणं गवानुगमनं सहशयनं सुमहत्तृणानि दद्यात्तु चारयेत् व्रतान्ते ब्राह्मणभोजनमिति"। रोधनबन्धनयोक्त्रवध इत्यादेरयमर्थः रोधनिमित्तकवधे प्राजापत्यस्य पादः प्रायश्चित्तं नखच्छेदनमात्रम्। बन्धननिमित्तवधे प्राजापत्यस्य द्वौ पादौ नखानां लोम्नाञ्च छेदनम्। योक्त्रनिमित्ते च वधे प्राजापत्यपादत्रयं नखलोमशिखावर्जकेशच्छेदनञ्च। दण्डादिप्रहारवधे सम्पूर्णं प्राजापत्यम् नखलोमकेशशिखाच्छेदनञ्च इति। एतद्विषय एव मिताक्षरोक्तं संवर्त्तवचनं तदेकवाक्यत्वात् तद्यथा "पादेऽङ्गलोमवपनं द्विपादे श्मश्रुणोऽपि च। त्रिपादे च शिखावर्जं सशिखन्तु निपातने"। अत्र प्राजापत्यस्य पादादित्वे किं मानमिति चेत्। पराशरवचनम् "रोधने तु चरेत् पादं बन्धने चार्द्धमेव हि। योजने पादहीनं स्यात् प्राजापत्यं निपातने"। "लक्ष्मलस्थानताड़ने"इति वार्हस्पत्यात्। दण्डोऽत्र हस्तप्रमाणो ग्राह्यः। तदधिके तु द्विगुणप्रायश्चित्तविधानात्। यथा अङ्गिराः "अङ्गुष्ठमात्रः स्थौल्येन बाहुमात्रः प्रमाणतः। सार्द्रश्च सपलाशश्च दण्ड इत्यभिधीयते"। "अस्मादूर्द्ध्वं प्रहारेण यदि गां विनिपातयेत्। द्विगुणन्तु भवेत्तत्र प्रायश्चित्तमिति स्थितिः"। सपलाशः सपत्रः। एतद्वचनविषय एव व्यवनोक्तप्राजापत्यद्वयमिति एतच्चाज्ञानतः यथा वृहस्पतिः "पादञ्चरेत् रोधवधे लक्ष्मार्द्धं बन्धघातने। अतिवाहे च पादोनं लक्ष्मलस्थानताड़ने"। अज्ञानञ्च चौणायामच्चौपलब्धमः। चैष्यज्ञाने तु प्रायिकमरणं ज्ञात्वा प्रवृत्तस्य चान्द्रायणपादादिकम्। यथा हारीतः "नासाच्छेदनदाहेषु कर्णच्छेदनबन्धने। अतिदोहातिवाहाभ्यां लक्ष्मं चान्द्रायणं चरेत्" हत्वेति शेषः। लक्ष्मं व्रतं तेन चान्द्रायणव्रतमित्यर्थः। इति शूलपाणिमहामहोपाध्यायाः। भवदेवभट्टैस्तु निपातने कूपावटादिषु इति व्याख्यातं तदपि युक्तं अन्यथा तत्र पातजनकभयादिदर्शकस्य प्रायश्चित्तस्यानध्यवसायापत्तेः। "शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्। रोधादिना त्वाङ्गिरसमापस्तम्बोक्तमेव चेति" वृहस्पत्युक्तं तत्र प्रथमादिपदानुपस्थितोद्वन्धगुड़विधान्यादीनां प्रायिकमृत्युफलानां ग्रहणम्। रोधादिनेति यथा कथञ्चिन्निमित्तमात्रस्य, बन्धादेरिति शूलपाणिव्याख्यान्तराञ्च। तस्मान्निपातनपरम् उभयपरम्। एतच्च रात्रौ रक्षणार्थं रोधबन्धनव्यतिरिक्तविषयम्। "सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः" इति अङ्गिरोवचनात् बन्धने मिताक्षरायां विशेषमाह व्यासः "न नारिकेलैर्नच शाणतालैर्नचापि मौञ्जैर्नच बन्धशृङ्खलैः। एतैस्तु गावो न हि बन्धनीया बद्धा तु तिष्ठेत् परशुं गृहीत्वा। कुशैः काशैश्च बध्नीयात् स्थाने दोषविवर्जिते"। निमित्तिनृशब्दे वक्ष्यमाणे मन्यूत्पादनद्वारा २हनने च।

**निमित्तविद्** त्रि॰ निमित्तं शकुनं शुभाशुभसूचकं लक्षणं वेत्ति विद्–क्विप्। निमित्तज्ञे दैवज्ञे हेमच॰ निमित्तज्ञादयोऽप्यत्र। "निमित्तज्ञस्तपोधनः" रघुः।

**निमित्तिन्** त्रि॰ निमित्तमस्त्यस्य इनि। निमित्तयुक्ते १कार्ये प्रा॰वि॰उक्ते २वधकर्त्तृभेदे च यथा "कर्त्ता च पञ्चविधः कर्त्ता प्रयोजकोऽनुमन्ता अनुग्राहकोनिमित्ती चेति"। निमित्तिनमाह विष्णुः "अन्यायेन गृहीतस्वो न्यायमर्थयते तु यः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" तल्लक्षणं प्रा॰वि॰ उक्तं "उद्देश्यत्वे सति हन्तुर्मन्यूत्पादको निमित्ती" इति मन्यूत्पादने निमित्तमाह तत्रैव वृद्धया॰ "गोभूहिरण्यहरणे स्त्रीसम्बन्धकृतेऽपि च। यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातकम्" वृहस्पतिः "ज्ञातिमित्रकलत्रार्थं सुहृत्क्षत्रार्थमेव च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्। गुर्वर्थं पितृमात्रर्थमात्मार्थमथ वा पुनः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" षट्त्रिंशन्मतमिति कृत्वा पठितम् "आक्रोशितस्ताड़ितो वा धनैर्वा परिपीड़ितः। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम्" अतोद्दिश्येति सर्वत्र कीर्त्तनात् उद्देशाभावे निमित्तमात्रेण वधित्वं नास्ति अर्थादिहरणाक्रोशनताड़नादीनां मन्युकारणानामुपात्तत्वादेतेषामभावे धनाद्यर्थं वृक्षारोहणादिना ये म्रियन्ते (यदि मह्यं धनं न दास्यसि तदा वृक्षारोहणेन मरिष्यामीति) तत्र कीर्त्तनमात्रेण निमित्तवधो नास्ति तथा च पठन्ति "असम्बन्ध यः कश्चित् द्विजः प्राणान् परित्यजेत्। तस्यैव तद्भवेत् पापं न तु यं परिकीर्त्तयेत्" असम्बन्धेनेति वाक्कृतादिसकलापराधसम्-

न्धाभावपरं यच्च "सम्बन्धेन विना देव! शुष्कवादेन कोपितः" इति भविष्यपुराणवचनं वार्षिकप्रायश्चित्तविधायकं तत् वाक्कृतेतरापराधसम्बन्धाभावपरं "शुष्कवादेन कोपितः" इत्यभिधानात्। एवं यत्राक्रोशनादौ पश्चात्कृते नापराधः तत्रापि न वधः यथा बृहस्पतिः "आक्रुष्टस्तु यदाक्रोशंस्ताडितः प्रतिताडयन्। हत्वाततायिनश्चैव नापराधी भवेन्नरः"। शास्त्रविहितताडनादौ कृते यत्र पुत्रशिष्यादिर्म्रियते तत्रापि वधो नास्त्येव यथा भविष्यपुराणे "पुत्रः शिष्यस्तथा भार्य्या शासितश्चेद्विनश्यति। न शास्ता तत्र दोषेण लिप्यते देवसत्तम!। अशास्त्रीयताडनादौ भवत्येव यथा मनुः। "पुत्रः शिष्यस्तथा भार्य्या दासी दासस्तु पञ्चमः। प्राप्तापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा। अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कदाचन। अतोऽन्यथा तु प्रहरंश्चौरस्याप्नोति किल्विषम्"। एवञ्च विहितदण्डाचरणे शास्त्रीयकल्पहणे क्रियमाणे यदि म्रियते तदापि वधो नास्त्येव दण्डादिशास्त्रविरोधान्निषेधाप्रवृत्तेः। वधनिमित्तिनस्तु प्रायश्चित्तं तत्रोक्तं यथा "निमित्तिनस्तु वचनात् त्रैवार्षिकं सम्बन्धे, असम्बन्धे वार्षिकं यथा भविष्ये "असम्बन्धं यदा विप्रो हत्वात्मानं कृतो गुह!। निर्गुणः सहसा क्रोधाद्दुष्टहृद्भेत्वादितो विभो!। त्रैवार्षिकं व्रतं कुर्य्यात् ब्रह्मचर्य्यञ्चरन् वने"। सम्बन्धशब्दोऽत्र धनसम्बन्धपरः। ताड़नादिना तिरस्कारेऽपि त्रैवार्षिकमाह सएव "तिरस्कृतो यदा विप्रो निर्गुणो म्रियतेऽनघ!। सनिमित्तं यदा विप्रस्तदेदं शुद्धये चरेत्। त्रैवार्षिकं ब्रह्मचर्य्यं कृत्वा शुध्येत विप्रहा"। धनताडनादिसम्बन्धाभावे वाक्कलहमात्रेण कृते वार्षिकमाह सएव "यमुद्दिश्य द्विजो हन्यात् ब्राह्मणं स्वयमेव हि। आत्मानं सहसा क्रोधात्तस्य किञ्चिद्भवेदिदम्। सम्बन्धेन विना देव! शुष्कवादेन कोपितः। केशश्मश्रुनखादीनां कृत्वा वै वपनं गुह!। ब्रह्मचर्य्यञ्चरन् वीर! वर्षेणैकेन शुध्यति" एतन्नितयकारणाभावेऽर्थलोभादिना कृते प्रायश्चित्ताभाव इति प्रागुक्तम्" प्रा॰वि॰।

**निमिष** पु॰ नि+कुटा॰ मिष—भावे घञ्। १चक्षुर्निमीलनरूपे व्यापारे तदुपलक्षिते "स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनम्" इति मनूक्ते २कालभेदे "सुरमत्स्यावनिमिषौ" अमरः। निमिषत्यस्मात् नि+मिष—अपादाने घञ्। ३परमेश्वरे "निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः" विष्णुस॰ सुश्रुतोक्ते नेत्रवर्त्माश्रिते ४रोगभेदे "अर्बुदं निमिषश्चापि" इत्यादिना विभज्य स च तत्र लक्षितो यथा "निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदतिवर्त्मानि निमिषः सगदो मतः"।

**निमिषित** न॰ नि+मिष—क्त। नेत्रव्यापारभेदे पक्ष्माकुञ्चने

**निमीलन** न॰ नि+मील—भावे ल्युट्। १नेत्रनिमेषरूपव्यापारे २पक्ष्मसङ्कोचने आधारे ल्युट्। ३मरणे हेमच॰। ४अविकाशे "अप्राप्य च भवेत् पश्चादेवं वापि निमीलनात्" सू॰सि॰।

**निमीला** स्त्री नि+मील—भावे अ। १नेत्रसुद्रणे करणे अ। २निद्रायां प्रमीलायाम् स्वार्थे क। निमीलिका तत्रार्थे निमीलयति स्वरूपम् निमील—णिच् ण्वुल्। व्याजे स्त्री शब्दर॰।

**निमीश्वर** पु॰अतीतायामुत्सर्पिण्यां जाते जिनेश्वरभेदे हेमच॰

**निमूल** त्रि॰ निवृत्तं मूलं यस्य प्रा॰ब॰। १मूलरहिते। तदुपपदे "निमूलसमूलयोः कषः" पा॰णमुल्। निमूलकाषं कषति। नि+मूल—क। २प्रकाशने च तत्र "नेरनिधाने" पा॰ नेःपरस्य मूलस्यान्तोदात्तता "निधानमप्रकाशता ततोऽन्यदनिधानं प्रकाशनमित्यर्थः तदर्थे मूलान्तस्यान्तोदात्तत्वमित्युक्तेरस्य प्रकाशनार्थता। [२परिवर्त्ते न॰।

**निमेय** त्रि॰नि+माङ्—माने यत्। १परिवर्त्तनीये भावे यत्।

**निमेष** पु॰ नि+मिष—भावे घञ्। नेत्रस्य स्पन्दनरूपे व्यापारे नेत्रपक्ष्मणोः स्वाभाविकोन्मेषस्य विरोधिव्यापारे नराणामकृत्रिमविकाशानन्तरं १पक्ष्माकुञ्चने। तदुपलक्षिते २कालभेदे च "द्वौ निमेषौ त्रुटिर्नाम द्वे त्रुटी तु लवः स्मृतः" अग्निपु॰ "निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत् कला मुहूर्त्तः स्यात्" मनुः। "योऽक्ष्णोर्निमेषस्य खराम३॰भागः स तत्परस्तच्छतभाग उक्तः। त्रुटिर्निमेषैर्धृतिभि१८श्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता।" सि॰शि॰ "योऽक्ष्णोर्लोचनयोः पक्ष्मपातः स निमेषो स यावताकालेन निष्पाद्यते तावान् कालोऽपि निमेषशब्देनोच्यते उपचारात्" प्रमि॰। "निमेषमात्रादवधूय तद्व्यथाम्" "पपौ निमेषालसपक्ष्मपङ्क्तिः" रघुः। स्वार्थे क निमेषक तत्रार्थे ४अविकाशे च

**निमेषकृत्** स्त्री निमेषं करोति कृ—क्विप् तुक् ६त॰। तड़िति शब्दमाला तस्याः निमेषकालेन (स्वल्पकालेन) निमीलन तुल्याधिकाशयुक्तत्व तू तथात्वम्।

**निमिषणी** स्त्री निमिषत्यनया नि+मिष–करणे ल्युट् ङीप्। नेत्रवर्त्माश्रिते निमेषसाधने शिराभेदे निमिषशब्दे दृश्यम्

**निमिषरुच्** पु० निमेषं तत्कालं व्याप्य रोचते रुच–क्विप्। खद्योते त्रिका० निमेषद्युदादयोऽप्यत्र तस्य स्वल्पकालमात्रद्योतनात् तथात्वम्।

**निम्न** त्रि० नि+म्ना–क। १नीचे २गभीरे (नावाल) अमरः। "पयश्च निम्नाभिमुखं प्रतीपयेत्" कुमा० "आपो न निम्नैरुदभिर्जिगत्नवः" ऋ० १०।७८।५ "प्रयाति निम्नाभिमुखं नवोदकम्" ऋतुसं०। इत्यादिषु क्तान्तेन व्याते २चिह्नभेदे शब्दार्थचि०।

**निम्नगा** स्त्री निम्नं गच्छति गम–ड। १नदीमात्रे २नीचगामिनि त्रि० "अनुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैष निम्नगाः" माघः "उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्" रघुः।

**निम्ब** पु० निबि–सेचने अच् बवयोरैक्यात् मः। (निम्) ख्याते वृक्षे अमरः "निम्बः शीतो लघुर्ग्राही कटुपाकोऽग्निवातहृत्। अहृद्यः श्रमतृट्कासज्वरारुचिकृमि प्रणुत्। निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत्। वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत्। निम्बं फलं रसे तिक्तं पाके तु कटु भेदनम्। स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःकृमिमेहनुत्"। निम्बशाकगुणाः "निम्बस्य कोमलदलानि घृतेन भृष्टान्याज्ये च्युतिमेत्तदनु सैन्धवतक्रयुक्तान्। शालीयतण्डुलकणान् सह रामठेन आधारितान् ददति रोचनमेव देहात्"। "करञ्जनिम्बजफलं कृमिकुष्ठप्रमेहजित्। निम्बतैलन्तु कुष्ठघ्नं तिक्तं कृमिहरम् परमिति" राजवल्लभः। "मस्करं निम्बपत्रञ्च योऽत्ति मेषगते रवौ। अतिरोषान्वितस्तस्य तक्षकः किं करिष्यति" ति०त०। षष्ठ्यां तिथौ तद्भक्षणनिषेधो यथा "कलङ्की जायते बिल्वे तिर्य्यग्योनिश्च निम्बके" ति०त०। तिथिभेदे वर्ज्योक्तौ। निम्बक इत्यत्र स्वार्थे क।

**निम्बतरु** पु० निम्ब इव तत्संज्ञको वा तरुः। १मन्दारवृक्षे अमरः। २निम्बसंज्ञके तरौ च। [राजनि०।

**निम्बवीज** पु० निम्बस्य वीजमिव वीजं यस्य। राजादनीवृक्षे

**निम्बू** स्त्री निबि–सेचने ऊ बवयोरैक्यात् मः। (कागजीनेबु) जम्बीरभेदे ततः स्वार्थे क, वा ह्रस्वः अभिधानात् पुंस्त्वम्। निम्बुक निम्बूक तत्रार्थे पु०। तस्य फलम् अण् तस्य लुपि। तत्फले न० "निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु। निम्बुकं कृमिसमूहनाशनं तीक्ष्णमम्लमुदरग्रहापहम्। वातपित्तकफशूलिने हितं कष्टनष्टरुचिरोचनम् परम्। त्रिदोषवह्निक्षयवातरोगनिपीडितानां विषविह्वलानाम्। मलग्रहे बद्धगुदे प्रदेयं विसूचिकायां मुनयो वदन्ति" भावप्र०। "भागैकं निम्बुकं तोयं षड्भागं शर्करोदकम्। लवङ्गमरिचोन्मिश्रं पानकं पानकोत्तमम्। निम्बूफलभवं पानमत्यम्लं वातनाशनम्। वह्निदीप्तिकरं रुच्यं समस्ताहारपाचकम्" राजनि०।

**निम्लोच** पु० नि+म्लुचु–भावे घञ्। अस्तगमने "सूर्य्यादुमपि निम्लोचे" भाग०१।२।८। भावे ल्युट् निम्लोचन तत्रार्थे न० आधारे ल्युट् ङीप् सूर्य्यास्तस्थाने पुरीभेदे स्त्री। "पश्चाद् वारुणीं निम्लोचनीं नाम" भाग०५।२१।१५

**निम्लोचि** पु० यदुवंश्ये भजमानन्वपस्य पुत्रभेदे "भजमानस्य निम्लोचिः किंकाणो धृष्टिरेव च" भाग० ९।२४।५

**नियत** त्रि० नि+यम–क्त नितरां यतते यत–अच् वा। १संयते २नियमकारिणि ३नियमयुते "नियमो यमश्च नियतं मतिं यथा" माघः। कर्मणि क्त। ४कृतनियमे च। "प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्यतस्त्रिषवणं स्पृशेत्" प्रा०त० शङ्खलिखितौ। "पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम्" उद्वा०त०मनुः। "अन्यथासिद्धिशून्यस्य नियता पूर्ववर्त्तिता" भाषा०।

**नियताप्ति** स्त्री नियता निश्चिता आप्तिः। सा० द० उक्ते नाट्ये प्रारब्धकार्य्यस्य अवस्थाभेदे अवस्था विभज्य "अपायाभावतः प्राप्तिर्नियताप्तिर्विनिश्चिता" अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः। यथा रत्नावल्याम् "राजा देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति" देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता" सा०द०।

**नियति** स्त्री नियम्यतेऽनया नि+यम–करणे क्तिन्। १भाग्ये दैवे अमरः "नियतिं लोक इवानुरुध्यते" किरा०। "आसादितस्य तमसा नियतेर्नियोगात्" माघः "नियतिकृतनियमरहिताम्" काव्यप्र०। २ईश्वरेच्छाभेदे अविद्यायाम्। "महामायेत्यविद्येति नियतिर्मोहनीति च। प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त! चोच्यते" पुराणान्तरम्। करणे क्तिच् ङीप्। दुर्गायां देव्यां स्त्री "स्तुतिः संहरणाद्देवी नियती च नियामतः" देवीपु०।

**नियन्तृ** त्रि० नि+यम–तृच्। १नियमकारिणि शासके स्त्रियां ङीप्। २अश्वनियमकारिणि सारथौ पु० अमरः

"रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्। न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः" रघुः। ३परमेश्वरे पु० "अपराजितः सर्वसहो नियन्ता नियमोऽयमः" विष्णुस०।

**नियन्त्रण** न० नि+यन्त्रि—ल्युट्। प्रतिबन्धदूरीकरणे एकत्रस्थापनार्थव्यापारभेदे "अनेकार्थस्य शब्दस्यैकार्थे नियन्त्रणरूपं विशेषम्" सा०द०। भावे युच्। नियन्त्रणापि तत्रार्थे स्त्री।

**नियन्त्रित** त्रि० नि+यन्त्रि—क्त। १कृतनियमने २प्रतिबन्धादिना एकत्रस्थापिते "अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते। एकत्रार्थेऽन्यधीहेतुः" सा०द०।

**नियम** पु० नि+यम—घञ् वा ह्रस्वः। १प्रतिज्ञायाम् अङ्गीकारे अमरः। २नित्ये ३आगन्तुकसाधनकर्मरूपे व्रते ४नियन्त्रणायां ५निश्चये मेदि० पा०सू० उक्ते ६योगाङ्गभेदे "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" सूत्रे उद्दिश्य "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" सू० विभज्योक्तं "तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम् आभ्यन्तरं चित्तमलानामाक्षालनम्। सन्तोषः सन्निहितसाधनादधिकस्यानुपादित्सा। तपो द्वन्द्वसहनं द्वन्द्वश्च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौनाकारमौने च व्रतानि चैवं यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणं "शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः स्यान्नित्ययुक्तोऽमृतभोगभागी" यत्रेदमुक्तं ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेति" भा० "शौचादिनियमान् व्याचष्टे शौचमिति। आदिशब्देन गोमयादयो गृह्यन्ते। गोमूत्रयावकादि मेध्यं तस्याभ्यवहरणादि आदिशब्दात् ग्रासपरिमाणसङ्ख्यानियमादयो ग्राह्या मेध्याभ्यवहरणादिजनितमिति वक्तव्ये मेध्याभ्यवहरणादि चेत्युक्तं कार्ये कारणत्वोपचारात्। चित्तमलाः मदमानासूयादयस्तदपनयो मनःशौचम् प्राणयात्रामात्रहेतोरभ्यधिकस्यानुपादित्सा सन्तोषः प्रागेव स्वीकरणपरित्यागादिति विशेषः। काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम् अवचनमाकारमौनम्। परिक्षीणवितर्कजाल इति वितर्कौ वक्ष्यमाणः संशयविपर्ययौ चेति एतावता शुद्धाभिसन्धिरुक्तः। एते च यमनियमाः विष्णुपुराणे उक्ताः "ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहम्। सेवेत योगी निष्कामो योग्यतां स्वमनो नयन्। स्वाध्यायशौचसन्तोषं तपांसि नियतात्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः। एते यमाः सनियमाः पञ्च पञ्च प्रकीर्त्तिताः। विशिष्टफलदाः काम्या निष्कामाय विमुक्तिदाः" विष्णु०। सर्वदर्शनसंग्रहे पातञ्जलदर्शनप्रसङ्गे स्वाध्यायशब्देन प्रणवजपवत् तान्त्रिकमन्त्रजपोऽप्युच्यते इत्युक्तम्।

"नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा। शौचं, तुष्टिश्च सन्तोषस्तपश्चेन्द्रियनिग्रहः। स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहः। तपोऽक्रोधो गुरौ भक्तिः शौचञ्च नियमाः स्मृताः। यमाः पञ्चाथ नियमाः शौचं द्विविधमीरितम्। सन्तोषस्तपसा जप्यं वासुदेवार्चनं दमः" गारुडपु० "तपः सन्तोष आस्तिक्यं दानं देवस्य पूजनम्। सिद्धान्तश्रवणञ्चैव ह्रीर्मतिश्च जपो हुतम्। दशैते नियमाः प्रोक्ता योगशास्त्रविशारदैः" तन्त्रसारः। ७विधिभेदे तल्लक्षणादि लौगाक्षिभास्करेणोक्तं यथा

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते" अस्यार्थः। प्रमाणान्तरेणाप्राप्तस्य प्रापकोविधिरपूर्वविधिः। यजेत स्वर्गकाम इत्यादि स्वर्गार्थकयागस्य प्रमाणान्तरेणाप्राप्तस्यानेन विधानात्। पक्षे अप्राप्तस्य प्रापकोविधिर्नियमविधिः यथा व्रीहीनवहन्तीत्यादिः। अयमस्य पक्षेऽप्राप्तेः प्रापकत्वमिति चेत् इत्थम् अनेन हि अवघातस्य वैतुष्यार्थत्वं न प्रतिपाद्यते अन्वयव्यतिरेकसिद्धत्वात् किन्तु नियमः स चाप्राप्तांशपूरणं वैतुष्यस्य हि नानोपायसाध्यत्वादवघातं परित्यज्योपायान्तरं यदा गृहीतुमारभ्यते तदावघातस्याप्राप्तत्वेन तद्विधाननामकमप्राप्तांशपूरणमेवानेन विधिना क्रियते। अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः पक्षेऽप्राप्तावघातविधानमिति यावत्"। मिताक्षरोक्तं विशेषोदाहरणादि ऋतुकालशब्दे १४२७पृ० दर्शितं तत्र दृश्यम्। नियमे च इतरसंवलने न दोषः। परिसंख्यायां दोष इति भेदः। पाक्षिके सतीत्यादिकारिकां व्याख्याय उदाहरणं परिसंख्यातो भेदश्च विधिरूपमन्ये दर्शितो यथा "नियमः पाक्षिके सतीति विधिं विना प्रवृत्तेः पाक्षिकत्वे सतीत्यर्थः प्रवृत्तिनियमे सतीति यावत् तथाच तद्गोचरप्रवृत्तिनियमनिर्वाहको विधिस्तन्नियमविधिरिति

फलितम्। तादृशश्चावघातादिविधिः व्रीहीनवहन्तीति विधिं विना पुरोडाशनिष्पादकव्रीहिवैतुष्यद्वारा यागोपकारकेऽवघाते इतरपरीहारेण नखदलनादावपि प्रवृत्तिप्रसक्त्याऽवघाते प्रवृत्तिनियमो न स्यादिति तादृशे विधेः प्रवृत्तिनियमनिर्वाहकत्वं यागोपकारके व्रीहिवैतुष्येऽवघाताधीनत्वनियमस्तादृशविधितो यद्यपि दुर्लभः नियमस्यापदार्थत्वादवाक्यार्थत्वाच्च तथापि तादृशविधितो व्रीह्यवघातत्वेन नियोगसाधनताऽवगमात् यागजन्यपरमापूर्वस्य तदवघातरूपकारणं विनापि निष्पत्त्यप्रतिसन्धानेन तत्र नियतप्रवृत्तिनिर्वाहः। तत्र चान्यत्र चेति यत्रोद्देश्ये यस्य विधानं तदन्यस्मिन्नपि तत्सम्बन्धस्य तस्मिन् वा तदन्यसम्बन्धस्य प्रवृत्तितः प्रसक्तावित्यर्थः। तादृशस्य प्रसञ्जकप्रवृत्तिविरोधिविधिः परिसंख्याविधिरित्यर्थः तत्र "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति। तत्रेमामित्यादिमन्त्रस्य रशनामात्रग्रहणप्रकाशकतया अश्वरशनादान इव गर्दभरशनाया आदानेऽपि मन्त्रस्य विनियोगो लिङ्गात् लभ्यते तथाच तदादानकालेऽपि बक्ष्यमन्त्रपाठप्रवृत्त्या तत्रापि तन्मन्त्रसम्बन्धः स्यात् एतस्माच्च विधितः प्रथमम् अश्वरशनाग्रहणे एतन्मन्त्रविनियोगलाभे निराकाङ्क्षतया गर्दभरशनाग्रहणे न तद्विनियोगलाभ इति वैयर्थ्यं न तदाचरणमिति एतद्विधेर्विधेयस्येतरोद्देश्यसम्बन्धप्रसञ्जकप्रवृत्तिविरोधिता। अथ व्रीहीनवहन्तीति नियमविधिदर्शितपरिसंख्याविध्योः को विशेषः नियमविधेरपि परिसंख्यावदितरनिवृत्तिफलकत्वात् नियमविध्यसत्त्वे पुरोडाशद्वारा यागोपकारकवैतुष्याद्यर्थिनोऽवघातेतरतदुपाये प्रवृत्तिप्रसक्तेः। यदि चावघातनियमविधेरवघातप्रवृत्तिनियमफलकत्वं परिसंख्यातो विशेषः इमामगृभ्णन् रशनामित्यादि परिसंख्याया अश्वरशनादाने मन्त्रपाठप्रवृत्तिनियमस्य मन्त्रलिङ्गेन मन्त्रस्यासाधारण्येनोपकारकताबोधनादेव निर्वाहात्तस्याः प्रवृत्तिनियमानुपपादकत्वादिति विभाव्यते तदा अस्तु परिसंख्याया नियमान्तर्भावः नियमस्तु परिसंख्यायामन्तर्भवतु परिसंख्याफलस्य तत्साधारण्यात् इति चेन्न नियमस्थले इतरनिवृत्तेरर्थतः सम्भवेऽपि तत्र तत्तात्पर्य्यानुपगमात् नियतप्रवृत्तावेव तत्तात्पर्य्यात् न चोपायान्तरनिवृत्तावपि नियमतोऽवघातप्रवृत्त्युपपत्तेर्निवृत्तावेव तत्तात्पर्य्यं न तु नियतप्रवृत्तावित्येव किं नोपयेत इति वाच्यम् अवघातविधिनाऽवघातस्यासाधारण्येन यागोपकारकत्वबोधनेऽपि अवघातमात्रेण वैतुष्यनिर्वाहाप्रतिसन्धाने अन्योपायसंवलनेनाप्यवघातप्रवृत्तिसम्भवादवघातविधेरितरनिवर्त्तकत्वायोगेन तस्येतरनिवृत्तौ तात्पर्य्यासम्भवात्। एवम् ऋतौ भार्य्यामुपेयादित्यादिनियमो न तु परिसंख्या दोषत्रयप्रसङ्गादिति सर्वसिद्धान्तोऽपि व्याहन्येत स्वार्थमन्तरेणैवानिष्टानुबन्धिभार्य्यागमने ऋतुकालव्याप्तिबोधात् तदेकवाक्यतया परिसंख्याफलस्येतरकाले भार्य्यागमननिवृत्तिनिर्वाहान्नियमानावश्यकत्वात्। न च ऋत्वनभिगमने प्रत्यवायश्रुतेः ऋतुकालाभिगमस्यावश्यकत्वे तत्तात्पर्य्यमावश्यकमिति नियम इति वाच्यम्। अन्ततावनभिगमस्यापि "इन्द्रियार्थेषु सर्वेषु न प्रसज्येत कामतः" इत्यादिना निषेधात्तदेकवाक्यतया परिसंख्याया एवौचित्यात् इति चेन्न येन रूपेण उद्देश्यता तदन्यरूपव्यापकता उद्देश्यविधेयभावमर्य्यादातो न लभ्यते इति पञ्च पञ्चनखान् भुञ्जीत इत्यादावुद्देश्याविशेषेण भक्ष्यपञ्चनखत्वादौ शशकाद्यभेदव्याप्त्यलाभ इत्याशयेन तत्र परिसंख्यायां स्वार्थहान्यादिदोषत्रयस्य प्राचीनैरभिधानात्"। मीमांसापरिभाषायाञ्च "यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः यथा व्रीहीनवहन्तीति। एतद्विध्यभावे दर्शपूर्णमासिकेषु व्रीहिषूत्पत्तिवाक्यावगतपुरोडाशोपयोगि तण्डुलनिष्पत्त्यनुकूल वैतुष्यकार्य्यायावहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन् पक्षेऽवहननस्य प्राप्त्यभावात् कार्य्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात् सत्यस्मिन् विधौ अवहननेनैव वैतुष्यं कार्य्यमिति नियमे सति विदलनं सर्वात्मना निवर्त्तेत इति नियमविधिरयम्। न च वैतुष्यस्य नखविदलनेनापि सम्भवादवहननियमो व्यर्थः प्रयोजनाभावादिति वाच्यम् अवघातेनैव वैतुष्यकरणे किञ्चिददृष्टं जन्यते इत्यदृष्टाङ्गीकारात् नियमेनादृष्टकार्य्यालाभेऽप्यदृष्टस्योत्पत्तेः। तच्चापूर्वं यागोत्पत्त्यपूर्वद्वारा फलापूर्वे उपयुज्यते तेन नियमापूर्वाभावे फलापूर्वमेव नोत्पद्येत इति कल्पनान्नियमापूर्वस्य न वैयर्थ्यम्। एवं व्रीहिसोमादिनियमविधिषु बोध्यम्"। अधिकं विधिरसायनग्रन्थे दृश्यम्। कवितावर्णननियमभेदाः यथा "वर्णयेच्च सदप्येतन्नियमोऽत्र प्रदर्श्यते। भूर्जत्वग्घिमवत्येव मलये ह्येव चन्दनम्। सामान्यवर्णने शौक्ल्यं कृष्णाः-

पुष्पशाखयाम्। कृष्णत्वं केशकाकाहिपयोनिधिपयोसुचाम्। रक्तत्वं रत्नवन्धूकविद्याम्भोजविवस्वताम्। तथा वसन्त एवान्यपुष्टानां कलकूजितम्। वर्षास्वेव मयूराणां रुतं नृत्यञ्च वर्णयेत्। नियमस्य विशेषोऽथ पुनः कश्चित् प्रकाश्यते। कमलासम्पदोः कृष्णहरितोर्नागसर्पयोः। पीतलोहितयोः स्वर्णपरागाग्निशिखादिषु। चन्द्रेशशैलयोः कामध्वजे मकरमत्स्ययोः। दानवासुरदैत्यानामैक्यमेवाभिसम्मतम्। बहुकालजन्मनोऽपि शिवचन्द्रस्य बालता। मानवा मौलितो वर्ण्या देवाश्चरणतः पुनः"। नियममयति नि+यम–णिच्–अच्। ८सर्वनियामके परमेश्वरे "अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमोऽयमः" विष्णुस० "स्वेषु स्वेष्वधिकारेषु प्रजा मियमयतीति नियमः" भा०।

**नियमन** न० नि+यम–भावे ल्युट्। १नियमशब्दार्थे २निग्रहे ३बन्धे "नियमनादसतां च नराधिपः" रघुः इतरनिवारणरूपे ४परिसंख्यार्थे च "युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा। प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्। एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्" निगमवाक्यतात्पर्य्यकथने "एतत्प्रयोजनं तु तिथिविशेषविहिते कर्मणि तिथिखण्डविशेषनियमनम्" ति०त० रघु०। एतदुपदर्शित खण्डविशेषतिथावेव कुर्य्यान्नेतरत्रेति परिसंख्यातुल्यत्वं गम्यते। नियमपरत्वे विपरीतकरणे दोषाभावप्रसङ्गात् नियमे इतरसंवलनस्य शास्त्रार्थत्वात् नचैद्युक्तम् इतरत्र करणे निन्दाश्रवणात्। अतः परिसंख्याकार्य्यकारीह नियमनमिति स्थितम्।

**नियमसेवा** स्त्री नियमेन सेवा विष्णोः। नियमपूर्वकम् आश्विनस्य शुक्लैकादश्यामारभ्य कार्त्तिकमासे विष्णोः सेवायाम् "आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत्। कार्त्तिकस्य व्रतानीह तस्यां कुर्य्यादतन्द्रितः। अकृत्वा नियमं विष्णोः कार्त्तिकं यः क्षिपेन्नरः। जन्मार्जितस्य पुण्यस्य फलं नाप्नोति नारद !"। किञ्च "नियमेन विना चैव न नयेत् कार्त्तिकं मुने !। चातुर्मास्यं तथा चैव ब्रह्महा स कुलाधमः" हरिभक्तिविलासः।

**नियमस्थिति** स्त्री नियमेन स्थितिरत्र। तपस्यायाम् हेमच०

**नियमित** त्रि० नि+यम–णिच्–कर्मणि क्त। १कृतबन्धने "किञ्चिदुद्भ्रु भङ्गीलीलानियमितजलधिं राममन्वेषयामि" महाना०। २कृतनियमे च

**नियम्य** त्रि० नि+यम–यत्। १निरोद्धव्ये २निग्राह्ये च "त्वया नियम्या ननु दिव्यचक्षुषा" रघुः।

**निययिन्** पु० नी–भावे क्विप् निये नयनाय इनः प्रभुः वा० अलुक्स०। प्रापणाय स्वामिनि रथादौ "न्येषं नियथिनं रथम्" ऋ०१०।७।२

**नियव** पु० नि+यु–मिश्रणे वेदे वा० अप्। मिश्रीभावे "गोषु युधो नियवं चरन्तीः" ऋ० १०।३०।१० लोके तु घञ्। नियाव तत्रार्थे।

**नियातन** न० नितरां यात्यते याति–ल्युट्। १निपातने नितरां यातना यत्र प्रा०ब०। २भययुते नयनानन्दः।

**नियान** न० नियमेन यान्ति गावोऽत्र या–आधारे ल्युट्। गोष्ठस्थाने। "यन्नियानं न्ययनं संज्ञानम्" ऋ०१०।१९।४ "नियानं गोष्ठम्" भा०।

**नियाम** पु० नि+यम–घञ्। नियमे

**नियामक** त्रि० नि+यम–णिच्–ण्वुल्। नियमकारके नियामकत्वम् अदृष्टकालादेः "कारणस्य कार्य्यं प्रति नियामकत्वम्" सर्वद० "कृत्तद्धितसमासानामभिधानं नियामकम्" अमरः। स्त्रियां टापि अत इत्त्वम् नियामिका। "विकल्पे आत्मप्रीतिर्नियामिका" मिता० २निरासके च "लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम्" कामन्द०।

**नियुक्त** त्रि० नि+युज–क्त। १अधिकृते २नियोजिते ३प्रेरिते च "केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" आ०त० प्रातःकृत्ये। "नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः" "स्त्रिया सम्यग्नियुक्तया" "विधवायां नियुक्तस्तु" "नियुक्तो यो विधिं हित्वा" इति च मनुः।

**नियुत्** पु० नि+यु–कर्मणि क्विप् तुक्। १वायोरश्वे निघ० "सहस्रेण नियुता नियुत्वते" ऋ०१।१६।१ "जातावेकवचनम्। नियुत इति वायोरश्वानां नामधेयं "नियुतो वायोरिति निरुक्ते उक्तत्वात्" भा० कर्मणि क्विप्। २नियोजिते ३नियते च नियुद्दृशशब्दे दृश्यम्।

**नियुत** न०। १लक्षसंख्यायां २दशलक्षसंख्यायां ३तत्संख्येयेषु च "शतं सहस्रमयुतं नियुतं प्रयुतं मतम्। स्त्री कोटिरर्बुदमिति क्रमाद्दशगुणोत्तरम्" इति रत्नकोषः। "एकं दश शतञ्चैव सहस्रमयुतं तथा। लक्षञ्च नियुतञ्चैव कोटिरर्बुद एव च। वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्द्धञ्च दशवृद्ध्या यथोत्तरम्" पुराणम्।

**नियुत्वत्** पु० नियुतोऽश्वाः सन्त्यस्य मतुप् मस्य वः तान्तत्वात्त्वार्थं परे पदत्वाभावात् न तस्य दः । वायौ "नियुत्वान् सोमपीतये" यजु० २७।२२ । तस्येदं छ । नियुत्वतीय वायुदेवताके हविरादौ "एष वा प्राजापत्य एष वा नियुत्वतीयः" शत०ब्रा० ६।२।२।१५ ।

**नियुत्सा** स्त्री भरतवंश्यस्य प्रस्तारन्पस्य पत्न्याम् "प्रस्तारस्य नियुत्सायां हृदयज आसीत् विभुः" भाग०५।१५।७ नियुत्सायामित्यत्र निरुत्सायामिति पाठान्तरं साऽपि तत्रार्थे ।

**नियुद्ध** न०नि+युध–भावे क्त । बाहुयुद्धे अमरः । "नियुद्धं सङ्कटयुतम्" शा०द० । निपूर्वकस्य युध्यतेः बाहुयुद्धपरत्वम् । "तेन नियोद्धुकामे किल बद्धवर्मणी" नैष० ।

**नियुद्रथ** त्रि० नियुत्–नियोजितो नियतो वा रथोयस्य । गमनाय नियोजितरथे "स दस्मा नियुद्रथः" ऋ०१०।२६।१ "नियुद्रथो गमनाय सर्वदा नियतरथो नियुक्तरथो वा" भा०

**नियोग** पु० नि+युज–घञ् कुत्वम् । १प्रेरणे इष्टसाधनत्वादिबोधनेन २प्रवर्त्तने नियोज्यशब्दे दृश्यम् । ३आज्ञायाम् ४अवक्लृप्तौ अवधारणे तत्रावधारणम् अन्ययोगव्यवच्छेदार्थकम् । "यथानियोगं" कुमा० । अनियोगे अनवक्लृप्तावित्यर्थः "तस्मिन्नेवे नियोगेन स विकल्पपराङ्मुखः" रघुः । पुत्रोत्पादनाय विधवायाः ५नियोजने च । नियोगप्रकारश्च क्षेत्रजशब्दे २४०६पृ० दृश्यः । "उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि" बृहस्पतिः ।

**नियोग्य** त्रि०नियोक्तुमर्हति नि+युज–अर्हार्थे कर्त्तरि ण्यत् कुत्वम् । प्रभौ । शक्यार्थे कर्मणि तु न कुत्वम् ।

**नियोजन** न० नि+युज–भावे ल्युट् । १प्रेरणे २प्रवर्त्तने भृत्यादेः कर्मकरणाय ३उपदेशात्मकव्यापारे "नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे" कात्या० श्री०२१।१।८। ४नितरां योजने च "पाशं कृत्वा प्रतिमुञ्चत्यथातो नियोजनस्यैव" शत०ब्रा० ३।७।३।१३।

**नियोज्य** त्रि० नि+युज–शक्यार्थे कर्मणि ण्यत् "प्रयोज्यनियोज्यौ शक्यार्थे" पा०उक्तेः न कुत्वम् । १प्रवर्त्तनीये नियुज्यतेः प्रवर्त्तनार्थकत्वात् कर्मणि ण्यता तत्कर्म उच्यते प्रवर्त्तनाकर्म च तज्जन्यप्रवृत्तिमान् । तथा च स्वर्गकामोयजेतेत्यादौ स्वर्गकामो यागे नियोज्यः स्वर्गकामादेश्च कामनाद्वारा यागे कृतिसाध्यताधीद्वारा प्रवृत्तिर्जायते इति तस्य तथात्वम् । तदेतत् शब्दशि० उक्तं यथा "स्वर्गकामो यजेतेत्यादौ इष्टसाधनत्वं कार्यत्वं वा यदि विधिः समभिव्याहृतक्रियान्वयी तदन्यान्वयी वा गुरुमते यागादिर्न कार्यतया लिङा बोधयितुं शक्यते स्वर्गकामनियोज्यान्वययोग्यताविरहात् । कामनाविषयिस्य हि ममेदं कर्त्तव्यमिति बोद्धृत्वं नियोज्यत्वं कामना च तद्बोधोपयोगे सति भवति स च कामनानन्तरं काम्यसाधनताबोधात् कार्यताबोधे सति स्यात् एवञ्च स्वर्गसाधनताबोधे सति स्वर्गकामनियोज्यान्वययोग्यता । न च कालान्तरे भाविस्वर्गं क्रिया साक्षात् परम्परया वा साधनमिति शब्दो बोधयितुमर्हति आशुविनाशित्वात् परम्पराघटकानुपस्थितेश्च तृतीय प्रकारस्याभावात् अन्यथा तमादाय साधनत्वसम्भवात् कल्पप्रमप्यपूर्वं न स्यात् इष्टसाधनताविधिपक्षे तु स्फुटैवानुपपत्तिः । कार्यताविधिपक्षे अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न विशेषः । अतः क्रियातोऽन्यत् स्वर्गसाधनताहं कार्यं क्रियाकार्यतानिर्वाहकमित्यार्थम्" गदाधरेणेदं नियोज्यान्वयग्रन्थे विवृतं दिङ्मात्रमत्रोच्यते "लिङोऽर्थः कार्यत्वं पाकादिक्रियायामेव प्रथमतोऽन्वेति न तु स्वर्गकामो यजेतेत्यादितो यागादौ प्रथमतस्तदन्वयः किन्तु कार्यत्वेनैव वैदिकलिङ्वाच्योऽपूर्वं प्रथमतो विषयतया यागाद्यन्वयः प्रतीयते विषयत्वन्तु जन्यत्वं तत्र च शक्यतावच्छेदककार्यत्वैकदेशे कृतौ स्वर्गकामान्वयः एवञ्च यागविषयकं स्वर्गकामकार्यमिति प्राथमिको बोधः तदनन्तरमपूर्वस्य कृतिसाध्यता यागद्वारैव, यागमकृत्वा अपूर्वस्य साधयितुमशक्यत्वादतो यागकार्यतां विनाऽपूर्वकार्यत्वमनुपपन्नमित्यनुपपत्तिप्रतिसन्धाने ततश्च कृतलौकस्यलक्लृप्तक्रियाकार्यतान्वयगोचरशाब्दसामग्रीतो यागे चौपादानिकोबोधः । पुनरनुसन्धीयमानशब्दसहकृतानुपपत्तिज्ञानमेवोपादानमिति गीयते तदसहकृतं ज्ञानञ्चार्थापत्तिरिति । न च यागकार्यतायाः पूर्वमप्रतीतत्वेन यागकार्यताव्यतिरेकस्य दुर्ग्रहत्वात् उक्तानुपपत्तिधीरेव न घटते इति वाच्यं यागो यदि कार्यो न स्यात् तदाऽपूर्वमपि कार्यं न स्यात् इति तर्काकाराद्नुपपत्ति प्रतिसन्धानस्य यागकार्यताविरहानधीनस्य यागकार्यता साधकत्वोपगमात् । न चापाद्यापादकयोर्वैयधिकरण्यान्नोक्त तर्कसम्भव इति वाच्यं यागो यदि कृतिसाध्यो न स्यात् असाध्यकत्वसाध्यकृतिसाध्यव्यापारको न स्यादित्ये तादृशतर्कोपगमेन सामञ्जस्यात् । कृतिसाध्यत्वञ्चनादिरूपव्यापारके कलसाध्यकाष्ठादौ व्यभिचारवारणायासाध्यान्तं व्यापारविशेषणं, कृतिसाध्यव्यापारके नित्ये

व्यभिचारवारणायाऽननुकूलत्वमपेक्ष्य कृसाध्यकत्वं कृतौ विशेषणं शब्दानुपपत्तिधीजन्यतावच्छेदकधर्मयोः सङ्करो न दोषो गुणगतजात्यनभ्युपगमेन तयोर्जातित्वविरहात्। वस्तु वा केवलशब्दादिप्रमाणजन्यबोधविजातीय एव आर्थोपादानिकबोधः अपूर्वविषयककामितैरपूर्वसाधनक्रियाविषयकत्वं विनाऽपूर्वसाधनतानुपपत्तेः कृतौ क्रियाविषयकत्वोपपादकत्वं तस्याः काम्यसाधनत्वमप्यपूर्वकार्यत्वोपपादकम् इति यागादेः काम्यसाधनतार्थोपादानिकी, अस्माकं काम्यसाधनत्वस्य विधिप्रत्ययावाच्यत्वेऽप्यध्याहारितस्याप्यर्थस्य शाब्दधीगोचरतया पदाजन्याया अपि स्वर्गसाधनत्वोपस्थितेः पदजन्यक्रियाद्युपस्थितिसहितायाः शाब्दसामग्रीत्वादिष्टसाधनत्वस्योपादानलभ्यता। वाजपेयेन यजेतेत्यादौ च तदाभिधानिकमेव स्वर्गादिपदोपस्थाप्ये इष्टे कथञ्चित् तृतीयार्थकरणत्वान्वय उपेयते इति गुरुमतं निराकृत्य आहत्यैव यागादौ विध्यर्थकृतिसाध्यत्वेष्टसाधनत्वयोरन्वयबोधं व्यवस्थापयितुकामो विचाराङ्गं विप्रतिपत्तिं दर्शयति अथेति स्वर्गकामो यजेतेत्यादाविति कालान्तरभाविफलकामबोधकघटितवेदवाक्ये इत्यर्थः प्रतिपाद्यत्वं विधायन्देति विधित्वञ्च विदधाति प्रवर्त्तयतीति व्युत्पत्त्या प्रवृत्तिप्रयोजकत्वं प्रवृत्तिजनकतावच्छेदकप्रकारताश्रयत्वम्। कार्यत्वस्य विधित्वेव कथं न पक्षतोपेयते इत्याकाङ्क्षायाम् इष्टसाधनतासाधारणरूपावच्छिन्नः पक्षो, गुरुणामभावसाधने एव नैयायिकाभिमतस्याहत्यक्रियायामिष्टसाधनतान्वयस्यापि निराकरणं भवतीत्युक्तानुगतरूपेण पक्षकरणप्रयोजनमाविष्कर्त्तुं विधित्वेन संपाद्यमर्थद्वयं दर्शयति इष्टसाधनत्वं कार्यत्वं वेति वाकारोऽनास्थायां न विकल्पे। इष्टसाधनत्वस्य विधित्वपक्षे कार्यत्वस्याऽतत्त्वात्। एवञ्चालौकिकक्रियागोचरकालान्तरभाविफलकामनाधीनप्रवृत्तिपरलिङ्पद तात्पर्यविषयप्रवर्त्तकधर्मत्वमेव पर्यवसितं पक्षतावच्छेदकम्" इत्युपक्रमे तु मध्ये

"स्वर्गकामेति काम्यस्वर्गसाधनतानिर्वाहकापूर्वरूपव्यापारे साधनत्वाप्रत्यायने स्वर्गकामकृतिसाध्यत्वान्वयबोधजनकधीविषयतदन्वयप्रयोजकस्वर्गकामनियोज्यकत्वरूपयोग्यताविषयकशाब्दज्ञानस्य जनकीभूतं यन्नियोज्यतया स्वर्गकामरूपनियोज्यस्यान्वयप्रयोजकस्वर्गसाधनतायाज्ञानं तदसम्भवादित्यर्थः। कृतिविषयनिष्ठकाम्यसाधनतायाः कृतिविशेषप्रयोजकत्वेऽपि इष्टासाधनस्यापि सन्ध्यावन्दनादेः कृतित उत्पत्तेः। कृतिसाध्यत्वसामान्ये यद्यपि साक्षादिष्टसाधनत्वं प्रयोजकं तथापि तत्र कर्त्तुः क्रियानियोज्यत्वं क्रियाविषयककृतिसाध्यताज्ञानवत्त्वरूपं प्रयोजकमिति कार्यतान्वयबोधसामान्ये कर्त्तुर्नियोज्यताज्ञानमन्वयप्रयोजकरूपयोग्यताज्ञानविधया कारणम् तदपि ज्ञानं •शाब्दात्मकमेवोपेयम् प्रमाणान्तराभावात्। एवञ्च काम्यस्थले कामिनियोज्यतया बोधे कामनाविशिष्टस्यैव तथाभानमङ्गीकार्यं कामनाया विशेषणत्वावश्यकत्वात् कामनाया उपलक्षणत्वे आत्ममात्रस्यैवोपलक्ष्यतया निष्कामसाधारणनियोज्यताबोधो न, विधेरप्रामाण्यप्रसङ्गात्" "वस्तुतो वेदस्थले विशिष्टान्वयपरताया औत्सर्गिक्याः कथञ्चित्सम्भवे तत्त्यागायोगादपि कामनाया विशेषणत्वमावश्यकमेव"। स्थलान्तरे च

"यद्यपि नियोज्यत्वं विधिकर्त्तृकप्रवर्त्तनारूपनियोगकर्मत्वं धात्वर्थतावच्छेदकप्रवृत्तिरूपफलाश्रयत्वमेव प्रवर्त्तकज्ञानानुकूलव्यापारस्य नियोगत्वे च तादृशज्ञानाश्रयत्वमेव तथापि निरुक्तं पारिभाषिकमेव वा नियोज्यत्वम् अथ वा प्रवर्त्तकज्ञानोपधायकतानिर्वाहकव्यापारो नियोग इति कामनासाधारणं तादृशज्ञानोपधायकत्वं नियोज्यत्वं कामनायास्तद्बोधोपयोगे कार्यताबोधजनकत्वे भवति निर्वहतीत्यर्थः। अन्यथा विशेषणांशे तद्बाधेन कामनाया विशेषणत्वायोगादिति भावः। स चेति कामनायास्तद्बोधोपयोगश्चेत्यर्थः। कामनानन्तरं काम्यसाधनताबोधात् कार्यत्वबोधे सतीति कामनाधीनकाम्यसाधनताबोधस्य कार्यताबोधोपयोगे सतीत्यर्थः साक्षात्तदनुपयोगादिति भावः। काम्यसाधनताबोधस्य काननाधीनत्वं कामनाविषयकत्वेन बोध्यं तथा च कामनाविशिष्टस्य क्रियानियोज्यत्वं कामनायाः क्रियानिष्ठकाम्यसाधनताज्ञानोपयोगितानिर्वाह्यमिति तद्घटकक्रियानिष्ठकाम्यसाधनत्वमपि नियोज्यतान्वयप्रयोजकमिति पर्य्यवसितम्। एवञ्च स्वर्गकामसाधनताया नियोज्यतया स्वर्गकामान्वयप्रयोजकत्वे च सति सत्येव नियोज्यान्वययोग्यता नियोज्यत्वान्वयप्रयोजकयोग्यताघटितनियोज्यान्वयबोधसामग्रीसम्पत्तिः। एवञ्च यागः स्वर्गसाधनीभूत स्वनियोज्यस्वर्गकामकार्यतान्वयधीरेतन्मते तत्र स्वर्गकामे नियोज्यताज्ञानं क्रियायां स्वर्गसाधनताज्ञानञ्च योग्यताज्ञानमेव आर्थोपादानिकरूपमनुपपत्तिमात्रमूलकं वा अपेक्ष्यते इति तस्या अपि स्वर्गसाधनताविषयकतया तन्निर्वाहक-

फलसमयपर्य्यन्तस्थायिव्यापारजनकत्वज्ञानमभ्यर्हितमिति नाद्यत्वक्रियाकार्यताधीरिति समुदायार्थः”।

एवं शुचित्वतत्कालादिरूपकर्त्तृविशेषयुतस्यापि नियोज्यत्वम् अत्र को नियोज्यः इत्याकाङ्क्षोत्थापितस्य शुचित्वात् कालजीवित्वादेरधिकारिविशेषणस्य नियोज्यताप्रयोजकत्वात् इत्याकारे विस्तरः। •[प्रकारिणि त्रि०।

**नियोद्धृ** पु० नि+युध–तृच्। १कुक्कुटे राजनि० २वाहुयु-

**निर्** अव्य० नॄ–क्विप् न दीर्घः। १वियोगे २अत्यये ३आदेशे ४अतिक्रमे ५भोगे ६निश्चिते च गणरत्नमहो०। तत्र यथाक्रममुदाहृतं च यथा १निःसङ्गः २निर्मक्षिकम् ३निर्देशः। ४निष्क्रान्तः ५निर्वेशः। ६निश्चितम्। ७निषेधे मेदि० निर्मक्षिकम्। अयं शब्दः प्रादिः सान्तः रान्तश्च “निसस्तपतावनासेवने” पा० ८।२।१२० सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य “इदुदुपधस्य चकारस्य यो विसर्जनीयः” इति भाष्यप्रोक्तेश्च सान्तत्वम्। “निरः कुषः” पा० ७।२।४६ सूत्रे निर इति निर्देशात् रान्तत्वम्। एवं दुस् दुर् सान्तोरान्तश्च दुष्कृतमित्यत्र भाष्यप्रोक्तेः सान्तत्वम् “दुरुदुरोरधिकरणे” वार्त्ति० सूत्रे दुदुरोरिति निर्देशात् रान्तत्वम्। उपसर्गगणस्त्वते तु तन्त्रोच्चारितः” मनोरमा।

**निरंश** त्रि० निर्गतोऽंशात् निरा०त०। सूर्य्यभुज्यमानराशेः प्रथमे राशेस्त्रिंशांशरूपे भागे तद्राशिभोगस्य अंशशून्यत्वात् तथात्वम्। “राशेः प्रथमभागस्थः निरंशः सूर्य्यः उच्यते” ज्योतिषम्। २रवे राश्यन्तरसंक्रान्तिदिने रघु०। निर्गतो भागो यस्य प्रा० व० वा कप्। ३भागरहिते च। “पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगार्त्तौ भर्त्तव्यास्ते निरंशकाः” याज्ञ० “निरंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा” मनुः। अनंशौवेति पाठः

**निरक्ष** त्रि० निर्गतः अक्षस्तदुन्नतिर्यस्मात् प्रा०व०। अक्षोन्नतिशून्यदेशे स च देशः सू०सि० उक्तो यथा “समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादि नगर्य्यो देवनिर्मिताः। भूवृत्तपादे पूर्वस्यां यमकोटीति१ विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का२ तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या३ प्रकीर्त्तिता। उदक् सिद्धपुरी४ नाम्ना कुरुवर्षे प्रकीर्त्तिता। भूवृत्तपादविवरास्ताश्चान्योन्यं प्रतिष्ठिताः। ताभ्यश्चोत्तरगो मेरुस्तावानेव सुराश्रयः। तासामुपरिगो याति विषुवस्थो दिवाकरः। न तासु विषुवच्छाया नाक्षस्योन्नतिरिष्यते। मेरोरुभयतो मध्ये ध्रुवतारे नभःस्थिते। निरक्षदेशसंस्थानामुभये क्षितिजाश्रये। अतो नाक्षोच्छ्रयस्तासु ध्रुवयोः क्षितिजस्थयोः। नवतिर्लम्बकांशास्तु मेरावक्षांशकास्तथा”।

**निरग्नि** पु० निर्गतोऽग्निस्तत्साध्यकार्य्यं यस्मात् प्रा०व०। श्रौतस्मार्त्ताग्निसाध्यकर्मरहिते द्विजे “एकोद्दिष्टं सदा कुर्य्यात् निरग्निः श्राद्धदः सुतः” उशनाः “वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते” श्रुतौ अग्नित्यागस्य पुत्रहत्यातुल्यपापजनकत्वमुक्तम्। उपपातकशब्दे निरग्नितादोष उपपातकत्वेन मनुनोक्तो दर्शितः।

**निरङ्कुश** त्रि० निर्गतोऽङ्कुश इव प्रतिबन्धको यस्य प्रा०व०। १प्रतिबन्धशून्ये २अनिवार्य्ये जटाध० “विक्रयार्थं हि यो हन्यात् भक्षयेद्वा निरङ्कुशः” भा०अनु०२६०८श्लो०। “निरङ्कुशाः कवयः”। “कुवलयदृशां वामः कामो निकामनिरङ्कुशः” गीतगो०।

**निरङ्ग** त्रि० निर्गतमङ्गं यस्य प्रा०व०। १अङ्गहीने २रूपकालङ्कारभेदे न० सा०द० अलङ्कारशब्दे ४०२पृ०दृश्यम्।

**निरङ्गुल** त्रि० निर्गतमङ्गुलिभ्यः प्रा०त० अच्समा०। अङ्गुलितो निर्गते। [निरुदकादि० अन्तोदात्तताऽस्य।

**निरजिन** न० निर्गतमजिनात् प्रा०त०। अजिनात् निर्गते

**निरञ्चन** न० शालाङ्कोपायाभ्यासरज्वाः प्रथमे षष्ठे भागे कर्त्तव्ये लक्षणभेदे शालाङ्कमुक्तं परिशिष्टे “विंशत्यरत्निः शाला स्यात्तदर्द्धेन तु विस्तृतेति” तत्साधनोपायश्च “प्रमाणार्द्धं वाभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्चनमिति अत्र विंशत्यरत्निर्मूलरज्जुः दशारत्निरभ्यासरज्जुः तस्याः प्रथमे षष्ठे भागे निरञ्चनम् तस्य अर्द्धे पञ्चारत्निमिते श्रोण्यङ्कनार्थमिति” कात्या०श्रौ० ७।१।२४ कर्कः।

**निरञ्जन** त्रि० निर्गतमञ्जनं कज्जलं तदिव समलमज्ञानं वा यस्मात् प्रा०व०। १कज्जलरहिते नेत्रे २दोषरहिते ३अज्ञानशून्ये परमात्मनि पु० “तदा विद्वान् पुण्यपापे विधूय निरञ्जनं परमं साम्यमुपैति” मुण्डकोप० “निरवद्यं निरञ्जनम्” श्वेता०। ४शिवे पु० “दीर्घरोमा दीर्घभुजो दीर्घवाहुर्निरञ्जनः” हरिवं० २२७अ० शिवनामोक्तौ।

**निरति** स्त्री नितरां रतिः, नि+रम–क्तिन् वा। अत्यन्तरतौ।

**निरतिशय** पु० निर्गतोऽतिशयो यस्मात् नितरामतिशयो वा। १अत्यन्तातिशये २साम्येच्चयातिशयशून्ये ३परमेश्वरे

यदपेक्षया कस्याप्यतिशयाभावः ४तस्मिन् त्रि०। “तत्र निरतिशयं सार्वज्ञ्यबीजम्” पात०सू० “यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सार्वज्ञ्यबीजमेतद्विवर्द्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सार्वज्ञ्यबीजस्य सातिशयत्वात् परिमाणवदिति यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुषविशेषः” भा० “व्याचष्टे यदिदमिति। बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकस्य समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं तस्य विशेषणमल्पं बह्विति सार्वज्ञ्यबीजं कारणम्। कश्चित् किञ्चिदेवातीतादि गृह्णाति कश्चिद् बहुतरं कश्चिद्बहुतमम् एतद्विवर्द्धमानं यत्र निष्क्रान्तमतिशयात् स सर्वज्ञ इति तदनेन प्रमेयमात्रं कथितम्। अत्र प्रमाणयति अस्ति काष्ठा प्राप्तिः सार्वज्ञ्यबीजस्येति साध्यनिर्द्देशः निरतिशयकाष्ठा यतः परमतिशयवत्ता नास्तीति। तेन नावधिमात्रेण सिद्धसाधनं, सातिशयत्वादिति हेतुः। यत् सातिशयं तत् तत्सर्वं निरतिशयं यथा कुवलामलकविल्वेषु सातिशयमिति। व्याप्तिं दर्शयति परिमाणवत्। न च गरिमादिगुणैर्व्यभिचार इति साम्प्रतम्, न खल्वऽवयवगरिमावयविनः किन्त्वा, परमाणुभ्य अन्त्यावयविभ्यो यावन्तः केचन तेषां प्रत्येकं वर्त्तिनं गरिमाणं समाहृत्य गरिमवर्द्धमानताभिमानः ज्ञानन्तु प्रतिज्ञेयं समाप्यते इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः” विवरणम्।

**निरत्यय** त्रि० निर्गतोऽत्ययो यस्य प्रा०व०। १अत्ययशून्ये “निरत्ययं साम न दान वर्जितम्” किरा०। अभावेऽव्ययी०। २अत्ययाभावे अव्य०। [निष्क्रान्ते।

**निरध्व** त्रि० निष्क्रान्तोऽध्वनः प्रा०त० अच्समा०। अध्वनो

**निरनुनासिक** त्रि० निर्गतमनुनासिकमनुनासिकत्वं यस्य। अनुनासिकभिन्ने वर्णभेदे “यलो द्विधाऽरो निरनुनासिकः सानुनासिकः” मुग्धबोधः।

**निरनुयोज्यानुयोग** पु० गौतमोक्ते निग्रहस्थानभेदे तल्लक्षणम् तत्रोक्तं यथा “निग्रहस्थानातियोगो निरनुयोज्यानुयोगः” सू० “निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्यः” इति भा०। “अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यन्निग्रहस्थानोद्भावनं तदित्यर्थः एतेनावसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः। सोऽयं चतुर्द्धा छलं जातिराभासोऽनवसरग्रहणञ्च। आभासो व्यभिचारादावसिद्ध्याद्युद्भावनम् अनवसरग्रहणञ्चाकाले एवोद्भावनं यथा त्यजसि चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरम्। एवमवसरमतीत्यकथनमपि, यथा उच्यमानग्राह्यस्यापशब्दादेः परिसमाप्तौ एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽननुभाव्यबोधाविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमुह्यम्” वृत्तिः।

**निरन्तर** त्रि० निर्गतमन्तरं यस्मात् प्रा०ब०। १सन्तते अविच्छिन्ने सन्ततियुक्ते सन्ततिश्च दैशिकी कालिकी च तत्र दैशिकविच्छेदशून्ये “कृतापराधानपि योषितः प्रियान् परिष्वजन्ते शयने निरन्तरम्” ऋतुस० “भूभर्त्तुरायतनिरन्तरसन्निविष्टाः” माघः “निरन्तरास्वन्तरवातवृष्टिषु” कुमा० कालिकविच्छेदशून्ये निरवधौ यथा “कपिलानां सवत्सानां वर्षमेकं निरन्तरम्” भा०व०९७अ० २अपरिधाने ३अनन्तर्द्धाने ४अभेदे ५तादात्म्ये च। निरन्तरालादयोऽप्यत्र “निरन्तराला करिणां कदम्बकैः” [त्रिका०

**निरन्तराभ्यास** पु० कर्म०। १सततावृत्तौ व०व०। २स्वाध्याये

**निरन्वय** त्रि०नास्ति अन्वयः सम्बन्धो यत्र। १सम्बन्धरहिते “का त्वमेकाकिनी भीरु! निरन्वयजने वने” भट्टिः। २स्वामिसमक्षतादृपसम्बन्धशून्ये स्तेयभेदे “स्यात् साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम्। निरन्वयं भवेत् स्तेयं हृत्वाऽपह्नूयते च यत्” मनुः (निरन्वयं) “स्वामिपरोक्षापहृतं स्तेयम्” कुल्लू०। ३स्वामिसम्बन्धशून्ये स्तेये च “परिपूतेषु धान्येषु शाकमूलफलेषु च। निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः” मनुः “निष्पुलाकीकृतेषु धान्येषु शाकादिषु चापहृतेषु अन्वयो द्रव्यस्वामिनां सम्बन्धः येन सह कश्चिदपि सम्बन्धो नास्ति” कुल्लू०। ४निर्वंशे च।

**निरपत्रप** त्रि० निष्क्रान्तः अपत्रपायाः प्रा०त०। निर्लज्जे धृष्टे जटा०। “अप्सरो मेनका ब्रह्मन् निर्दया निरपत्रपा” भा०आ० ८अ०।

**निरपेक्ष** त्रि० निर्गता अपेक्षा यस्य प्रा०ब०। १अपेक्षाशून्ये स्वार्थबोधनाय अन्यापेक्षाशून्ये “निरपेक्षो रवः श्रुतिः” भट्टवार्त्तिकम्। “तत्तत्कर्मसु विनियोगसाधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतेः (श्रूयमाणविभक्तेः) इतरानपेक्षत्वेन विनियोगसाधकत्वात् तथात्वं लिङ्गादीनां तु द्विती-

यःदिश्रुतिं कल्पयित्वा तद्द्वारैव तथात्वमिति सापेक्षत्वमिति भेदः। २आशाशून्ये "अध्यात्मरतिरासीनो निरपेक्षो निरामिषः" मनुः। ३अशक्तविषयके "उक्तानि प्रतिषिद्धानि पुनः सम्भावितानि च। सापेक्षनिरपेक्षाणि श्रुतिवाक्यानि कोविदैः"। "सापेक्षनिरपेक्षाणि शक्ताशक्तविषयाणि" ज्योति॰त॰ रघु॰।

**निरमण** न॰ नियतं रमणम्। नियतरतौ अत्यन्तानुरागे "निरृतिर्निरमणात्" निरु॰ २।७ नियतं रमत्यस्मिन् नि+रम+आधारे ल्युट्। २नियतरागाधारे "अश्वशतं निरष्टं निरमणम्" शत॰ब्रा॰ १३।४।२।५

**निरमित्र** पु॰ पाण्डवनकुलस्य पुत्रभेदे "नकुलस्तु चैद्यां करेणुमतीं नाम भार्य्यामुदवहत् तस्यां पुत्रं निरमित्रं नामाजनयत्" भा॰आ॰४५अ॰। निर्गतोऽमित्रो यस्य। २शत्रुरहिते त्रि॰। ३त्रिगर्त्तराजपुत्रभेदे पु॰"हाहाकारो महानासीत् त्रिगर्त्तानां जनेश्वर!। राजपुत्रं हतं दृष्ट्वा निरमित्रं महारथम्" भा॰द्रो॰ १५७अ॰। ४बार्हद्रथवंश्ये भाविनि नृपभेदे पु॰ "ततो युतायुस्तस्यापि निरमित्रोऽथ तत्सुतः" भाग॰ ९।२२।२० भाविबार्हद्रथवंशोक्तौ।

**निरय** पु॰ निर्गतोऽयोऽत्र प्रा॰ब॰ नीचैरेत्यत्र निर्+इ आधारे अच् वा। नरके अमरः "निरये चैव पतनं यातनाश्च यमक्षये" मनुः।

**निरयण** न॰निर्+अय–भावे ल्युट्। निर्गमने। करणे ल्युट्। निर्गमनोपाये "पश्चात् निरयणं क्वतम्" ऋ॰१०।१२२।६ "निरयणं निर्गमनोपायः" भा॰। [स्वशून्ये अमरः।

**निरर्गल** त्रि॰निर्गतमर्गलमिव प्रतिबन्धो यस्य प्रा॰ब॰। प्रतिब-

**निरर्थ** पु॰ निर्गतोऽर्थो यस्य प्रा॰ब॰। अर्थशून्ये १निष्फले २अभिधेयशून्ये च "निरर्था साप्यमूर्त्तत्वात् पुरुषस्य महीपते" मार्कण्डेयपु॰।

**निरर्थक** त्रि॰ निर्गतोऽर्थो यस्य प्रा॰ब॰ वा कप्। १निष्फले "प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः" भा॰उ॰ ३५अ॰। "इत्थं जन्म निरर्थकं क्षितितलेऽरण्ये यथा मालती" सा॰द॰। २अभिधेयशून्ये ३काव्यदोषभेदे च "निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्" चन्द्रा॰ गौतमोक्ते ४निग्रहस्थानभेदे"वर्णक्रमनिर्देशवन्निरर्थकम्" सू॰ "यथा नित्यः शब्दः कचटतपा जबगडदश् त्वात् झभञ्घढधषवदिति एवम्प्रकारं निरर्थकम् अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा एव क्रमेण निर्दिश्यन्त इति" भा॰। "वर्णानां क्रमेण निर्देशो जबगडेत्यादिप्रयोगस्तत्तुल्यो निर्देशोनिरर्थकं निग्रहस्थानम् अवाचकपदप्रयोग इति फलितार्थः। अवाचकत्वं च शक्त्या निरूढलक्षणया शास्त्रपरिभाषया वा बोध्यं समयबन्धव्यतिरेकेणेति विशेषणीयं तेन यत्रापभ्रंशेन विचारः कर्त्तव्य इति समयबन्धस्तत्रापभ्रंशे न दोषः। झटिति संवरेण तु न दोष इत्युक्तप्रायम्। अस्य सम्भवः प्रमादादित्यवधेयम्" वृत्तिः। क्रमश्चेहाक्षरसमाम्नाये माहेश्वरे सूत्रे यथा पठितास्तथेत्यर्थः।

**निरवकाश** त्रि॰ निर्गतोऽवकाशो यस्य प्रा॰ब॰। १असम्भवत्कालान्तरकर्त्तव्यताके कार्य्ये २अवकाशशून्ये च।

**निरवग्रह** त्रि॰ निर्गतोऽवग्रहः प्रतिबन्धो वृष्टिप्रतिबन्धो नियमनं वा यस्य प्रा॰ब॰। १स्वच्छन्दे स्वतन्त्रे अन्येच्छानधीनप्रवृत्तियुक्ते अमरः। "केचित् क्रोधसमाविष्टा मदान्धा निरवग्रहाः" भा॰भी॰६४अ॰। २वृष्टिप्रतिबन्धशून्ये च।

**निरवद्य** त्रि॰ निर्गतमवद्यं दोषः अज्ञानं रागद्वेषादि वा यस्य। १निर्दोषे उत्कृष्टे "तस्य निरवद्यविद्योद्द्योतेन द्योतितकृत्स्नतोऽयमर्थः" दायभा॰। २अज्ञानशून्ये ३रागादिशून्ये परमात्मनि च "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्वेता॰उ॰।

**निरवयव** त्रि॰निर्गतोऽवयवो यस्य। न्यायमते १अवयवशून्ये परमाण्वाकाशादौ सर्वथावयवशून्ये २ब्रह्मणि च "नाशकारणाभावेन निरवयवद्रव्याणां नाशाभावः" सा॰प्र॰भा॰

**निरवशेष** त्रि॰ निर्गतोऽवशेषो यस्य। अवशेषशून्ये समग्रे "यावत् निरवशेषं भवति तावद् दाहयित्वा" आश्व॰श्रौ॰ २।११।५।

**निरवसित** त्रि॰ निर्+अव+सो–क्त। येन भुक्ते पात्रं संस्कारेणापि न शुध्यति तस्मिन् पात्रबहिष्कृते चण्डालादौ। [शब्दमाला।

**निरवहानिका** स्त्री निर्+अव+हन–ण्वुल्। प्राचीरे

**निरविन्द** पु॰ पर्वतरूपे तीर्थभेदे "अश्मपृष्ठे गयायाञ्च निरविन्दे च पर्वते" भा॰आनु॰ २५अ॰।

**निरशन** अव्य॰ अशनस्याभावः अव्ययी॰। १भोजनाभावे। निर्गतमशनं यस्य प्रा॰ब॰। २भोजनरहिते त्रि॰ "अश्मकुट्टा निरशना दशपक्षतपाश्च ये" हरिवं॰ ४६अ॰।

**निरष्ट** पु॰ निर्गतानि अष्टौ वयोव्यञ्जनानि यस्मात् उ॰स॰। चतुर्विंशतिवर्षीये २अश्वे "अश्वशतं निरष्टं निरमणम्" शत॰ब्रा॰ १३।४।२।५ "अश्वस्य दन्तगतानि वयोव्यञ्जनानि

भवन्ति तेषामेकैकं त्रीणि त्रीणि वर्णाणि अनुवर्त्तते तान्यष्टौ व्यञ्जनानि निर्गतान्यस्मादिति निरष्ट चतुर्विंशतिवर्णीयम्" भा० । निर्+अश—क्त । २निराकृते त्रि० "इषायुधो न वध्यो निरष्टः" कु० १।२३।६ "निरष्टा निराकृताः" भा० ।

**निरस** त्रि० निवृत्तो रसो यस्मात् प्रा०ब० । १निवृत्तरसे रसहीने २निःश्रेणिकात्वर्ये स्त्री राजनि० ।

**निरसन** न० निर्+अस—क्षेपे भावे ल्युट् । प्रत्याख्याने अमरः "स पितृविक्रियां दृष्ट्वा राज्यात्रिरसनं तथा" भा०आश्व० ४अ० । आधारे ल्युट् । २वधे निष्कृ षत्र अस्तनम् क्षेपणम् । ३निष्ठीवने च मेदि० । ष्ठिवु निरसने इत्युक्तेः ष्ठीवनस्य निष्कृ षत्रश्लेष्मादेः क्षेपणरूपत्वात्तथात्वम् ।

**निरस्त** त्रि० निर—अस—क्षेपे कर्मणि क्त । १प्रत्याख्याते निवारिते अमरः "निरस्तगाम्भीर्य्यमपास्तपुष्पकम्" माघः "निरस्तः परावसुः" क्रव्यादाग्निभागत्यागे मन्त्रः । २त्वरितोदिते न० । ३त्यक्तशरे पु० अमरः । ४निष्ठ्यूते ५प्रतिहते ६प्रेषिते त्रि० मेदि० । भावे क्त । ७निष्ठीवने ८निवारणे ९क्षेपणे च न० ।

**निरस्थि** न० निर्गतमस्थि यस्मात् प्रा०ब० । दूरीकृतास्थिके मांसे "मांसं निरस्थि दृषिन्नं पुनर्दृषदि चूर्णितम्" सुश्रुतः ।

**निरहङ्कार** त्रि० निर्गतोऽहङ्कारो यस्य प्रा०ब० । १अभिमानशून्ये देहेन्द्रियादावहममित्यभिमानशून्ये २धनविद्यावत्त्वादिनिमित्तात्मोत्कर्षसम्भावनाहीने च "निर्वैरा निरहङ्कारा विगतक्रोधमत्सराः" भा०आश्व० ३२अ० ।

**निरहम्** त्रि० निर्गतमहमिति बुद्धिर्यस्य प्रा०ब० । अहङ्कारशून्ये "प्रत्यक् प्रशान्तं सुधियोपलम्भं ह्यनामरूपं निरहं प्रपद्ये" भाग० ५।१९।४ श्लो० ।

**निरह्ण** पु० निर्गतमह्नः प्रा०स० टच्समा० "अह्नोऽह्न एतेभ्यः" पा० अह्नादेशः अह्नोऽदन्तात्" पा० नियमात् न णत्वम् "अह्नाह्नान्ताः पुंसि" पा० पुंस्त्वम् । १निर्गते दिने निष्क्रान्तोऽह्नः निरा०त० साधनं प्राग्वत् । २दिनात् निर्गते त्रि० ।

**निराक** पु० निर्+अक—वक्रगतौ भावे घञ् । १पाके २स्वेदे च कर्मणि घञ् । असत्कर्मफले हेमच० ।

**निराकरिष्णु** त्रि० निर्+आ+कृ—शीलार्थे इष्णुच् । निराकरणशीले निवारणशीले "निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणम्" भट्टिः "निराकरिष्णोर्जिनावृतेऽपि" रघुः "निराकरिष्णुता चैव विज्ञेयाः पायसागुणाः" सुश्रुतः ।

**निराकाङ्क्ष** त्रि० निर्गता आकाङ्क्षा अपेक्षा इच्छा या यस्य प्रा०ब० । १शाब्दबोधोपयोग्यपेक्षाशून्ये २इच्छाशून्ये च "तेषां वाक्यं निराकाङ्क्षम्" कात्या०श्रौ० १।३।२ "यावत् पदवृन्दं निराकाङ्क्षं पूर्वापरपठितपदान्तराकाङ्क्षारहितम्" संग्रहव्याख्या । आकाङ्क्षास्वरूपश्च आकाङ्क्षाशब्दे दृश्यम् ।

**निराकार** त्रि० निर्गतः आकारोऽवयवोऽस्य प्रा०ब० । १अवयवहीने २देहाद्याकारवर्जिते ब्रह्मणि च "तेजःस्वरूपो भगवान् निराकारो निराश्रयः" ब्रह्मवै० जन्मख० ७अ० । "निराकरणानवारेऽपि योग्यतावशेन प्रतिबन्धव्यवस्थायाः स्थितत्वात्" सर्वद० । आकार आह्वानम् । ३निर्गताह्वाने च "निराकारा निरानन्दा दीना प्रतिहतस्वना" (अयोध्या) रामा०अयो० ११३अ० ।

**निराकुल** नितरामाकुलः प्रा०ब० । अत्यन्ताकुले "अविकुलवकुल न कुसुमसमूहनिराकुलवकुलकलापे" गीतगो० । "लपालनिक्षेपनिराकुलात्मना" माघः ।

**निराकृति** स्त्री निर्+आ+कृ—क्तिन् । १प्रत्यादेशे निराकरणे निवारणे अमरः । "प्रवयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः" सा०द० । निर्गता आकृतिराकारोऽस्य प्रा०ब० । २निराकारे "योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः" हरिवं० २१८अ० । निर्+आ+कृ—कर्त्तरि क्तिच् । ३पञ्चयज्ञत्यागिनि पु० "यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः" मनुः "यस्तु पञ्च महायज्ञविहीनः स निराकृतिः" कुल्लू०धृतवचनम् । "निराकर्त्ता सुरादीनां स विज्ञेयो निराकृतिः" शब्दार्थचि० धृतवाक्यम् । तस्य देवयज्ञनिराकर्त्तृत्वात् तथात्वम् । ४रोहितमनुपुत्रभेदे पु० "दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । मनोः पुत्रो धृष्टकेतुः पञ्चहोत्रो निराकृतिः" हरिवं० ७अ० ।

**निराकृतिन्** त्रि० निराकृतमनेन इष्टा० इनि । निराकरणकर्त्तरि "अलोलुपोऽव्यथोदान्तो न कृती न निराकृती" भा०शा० २२६अ० ।

**निरातङ्क** त्रि० निर्गता आतङ्का यस्य यस्माद्वा प्रा०ब० । १भयशून्ये २रोगरहिते राजनि० "पुरुषायुषजीविन्यो निरातङ्का निरीतयः" रघुः । ३शिवे पु० ।

**निरातप** त्रि० निर्गत आतपो यस्मात् प्रा०ब० । १आतपशून्ये २रात्रौ स्त्री शब्दच० ।

ततो धैर्य्यमवाप्नुहि” भा०व० २५१अ०। निर्म्मीयतेऽनेन करणे ल्युट्। निर्म्माणसाधने श्कायादौ। “भोगकर्म्मविपाकाशयैरपरामृष्टो निर्म्माणकायमधिष्ठाय सम्प्रदाय प्रवर्त्तकः” कुसुमा०। कायस्य निर्म्माणसाधनत्वात् तथात्वम्। निर्म्माणार्थं कायं निर्म्माणकायमिति हरिदासः तत्तु न युक्तं कायाधिष्ठानस्यैव निर्म्माणार्थत्वेन कायस्य तथात्वाभावात्। निर्गतो मानात् निरा०त०। श्मानातीते। “पूर्व्वपदादिति”पा० असंज्ञायामपि आर्षे णत्वम्। “अनक्षत्रगणं व्योम निर्म्माणं घनगर्जितम्” रा०कि०४४अ०

निर्म्माल्य न० निर्+मल—ष्यञ्। देवदत्ते तद्विसर्जनोत्तरमुच्छिष्टे द्रव्ये “अर्व्वाक् विसर्जनाद्द्रव्यं नैवेद्यं सर्व्वमुच्यते। विसर्जिते जगन्नाथे निर्म्माल्यं भवति क्षणात्” गारुड़पु०। विद्यानन्दनिबन्धे “सूर्य्ये गणपतावुक्ते शाक्ते शैवेऽथ वैष्णवे। तेजश्चण्डमथोच्छिष्टमोजमुच्छिष्टपूर्व्विकाम्। चाण्डालीं शेषिकां चण्डं विष्वक्सेनं क्रमाद्यजेत्। ओजो गणेशः।” “हृदये च वह्निर्देवीं समर्प्य विधिवत्ततः। निर्म्माल्यञ्च शुचौ देशे नैवेद्यं भक्षयेत् सुधीः” तन्त्रान्तरे आ०त० निर्म्माल्यस्य धारणप्रकारादिकं निरूपितं यथा “निर्म्माल्यं शिरसा धार्य्यं सर्व्वाङ्गे चानुलेपनम्। नैवेद्यञ्चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने”। तद्भक्तिशालिने विष्वक्सेनादये “उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः। अद्यादात्मविशुद्ध्यर्थं सर्व्वकामसमृद्धये”। स्वे धाम्नि स्वीयहृदये उद्वास्य संस्थाप्य तथाच कालिकापुराणे “ध्यायंस्तु मन्त्रेणानेन तत्स्थं स्थापयेत् हृदि। तिष्ठ देवि! परे स्थाने स्वस्थानं परमेश्वरि। यत्र ब्रह्मादयः सर्व्वे सुरास्तिष्ठन्ति मे हृदि”। भविष्ये “निर्म्माल्यं नोपभोक्तव्यं रुद्रस्य तपनस्य च। अश्नाति यदि तन्मोहान्नरको पच्यते ध्रुवम्”। निर्म्माल्यत्यागे तु “उदके तरुमूले वा निर्म्माल्यं तस्य संत्यजेत्” कालिकापुराणे “यो वहेद्वारुणं नरः स तन्नैवेद्यभक्षकः” ब्रह्मपु० “अम्बरीष! नवं वस्त्रं कम्बलन्यद्रव्यादिकम्। हत्वा कृष्णोपभोग्यन्तु सदा सेव्यं हि वैष्णवैः” तत्तैककर्त्तरि क्रमात्तथात् स्वदत्तनैवेद्यभक्षणेऽप्यधिकार उक्तः “केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्”। विष्णुयामले “पीत्वा पादोदकं देवि! नैवेद्यं समयसुत्सरेत्। त्यजेत् पादोदकं यस्तु नैवेद्यं वा त्यजेच्च यः। षष्टिवर्षसहस्राणि रौरवे नरके पचेत्”। उद्धरेत् अभ्यवहरेत्। स्कन्दयामले “उद्वास्य देवं स्वे धाम्नि तन्निवेदितमात्मनः। भक्षयेत् पापशुद्ध्यर्थं सर्व्वदा साधकः प्रिये!” शिवधर्म्मोत्तरे रुद्रनैवेद्यभक्षणमुक्तं यथा “अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत्। तदन्नं स्वयमश्नीयात् तत् सर्व्वं विनिवेदयेत्”। “फलं पुष्पञ्च ताम्बूलम् अन्नपानादिकञ्च यत्। अदत्त्वा तन्महादेव्ये न भोक्तव्यं कदाचन”। एतेन यत् पठन्ति “अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणञ्चरेत्” इति तद्देकान्तवैष्णवपरमिति भूषणः। यत्तु “शूद्रान्नं याजकान्नञ्च नैवेद्यञ्चापि वर्जयेत्” इति लैङ्गवचनम्। तन्नैवेद्यत्वेनोपकल्पितानिवेदितपरं लोभादिना भोजननिषेधकं वा यथोक्तं शाम्बे “नोपभुक्त्वा च नैवेद्यं प्रयाति प्रेतयोनिषु।” द्रव्यविशेषस्य कालभेदे निर्म्माल्यतोक्ता तन्त्रसा० योगिनीतन्त्रे यथा “मणिमुक्तासुवर्णानि देवे दत्तानि यानि वै। न निर्म्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च। पट्टशाटी च षण्मासं नैवेद्यं दत्तमात्रतः। मोदकं प्रहरञ्चैव मासार्द्धेन महेश्वरि!। पट्टवस्त्रं त्रिमासाच्च यातयाममहः स्मृतम्। यावदुष्णं भवेदन्नं परमान्नं तथैव च। मस्तकं रुधिरञ्चैव अहोरात्रेण पार्व्वति!। मुहूर्त्तं दधि-दुग्धञ्च आज्यं यामेन शङ्करि। करवीरमहोरात्रं विल्वपत्रं तथैव च। जवारक्तञ्च मार्व्यं च निर्म्माल्यं सार्द्धयामतः। माल्यं वै करवीरस्य पद्मस्य विल्वजस्य च। यामार्द्धेन महेशानि! ताम्बूलं दत्तमात्रतः। अनिर्म्माल्यञ्च दाड़िम्बं तथा विल्वफलं प्रिये!। सौगन्धिकञ्च कदलीं प्रयत्नेन नियोजयेत्। कदलीबीजपूरञ्च दुग्धपक्वं निवेदयेत्।” शिवनिर्म्माल्यधारणे विशेषः ति०त० उक्तो यथा स्कान्दे “निर्म्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति। अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः। नरके पच्यते घोरे तिर्य्यग्योनौ च जायते। ब्रह्महापि शुचिर्भूत्वा निर्म्माल्यं यस्तु धारयेत्। तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते!।” शुचिःस्नानादिनेति शेषः। एवञ्च “स्पृष्ट्वा रुद्रस्य निर्म्माल्यं सवासा आप्लुतः शुचिः” इति कालिकापुराणीयमशुचिविषयम्। अनुपनीतविषयमिति श्रीदत्तः। वस्तु चण्डस्यपरिशिष्टम्। अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात् सर्व्वं याति पवित्रताम्” उदके निर्म्माल्यत्यागश्च गङ्गेतरपरः। यथो… ब्रह्मपु० “गङ्गां पुण्यजलां प्राप्य चतुर्दश विवर्जयेत्। शौचमाचमनं केशं निर्म्माल्यं मलघर्षणम्” इत्युक्ता स्त्री मन्दर०।

**निर्मित** त्रि० निर्+मा—क्त। कृतरचने “निजनिर्मितकारिकावलीम्” सि०मु०।

**निर्मिति** स्त्री निर्+मा—भावे क्तिन्। निर्माणे करणे। “नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति” काव्यप्र०।

**निर्मुक्त** पु०निर्+मुच—क्त। १मुक्तकञ्चुके सर्पे (खोलसछाड़ा साप) निःशेषेण मुक्तः। निष्परिग्रहे २सङ्गरहिते ३वस्त्रशून्ये च अमरः। ४वियुक्ते मेदि० “हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव” रघुः।

**निर्मुट** न०निर्गतं मुटं यस्मात् प्रा०ब०। १करशून्यहट्टे (मुटिशून्यहाट) हारा०। २वनस्पतौ पु० त्रिका० ३सूर्य्ये ४खर्परे पु० हारा०।

**निर्मूल** त्रि० निर्गतं मूलमस्य प्रा०ब०। मूलरहिते “आरुह्य वृक्षान् निर्मूलान् गजः परितुदन्निव” भा०उ० ७४अ०।

**निर्मूलन** न०निर्मूलं+कृतौ णिच—भावे ल्युट्। उत्पाटने

**निर्मृजस्** अव्य० निर्+मृज—“ईश्वरे तोसुन्कसुनौ” पा० तुमर्थे कसुन्। निर्माष्टुमित्यर्थे “सृष्ट्वेव तु वा ईश्वराः पशून्निर्मृजः” ताण्ड्यब्रा०२।२।२। “निर्माष्टुमपगमयितुं विनाशयितुमीश्वराः समर्थाः” भा०।

**निर्मृष्ट** त्रि० निर्+मृज—क्त। प्रोञ्छिते। “निर्मृष्टरागोऽधरः” सा० द०।

**निर्मोक** पु०निर्+मुच्—घञ्। १सर्पकञ्चुके (खोलस) २मोचने ३सन्नाहे ४आकाशे च मेदि०। “निर्मोकपट्टः फणिभिर्विमुक्ताः” रघुः। ४सावर्णिमनोःपुत्रभेदे पु०। “निर्मोकविरजस्काद्याः सावर्णेस्तनया नृप!” भाग०८।१३।६ अत्र निर्मोहेति पाठान्तरं तत्रार्थे।

**निर्मोक्ष** पु० निःशेषेण मोक्षः प्रा० स०। निःशेषेण मोक्षे “अनिर्मोक्षप्रसङ्गः” शा०प्र०भा०।

**निर्मोह** त्रि० निर्गतो मोहो यस्मात् प्रा०ब०। १मोहशून्ये रैवतमनोः २पुत्रभेदे पु० “अरण्यस्य प्रकाशस्य निर्मोहः सत्यवान् कृती। रैवतस्य मनोःपुत्राः” हरिवं० ७अ०। ३सावर्णिमनोःपुत्रभेदे निर्मोकशब्दे दृश्यम्। त्रयोदशमन्वन्तरे काश्यपे ४सप्तर्षिभेदे “त्रयोदशेऽथ पर्य्याये भव्ये मन्वन्तरे मनोः” इत्युपक्रमे “निष्प्रकम्पस्तथात्रेयः निर्मोहः काश्यपस्तथा” हरिवं० ७ अ०।

**निम्नेतुका** स्त्री निर्+म्ना—तुन् संज्ञायां कन् पृषो०। म्लानिशून्ये ओषधिभेदे “निम्नेतुकास्तत्र भवन्ति” पञ्च०भी० ब्रा०१३।८।१६।

**निर्यन्त्रण** न० निर्+यन्त्र—ल्युट्। १निष्पीडने निर्गतं यन्त्रणं यस्मात् प्रा०ब०। २यन्त्रणाशून्ये बाधाशून्ये ३निरर्गले ४उच्छृङ्खले त्रि०जटा०।

**निर्याण** न० निर्याति मदोऽनेन निर्+या करणे ल्युट्। १गजापाङ्गदेशे। भावे ल्युट्। २मोचने ३अध्वनिर्गमे च मेदि०। ४निःसरणे ५प्राणवायोर्देहनिःसरणरूपमरणे च लग्नावधिकस्थानभेदस्थग्रहभेदैस्तज्ज्ञानं वृहज्जातके निरूपितं यथा“मृत्युर्मृत्युगृहेक्षणेन बलिभिस्तद्धातुकोपोद्भवस्तत्संयुक्तभगात्रजो बहुभवो वीर्यान्वितैर्भूरिभिः। अग्न्यम्ब्वायुधजो ज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमे सूर्य्याद्यैर्निधने चरादिषु परस्वाध्वप्रदेशेष्वपि। शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः खबन्धुस्थ१०४योः कूपे मन्दशशाङ्कभूमितनयैर्बन्धुस्तकर्म४।७।१०स्थितैः। कन्यायां स्वजनाद्धिमोष्णकरयोः पापग्रहैर्दृष्टयोः स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जतः। मन्दे कर्कटगे जलोदरकृतो मृत्युर्मृगाङ्के मृगे शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षे स्थिते। कन्यायां रुधिरोत्थशोषजनितस्तद्वत् स्थिते शीतगौ सौरर्क्षे यदि तद्वदेव हिमगौ रज्ज्वग्निपातैः कृतः। बन्धाद्धी५नवमस्थयोरशुभयोः सौम्यग्रहादृष्टयोर्दृक्काणैश्च ससर्पपाशनिगडैः छिद्रस्थितैर्बन्धतः। कन्यायामशुभान्विते ऽस्तमयगे चन्द्रे सिते मेषगे सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मन्दिरे। शूलोद्भिन्नतनुः सुखे४ऽवनिसुते सूर्येऽपि वा खे१० यमे सम्प्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्य५।९।१गैः। बन्धु४स्थे च रवौ१० वियत्यवनिजे क्षीणेन्दुसंवीक्षिते काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते। रन्ध्रास्पदाङ्गहिबुकैर्८।१०।१।४र्लगुडाहताङ्गः प्रक्षीणचन्द्ररुधिरार्किदिनेशयुक्तैः। तैरेव कर्म१०नवमोदय१पुत्र५संस्थैर्धूमाग्निबन्धनशरीरनिकुट्टनान्तः। बन्धुस्तकर्म४।७।१०सहितैः कुजसूर्यमन्दैर्निर्याणमायुधशिखिक्षितिपालकोपात्। सौरीन्दुभूमितनयैः स्वसुखास्पदस्थै२।४।१०र्ज्ञेयः क्षतकृमिकृतश्च शरीरपातः। ख१०स्थेऽर्केऽवनिजे रसातल४गते यानप्रपाताद्वधो यन्त्रोत्पीडनजः कुजेऽस्तमयगे सौरेन्दिनाभ्युद्गमे। विण्मध्ये रुधिरार्किशीतकिरणैर्जूकाजसौरर्क्षगैर्यातैर्वा गलितेन्दुसूर्यरुधिरैर्व्योमास्तबन्ध्वा१०।७।४श्रयान्। वीर्यान्वितवक्रवीक्षिते क्षीणेन्दौ निधनस्थितेऽर्कजे। गुह्योद्भवरोगपीड़या मृत्युः स्यात् कृमिशस्त्रदाहजः। अस्ते७

रवौ मरुधिरे निधनेऽर्कपुत्रे चीणे रसातल४गते हिमगौ खगान्तः। लग्नात्मजाष्टमतपः१।५।८।६स्थिन भौममन्दचन्द्रैस्तु शैलशिखराशनिकुड्यपातैः। द्वाविंशः कथितस्तु कारणं द्रेष्काणो निधनस्य सूरिभिः। तस्याधिपतिर्भवोऽपि वा निर्याणं स्वगुणैः प्रयच्छति। होरानवांशकप्रयुक्तसमानभूमौ योगेक्षणादभिरतः परिकल्प्यमेतत्। मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः स्वेऽशे- क्षिते द्विगुणितस्त्रिगुणः शुभैश्च। दहनजलविमिश्रैर्भस्मसंक्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विड्न्तः। इति शवपरिणामश्चिन्तनीयो यथोक्तः पृथुविरचितशास्त्राद्गत्यनूकादि चिन्त्यम्। गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ विबुधपितृतिरश्चोनारकीयांश्च कुर्युः। दिनकरशशिवीर्याधिष्ठिता त्र्यंशनाथात् प्रवरसमनिकृष्टास्तुङ्गह्रासादनूके। गतिरपि रिपुरन्ध्रत्र्यंशपोऽस्वस्थितो वा गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः। उदयति भवनेऽन्त्ये सौम्यभागे च मोक्षो भवति यदि बलेन प्रोज्झितास्तत्र शेषाः। इति नैर्याणिकाध्यायः"। "नेष्टा योगा जातकं कामिनीनां निर्याणं स्यान्नष्टजन्मद्रिकाणः" इत्युपसंहाराध्याये तत्रोक्तम्। निर्गतं यानमस्मात् प्रा॰ब॰ "संज्ञायां पूर्वपदात्" पा॰ णत्वम्। पशूनां पादबन्धने ६दामनि वैज॰ "निर्याणहस्तस्य पुरो दुधुक्षतः" माघः।

**निर्यातक** त्रि॰ निर्यातं निर्याणं बहिष्करणं तत् करोति णिच्–ण्वुल्। निर्हारके। "अनग्नयश्च ये विप्राः प्रेतनिर्यातकास्तथा" भा॰ अनु॰ २२ अ॰। "स्तेननिर्यातकाश्चैव परदाररताश्च ये" मार्कण्डे २५ अ॰।

**निर्यातन** न॰निर्+यत–णिच् ल्युट्। १वैरशुद्धौ, २प्रतीकारे ३प्रतिदाने ४न्याससमर्पणे च अमरः। ५मारणे हेमच॰। ६ऋणादेः शोधने च। "विगणनऋणनिर्यातनम्" सि॰ कौ॰। "नह्यान्यस्य भवेच्छक्तिर्वैरनिर्यातनं प्रति" हरिवं॰

**निर्यात्य** त्रि॰ निर्+याति–कर्मणि यत्। १शोधनीये २प्रतिदेये च "कन्या चैवं न चान्यस्य निर्यात्यानेन सङ्गता" हरिवं॰ १७७ अ॰।

**निर्याम** पु॰ निर्+यम–घञ्। पोतवाहे हेमच॰।

**निर्यास** पु॰न॰ निर–यस–घञ् अर्द्धर्चा॰। १कषाये २क्वाथे शब्दमा॰। ३वृक्षादिक्षीरे वृक्षात् निर्गत्य कठिनतां याते वृक्षरसभेदे (आठा) रत्नमा॰"शालनिर्यासगन्धिभिः" रघुः। "लोहितान् वृक्षनिर्यासान्" मनुः। ३निषग्रन्थि जलादौ च कंसस्याथ सुखस्वेदो भूभेदान्तरगोचरः। अभवद्रोषनिर्यासः" हरिवं॰ ८७अ॰। निर्यासस्यादूरदेशादिः कुमुदा॰ठच्। निर्यासिक तत्सन्निकृष्टदेशादौ त्रि॰।

**निर्यूष** पु॰ नितरां यूषः प्रा॰ स॰। निर्यासशब्दार्थे शब्दमा॰

**निर्यूह** पु॰ निर्+जह–क पृषो॰। १मत्तवारणे वैजयन्ती तद्दन्ताकारतया निर्मिते २नागदन्ते द्वारवेदिकायां काष्ठभेदे अमरः। ३शेखरे ४आपीडे ५द्वारे ६क्वाथे निर्यासे मेदि॰। "वितर्दिनिर्यूहविटङ्कनीड़ः" माघः। द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः" भा॰आ॰१०८ अ॰ तत्र आपीडे "खड्गकार्मुकनिर्यूहैः शरैश्च विविधैरपि" भा॰ उ॰१८ अ॰। कार्मुकस्य निर्यूहैः आपीड़ैरिव शरैरित्यर्थः। [२पाण्डुरपृष्ठे हेम॰।

**निर्लक्षण** त्रि॰ निर्गतं लक्षणमस्य प्रा॰ब॰। १शुभलक्षणशून्ये

**निर्लिप्त** त्रि॰ निर+लिप–क्त। १लेपरहिते २सम्बन्धशून्ये निःसङ्गे। "निरुपाधिश्च निर्लिप्तो निरीहो निधनान्तकः" ब्रह्मवै॰पु॰।

**निर्लुञ्चन** न॰ निर्+लुञ्च–भावे ल्युट्। विलुषीकरणादौ "नखनिर्लुञ्चनादिभिरपि तत्कार्य्यसिद्धेः" कात्या॰श्रौ॰ १।६।६ सू॰ कर्कः।

**निर्लुण्ठन** न॰ निर्+लुठि–भावे ल्युट्। अपहरणे (लोटा) "अङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः" सा॰द॰।

**निर्लेखन** न॰ निर्+लिख–भावे ल्युट्। १मलादेरपसारणे (आँचड़ान) करणे ल्युट्। २तत्साधने "जिह्वानिर्लेखनं रौप्यं सौवर्णं वार्क्षमेव च" सुश्रुतः।

**निर्लेप** त्रि॰ निर्गतो लेपः सम्बन्धोऽनुलेपनं वा यस्य प्रा॰ब॰। १परिणामहेतुसंयोगादिशून्ये २अनुलेपनरहिते च "लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति महापाशुपताः" कुसुमा॰। "निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" मनुः।

**निर्लोमन्** त्रि॰ निर्गतं लोम यस्य। लोमरहिते (टाक) रोगयुक्ते। तद्रोगस्तु "पट्टस्तत्रस्य हरणात् निर्लोमा जायते नरः" शाता॰ उक्तेः पट्टस्त्रहरणाज्जायते।

**निर्ल्वयनी** स्त्री नितरां लयति अहिरस्याम् त्वचि ल्युट ङीप् पृषो॰। सर्पत्वचि (खोलस) "तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत" वृह॰उप॰। "अहिनिर्ल्वयनी सर्पनिर्मोकः वल्मीके सर्पाश्रये वल्मीकादावित्यर्थः प्रत्यस्ता प्रतिक्षिप्ता मृताऽनात्मभावेन सर्पेण परित्यक्ता मृता शयीत" भा॰।

**निर्वक्तव्य** त्रि॰ निर्+वच–कर्मणि तव्य। अवयवार्थकथनेन प्रतिपाद्ये निर्वाच्यनिर्वचनीयावप्यत्र।

**निर्वचन** न० निर्+वच–भावे ल्युट्। १निरुक्तौ अवयवार्थकथने। २प्रसिद्धे च "न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम्" भा० व० २७ अ०। "सत्यं स्तेने बलं नार्य्यां राज्यं दुर्य्योधने तथा। इति लोके निर्वचनं लोके चरति भारत" भा० व० ३३अ०।

निर्गतं वचनं यस्य प्रा० व०। वचनशून्ये ३तूष्णीमित्यर्थे "माल्येन तां निर्वचनं जघान" कुमा०। ४वचनरहिते वक्तव्यताशून्ये त्रि० "येषां तडागानि महोदकानि वाप्यश्च कूपाश्च प्रतिश्रयाश्च। अन्नस्य दानं मधुरा च वाणी यमस्य ते निर्वचना भवन्ति" भा० व० १९९ अ०।

**निर्वण** त्रि० निर्गतो वनात् निरा०त० प्रनिरन्तरित्यादिना असंज्ञायामपि णत्वम्। वनान्निष्क्रान्ते "निर्वणो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम्" भा०उ० २८अ० अस्य "वनं समासे" पा० समासमात्रे वनान्तत्वेनान्तोदात्तता।

**निर्वपण** न० निर्+वप–भावे ल्युट्। १दाने २अन्नादीनां संविभागे च। "परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि" कात्या० श्रौ० ८।२।१। "अनयैवावृता कार्य्यं पिण्डनिर्वपणं सुतैः" मनुः।

**निर्वर** त्रि० निर्गतो वरो वरणमस्य। १निर्लज्जे कठिने २निर्भये ३सारे च हेमच०। अत्र निर्दर इत्येव पाठः मुद्राद्दोषात् निर्वर इति पाठोऽसाधुः। अतएव मेदिनीकोषे निर्दरं निर्भये सारेऽन्यवत्तु कठिनेऽलपे" इत्युक्तम्।

**निर्वर्णन** न० निर्+वर्ण "सत्यापेति" पा० णिच् भावे ल्युट्। दर्शने त्रिका०।

**निर्वर्त्तित** त्रि० निर्+वृत–णिच्–कर्म्मणि क्त। निष्पादिते।

**निर्वर्त्य** त्रि० निर्+वृत–णिच्–कर्म्मणि यत्। निष्पाद्ये व्याकरणपरिभाषिते कर्मभेदे न० "तन्निवर्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्" हरि० कर्मन्‌शब्दे १७७१ पृ० दृश्यम्।

**निर्वहण** न० निर्+वह–भावे ल्युट्। १नाट्योक्तौ प्रस्तुतकथासमाप्तौ २प्रस्तुताभिनयस्य निर्वाहे, नाटकसन्ध्यादेरङ्गभेदे तस्याङ्गानि सन्ध्यादीनि यथोक्तं सा०द० "सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम्। कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम्। भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च। प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः"। युच्। निर्वहणा निष्ठायाम् स्त्री।

**निर्वाच्** त्रि० निर्+अव–अन्च–क्विप् अवोपसर्गस्य अल्लोपः। निर्गते "तस्मादिमे प्राणा विष्वञ्चोऽवाञ्चोऽनुनिर्वाञ्चि" शां०ब्रा० ७।९।

**निर्वाण** त्रि० निर्+वा–क्त। "निर्वाणोऽवाते" पा० तस्य नः। १शान्ते वह्न्यादौ २चरमाश्रमस्थे मुनौ ३निश्चले ४शून्ये शब्दर०। भावे क्त। ५अस्तगमने ६निर्वृतौ ७गजमज्जने ८सङ्गमे ९अपवर्गे मोक्षे मेदि०। १०विनाशे यादवः ११विश्रान्तौ हेमच०। "निर्वाणोत्थानशयनानि त्रीणि गजकर्म्माणीति" पालकाव्योक्ते १२गजकर्म्मभेदे। "अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः" रघुः। "अनिर्वाणस्य मज्जनरहितस्येति" मल्लि०। "कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम्"। "निर्वाणभूयिष्ठमथास्य वीर्य्यम्" कुमा०। निर्वृतौ "स्वर्लोकस्य गात्रनिर्वाणमत्र" माघः। "यतितव्यं समत्वेन निर्वाणमपि चेच्छत।" "समत्वबुद्धेर्निर्वाणं फलमुक्तं श्रुतौ स्मृतौ सर्वदुःखोपरमणलक्षणं ब्रह्मणि स्थितिः" "स्थित्वाऽस्यामन्तःकालेऽपि ब्रह्म निर्वाणमृच्छति" "स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति" गीता। सर्वदुःखोपरमात्मकत्वात् निरतिशयानन्दरूपत्वाच्च परमपुरुषार्थकैवल्यरूपं ब्रह्म निर्वाणमृच्छति इत्यर्थः। १३आदिगुरुके (ऽ।) त्रिकले मात्रागणभेदे १४विद्योपदेशग्रन्थभेदे यथा निर्वाणतन्त्रादि। नाभिदेशे जप्ये १५प्रणवपुटितमातृकापुटितस्याभीष्टमन्त्रे। "कुल्लुकां मूर्द्ध्नि संजप्य हृदि सेतुं विचिन्तयेत्। महासेतुं विशुद्धे तु षोड़शारे समुच्चरेत्। मणिपूरे तु निर्वाणं महाकुण्डलिनीमयः। स्वाधिष्ठाने कामबीजं राकिणीमूर्ध्नि संस्थितम्। विचिन्त्य विधिवद्द् देवि! मूलाधारान्तिकाच्छिवे!। विशुद्धान्तं स्मरेद्देवि! बिसतन्तुतनीयसीम्। देवीस्थानं द्विजिह्वान्तं मन्त्रमूलादृतं मुहुः"। तत्र निर्वाणं यथा "अथ वक्ष्यामि निर्वाणं शृणु सारहितानघे। प्रणवं पूर्वमुच्चार्य्य मातृकाद्यं समुच्चरेत्। मातृकार्णं समस्ताश्च पुनः प्रणवमुच्चरेत्। एवं पुटितमूलन्तु प्रजपेन्मणिपूरके। एवं निर्वाणमीशानि! यो न जानाति पामरः। कल्पकोटिसहस्रेषु तस्य सिद्धिर्न जायते" आगमविलासतन्त्रम्।

**निर्वाणमण्डप** पु० काशीस्थे मुक्तिमण्डपाख्ये तीर्थभेदे।

**निर्वाणमस्तक** पु० निर्वाणं निर्वृतिर्मस्तकमिव यत्र। मोक्षे त्रिका०।

**निर्वाणरुचि** त्रि० निर्वाणे रुचिरस्य। १मोक्षसाधनासक्ते एकादशमन्वन्तरे २देवभेदे "महर्षिर्धर्मसावर्णिरेकादश आत्मवान्" इत्युपक्रमे "विहङ्गमाः कामगमा निर्वा-

धनच्चयः सुराः" भागवते ८।१३।१२ श्लोकः ।

**निर्वाणी** स्त्री जैनानां १शासनदेवताभेदे हेम०। निर्गता वाणी यस्य वा० कप् न। २वाक्यरहिते तूष्णीम्भूते कपि निर्वाणीकोऽप्यत्र त्रि०।

**निर्वात** त्रि० निर्गतो वातो यस्मात् प्रा० ब०। वायुशून्यदेशे। निर्+वा—क्त निर्वाणोऽवाते पा० न तस्य नः। २निर्गते वाते हेमच०। "अस्तूर्यमिव सूर्येण निवात इव वायुना" भा० स० ३५ अ०।

**निर्वाद** पु० निर्+वद—घञ्। निन्दावादे १लोकापवादे अमरः। "किमात्मनिर्वादकथामुपेक्षे" रघुः। नितरां वादः। २निश्चितवादे चीरस्वामी। अभावेऽव्ययी०। ३वादाभावे अव्य०।

**निर्वाप** पु० निर्+वप—भावे घञ्। १दाने, प्राप्तपितृलोकोद्देशेन २दाने च। "अमावास्यां तु निर्वापात् सर्वकामानवाप्नुयात्" भा० अनु० ८७ अ०।

**निर्वापण** न० निर्+वप णिच्,—वा—वा णिच्—पुक् ल्युट्। १मारणे वधे अमरः। २दाने च हलायु०। (निवान)। ३निर्वाणतासम्पादने। "तत्प्रायःपिण्डसिकतानां वा निर्वापणं प्रसाधनञ्च कर्त्तव्यम्" सुश्रुतः। "दाहपाकज्वरवतां कार्य्यं निर्वापणं भवेत्" सुश्रुतः। "दीपनिर्वापणात् पुंसः कुष्माण्डच्छेदनात् स्त्रियः" ति०त०।

**निर्वार्य्य** न० निर्+वृ—ण्यत्। निःशङ्ककर्मकर्त्तरि सत्वसम्पदा उद्यमेन कार्यकर्त्तरि अमरः। भयविक्रमव्यसनाभ्युदयादौ निर्विकारं मनः सत्वम् तत् सम्पदा सम्पन्नः उद्यमं कुर्वन् योनिःशङ्को भूत्वा कर्म्म कुरुते स निर्वार्य्य इत्युच्यते।

**निर्वासन** पु० निर्+वस—णिच् भावे ल्युट्। पुरादितो वहिष्करणे १निःसारणे २मारणे हिंसने ३विसर्ज्जने च मेदि० "ततो दुर्योधनः क्रूरः कर्णश्च सहसौवलः। तेषां निग्रहनिर्वासान् विविधांस्ते समारभन्" भा०आ० ६१ अ० "निर्वासनञ्च नगरात् प्रव्रज्या च परन्तप!" भा० उ० ८८ अ०।

**निर्वास्य** त्रि० निर्+वस—णिच्—कर्म्मणि यत्। नगरादितो वहिष्कार्य्ये। "कन्यां क्षताङ्को निर्वास्यः स्त्रियं वाऽप्यावकर्त्तयेत्" मनुः। "निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च" याज्ञ०।

**निर्वाह** पु० निर्+वह—घञ्। १कार्य्यसम्पादने २निष्पादने ३समाप्तौ च। "यावता स्यात् स्वनिर्वाहः स्वीकुर्यात्तावदेव तु" नारदीयपु० "स्वतिथ्या कर्मनिर्वाहे" ति०त०।

**निर्विकल्प(क)** त्रि० निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो विशेष्यविशेषणतासम्बन्धो वा यस्मात् प्रा०ब० वा कप्। १वेदान्तोक्ते ज्ञातृज्ञेयादिविभागशून्ये ब्रह्मात्मैकात्म्यविषये अखण्डाकारके एकविषयके विशेष्यविशेषणतासम्बन्धरहिते ज्ञाने, "आत्मारामा विहितरतयो निर्विकल्पे समाधाविति वेणी०। "तत् प्रमा नाप्रमा नापि भ्रान्तं यन्निर्विकल्पकम्। प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत्" इति न्यायोक्ते अलौकिके आलोचनात्मके २ज्ञानभेदे। "ज्ञानं यन्निर्विकल्पकाख्यं तदतीन्द्रियमिष्यते" भाषा०। आलोचनशब्दे ८२६ पृ० दृश्यम्। बौद्धमते निर्विकल्पकज्ञानमेव प्रमाणं कल्पनाशून्यत्वात् तन्निरूपणं सर्वमप्रमाणं यथोक्तं सर्वदर्शनसंग्रहे "ततश्चार्थो द्विविधः ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात् अध्यवसायः सविकल्पकरूपोऽप्रमाणं कल्पाज्ञानत्वात्। तदुक्तम् "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः। ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा। न तद्वस्तु न तज्ज्ञानं शब्दलिङ्गेन्द्रियादिजमिति" च। ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्तस्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तद्भद्रं मणिप्रभाविषयमणिविकल्पन्यायेन पारम्पर्य्येणार्थप्रतिलम्भसम्भवेन तदुपपत्तेः"।

**निर्विकार** पु० प्रकृतेरन्यथाभावः विकारः स निर्गतो यस्मात् प्रा०ब०। जन्मादिषड्भावविकारहीने १परमात्मनि। २विकारशून्ये त्रि०। "त्वयेह भवने मह्यं वस्तव्यं निर्विकारया" हरिवं० ८६अ०। "सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" गीता।

**निर्विचार** त्रि० निर्गतो विचारो यतः प्रा०ब०। १विचाररहिते "रे रे स्वैरिणि! निर्विचारकविते! मास्मत् प्रकाशीभव" चन्द्रालो०। पात० सूत्रोक्ते सूक्ष्मविषयके समापत्तिरूपे ३समाधिभेदे च "एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता" पात० सू०। "तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु

सर्वधर्म्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते एवं स्वरूपं हि तत् भूतसूक्ष्मम् एतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति। प्रज्ञा च स्वरूपशून्येव अर्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते। तत्र महद्वस्तुविषया सवितर्का, निर्वितर्का च सूक्ष्मविषया सविचारा निर्विचारा च एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति" भा० "निर्विचारवैशारद्ये अध्यात्मप्रसादः" सू०। "अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यं यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवति अध्यात्मप्रसादः भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः। तथाचोक्तं "प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान्। भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति" भाष्यम्। [न्द्रे।

**निर्विचित्स** त्रि० निर्गता विचिकित्सा यस्य प्रा०व०। निःस-

**निर्वितर्क** त्रि० निर्गतो वितर्को यस्मात् प्रा० व०। १वितर्कशून्ये पात०सू० उक्ते २समाधिभेदे तल्लक्षणादिकं तत्रोक्तं यथा "स्मृतिपरिशुद्धौ स्वरूपशून्येवाऽर्थमात्रनिर्भासा निर्वितर्का" सू० "शब्दार्थस्मृतिप्रविलये सति प्रत्युदितस्पष्टग्राह्याकारप्रतिभासिततया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः" भा०।

**निर्विन्न** त्रि० निर्+विद–क्त निर्विन्नस्योपसंख्यानात् दस्य नत्वे णत्वद्युत्वे। १निर्वेदयुक्ते २खिन्ने ३प्राप्तवैराग्ये विरक्ते च। "निर्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन" देवीप० भा०।

**निर्विन्ध्य** त्रि० निर्गतः विन्ध्यात् नि०त०। १विन्ध्यपर्वतनिःसृते। तथाभूते २नदीभेदे स्त्री "गोदावरी निर्विन्ध्या पयोष्णी इत्यादि" भाग० ५।२१।८ भारतवर्षनद्युक्तौ। "निर्विन्ध्यायाः पथि भयरवाभ्यन्तरः सन्निपत्य" मेघ०। "नर्म्मदा सुरसाद्याश्च नद्यो विन्ध्यविनिर्गताः। तापी पयोष्णी-निर्विन्ध्या-कावेरीप्रमुखा नदी" विष्णुपु०।

**निर्विशेष** न० निर्गतो विशेषो यस्य प्रा० व०। सर्वदैकरूपे विशेषरहिते परब्रह्मणि। "निर्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः। ये मन्दास्ते तु कल्पन्ते सविशेषनिरूपणैः" विशेषरहिते तुल्यरूपे त्रि०। "प्रवातनीलोत्पलनिर्विशेषम्" कुमा०।

**निर्विष** त्रि० निर्गतं विषं यस्मात् प्रा० व०। १विषरहिते २अविषायां तृणभेदे स्त्री। "निर्विषा कटुका शीता कफवातास्रदोषनुत्। अनेकविषहन्त्री च व्रणनिर्मूलकारिणी" राजनि०। गौरा० ङीष् निर्विषी ३अपामकन्दायां स्त्री। इयं चतुर्विधा भवति "रक्ता श्वेता भृशं कृष्णा पीतवर्णा तथैव च। यथापूर्वञ्च विज्ञेया बल्या श्रेष्ठा गुणोत्तमा। सर्वदोषहरी लेपाङ्गनाश्वयथुनाशिनी। श्लेष्मजान् विंशतिरोगान् सद्यो हन्यात् निषेवणादिति" भावप्र०।

**निर्विष्ट** त्रि० निर्+विश–क्त। कृतनिर्वेशे १कृतभोगे २प्राप्तवेतने लब्धभृतौ ३कृतविवाहे ४कृताग्निहोत्रे च। "ज्येष्ठेऽनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति" उद्वा० त० स्मृतिः। ५भोग्ये च। "स्वनिर्म्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान्" भा० १।२ अ०। ६भुक्ते च "निर्विष्टविषयस्नेहः" रघुः। "निर्विष्टं वैश्यशूद्रयोः" गौतम०। निर्विष्टं वेतनलब्धम्" निर्वेशो भृतिभोगयोरित्युक्तेः" एका० त० रघु०। निर्वेशः भृतिर्वेतनं भोगश्च।

**निर्वीज** त्रि० निर्गतं बीजमस्य। १बीजशून्ये २कारणरहिते पात० उक्ते ३समाधिभेदे पु०।

"तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः" पात० सू० "स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्मात्? निरोधजः संस्कारः समाधिजान् संस्कारान् बाधते इति निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्, व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठः। अतः शुद्धो मुक्त इत्युच्यते" भा० "तस्यापि निरोधे सर्वनिरोधात् निर्वीजः समाधिः। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन सर्वसंस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधे न केवलं प्रज्ञाया इत्यपिशब्दार्थः सर्वस्योत्पद्यमानस्य संस्कारप्रज्ञाप्रवाहस्य निरोधात् कारणाभावेन कार्यानुत्पादनात् सोऽयं निर्वीजः समाधिः। व्याचष्टे स निर्वीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्मात् वैराग्यात् उपजायमानः संस्कारद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृता-

नामध्यतौ संस्काराणां परिपन्थी भवति । ननु वैराग्यजं विज्ञानं यदविज्ञानं प्रज्ञामात्रं बाधतां संस्कारन्त्वविज्ञानं कथं बाधते दृष्टा हि खप्रदृष्टार्थस्मृतिरित्याशयवान् पृच्छति । कस्मादिति उत्तरं निरोधज इति निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यं ततो जातो निरोधजः संस्कारः, संस्कारादेव दीर्घकालनैरन्तर्य्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो ननु विज्ञानादित्यर्थः । स्यादेतन्निरोधजसंस्कारसद्भावे किं प्रमाणं स हि प्रत्यक्षेण नानुभूयते स्मृत्या वा कार्य्येणानुमीयेत न च सर्व्ववृत्तिमात्रनिरोधे प्रत्यक्षमस्ति योगिनः, नापि स्मृतिः तस्य वृत्तिमात्रनिरोधितया स्मृतिजनकत्वासम्भवादित्यत आह निरोधेति । निरोधे स्थितिः चित्तस्य निरुद्धावस्थेत्यर्थः । तस्याः कालक्रमो मुहूर्त्तार्द्धयामयामाहोरात्रादिस्तदनुभवेन । एतदुक्तं भवति वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्त्तार्द्धयामादिव्यापितयानुभूयते योगिना, न च वैराग्यक्षणाक्रमनियततया परस्परमसम्भवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्त्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारः प्रचयएषितव्य इति भावः । ननु छिद्यन्तां प्रज्ञासंस्काराः, निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते अनुच्छेदे वा साधिकारत्वमेव इत्यत आह व्युत्थानेति । व्युत्थानञ्च तस्य निरोधसमाधिश्च असम्प्रज्ञातः तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्यर्थः । व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्ते व्युत्थानप्रज्ञासंस्कारवत्, निरोधसंस्कारस्तु प्रत्युदित एवास्ते चित्ते । निरोधसंस्कारे सत्यपि चित्तमनधिकारवत्, पुरुषार्थजनकं हि चित्तं साधिकारं शब्दाद्युपभोगविवेकख्याती च पुरुषार्थौ संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थो विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम् अपि तु क्लेशवासितमेवेत्याशयवानाह यस्मादिति । शेषं सुगमम्” विव० । २काकजीङ्घायां स्त्री राजनि० ।

**निर्वीर** त्रि०निर्गतो वीरः शूरः पतिः पुत्रो वा यस्य यस्या वा प्रा०ब० । १वीरशून्ये“सेनापीदमहो महद्धनुरपो निर्वीरमुर्वीतलम्” महाना० । २पतिपुत्रविहीनायामवीरायां स्त्रियां स्त्री हेमच० ।

**निर्वृत** त्रि० निर्+वृ—क्त । सुस्थे ।

**निर्वृति** स्त्री निर्+भावे क्तिन् । १स्वास्थ्ये सुखे २मोक्षे हेमच० । “न जातु कामो लभते स निर्वृतिम्” । “सर्व्वर्त्तुनिर्वृतिकरे निवसन्नुपैति” माघः ।

**निर्वृत्त** त्रि० निर्+वृत—क्त । १निष्पन्ने अमरः । “विप्रे न्यूने त्रिभिर्वर्षैर्निर्वर्त्तते शुद्धिस्तु नैशिकी । निर्वृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते” शु० त० अङ्गिराः ।

**निर्वृत्तशत्रु** पु० द्वापरयुगीये यदुवंश्ये नृपभेदे । “कृष्णाग्रजस्तेषु चान्येषु मुख्येषु मधुसूदनः । गुरुमासज्य तं भारं ययौ द्वारवतीं प्रति” “रामे भारं समासज्य युयुधाने च वीर्य्यवान् । अक्रूरे विपृथौ चापि” इत्युपक्रमे “निर्वृत्तशत्रौ विक्रान्ते भङ्गाकारे विदूरथे” इत्यभिहितम् हरिवं० ११७ अ० ।

**निर्वृत्ति** स्त्री निर्+वृत—भावे क्तिन् । निष्पत्तौ “वाचि प्राणे च पश्यन्तो यज्ञनिर्वृत्तिमक्षयाम्” मनुः । “न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः” सां०का० । “यथा दुष्टेन दोषेण यथा चानुविसर्पता । निर्वृत्तिरामयस्यैव संप्राप्तिर्जातिरागमः” माधवनिदानम् । निर्गता वृत्तिर्जीविका यस्य । २जीविकारहिते त्रि० ।

**निर्वेद** पु० निर्+विद—भावे घञ् । १स्वावमाननायाम् । स च व्यभिचारिभावभेदः “निर्वेदो वेगदैन्यश्रममदजडतेत्यादिना व्यभिचारिभावान् विभज्य सा० द० लक्षितो यथा “तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना । दैन्यचिन्ताऽश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्” अस्य व्यभिचारिभावत्वेऽपि क्वचित् स्थायिभावत्वद्योतनार्थं प्राग् निर्द्देशः अतएव “निर्वेदस्थायिभावोऽपि शान्तोऽस्ति नवमो रसः” काव्यप्र० उक्तम् । एतन्मते निर्वेद एव शान्तरसे स्थायिभाव इति भेदः । २परमवैराग्ये “ततः कदाचिन्निर्वेदात् निराकाराश्रितेन च । लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया” भा० शा० “तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च” गीता “जातनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत् । कर्म्मनिर्वेदमुक्त्वा च धर्म्मनिर्वेदमब्रवीत्” भा०आ०२१८अ० । ३खेदे “अनिर्वेदः सदा कार्य्यो निर्वेदाद्धि कुतः सुखम् । प्रयत्नात् प्राप्यते ह्यर्थः कस्माद् गच्छत निर्द्दयाः” १५२ अ० । ४बहुकालेनाप्यसिद्धपदार्थेषु निष्प्रयोजनत्वज्ञाने नानुतापभेदे च । [शब्दे १७१२ पृ० दृश्यम् ।

**निर्वेधिम** पु० सुश्रुतोक्ते कर्णवेधनाकारभेदे कर्णव्यधविधि-

**निर्वेश** पु० निर्+विश—घञ् । १भोगे, २वेतने, ३मूर्च्छने,

मेदि०। ४विवाहे च अमरः। "कालमेव प्रतीक्षेत निर्वे(र्दे)शं भृतको यथा" मनुः। "यथानुक्तनिर्वेशो जन्मकोट्यंहसामपि" भाग० ६।२।७ श्लोकः।

**निर्वेष्टन** न० नितरां वेष्टनमत्र। १सूत्रवेष्टननलिकायां नाडीकारे हारा० प्रा०ब०। वेष्टनरहिते त्रि०।

**निर्वेष्टुकाम** पु० निर्वेष्टुं कामो यस्य तुमोऽन्त्यलोपः। विवोढुकामे। "निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः। अभियुक्तस्तथाऽन्येन राजकर्मोद्यतस्तथा"। आसेधनिषेधे नारदः।

**निर्व्यथन** न० निर्+व्यथ—भावे ल्युट्। १नितरां व्यथने २छिद्रे अमरः। निर्गतं व्यथनं यतः प्रा०ब०। ३व्यथाशून्ये त्रि०।

**निर्व्यापार** त्रि० निर्गतो व्यापारो यस्मात् प्रा०ब०। व्यापारशून्ये तूष्णीं स्थित्यादौ। (तं मणिम्) "दधार मैथिलीकण्ठनिर्व्यापारेण बाहुना" रघुः।

**निर्व्यूढ** त्रि०निर्+वि—वह—क्त। १निष्पन्ने २समाप्ते ३उपपन्ने अप्रतिबन्धे ४यथेष्टवियोगार्हे। यथा स्त्रीणां पतिपुत्रादिधने न निर्व्यूढं स्वत्वं पुंसान्तु तन्निर्व्यूढं स्वत्वम् अप्रतिबन्धकतया यथेष्टविनियोगार्हत्वात्। पुत्रिकारूपाया दुहितुश्च पुत्रोत्पत्त्यनन्तरं पितृधने निर्व्यूढं स्वत्वं पुत्रोत्पत्तेः पूर्वन्तु न निर्व्यूढमिति भेदः इति दायभागमतम्। मिताक्षरामते तु स्त्रीसंक्रान्तधनस्यापि स्त्रीधनतया यथेष्टविनियोगार्हत्वेन तत्र स्त्रीणां निर्व्यूढं स्वत्वम्।

**निर्व्यूह** पु० निर्यूह+पृषो०। १निर्यूहे नागदन्ताकारकाष्ठे हेमच०। "द्वारतोरणनिर्व्यूहध्वजसंबाहशोभिना" भा० व०१६०अ०। प्रा०ब०। २व्यूहरहिते सैन्यादौ त्रि०।

**निर्हरण** न० निःशेषेण हरणम्। १दाहार्थं शवादेर्बहिर्हरणे, निःसारणे च। तस्य निर्हरणादीनि सम्परेतस्य भार्गव!। युधिष्ठिरः कारयित्वा मुहूर्त्तं दुःखितोऽभवत्" शु० त० भागवतवाक्यम्। ३नाशने च "तस्माद्बुवद्भिः कर्त्तव्यं कर्म्मणां त्रिगुणात्मनाम्। वीजनिर्हरणम्" भाग० ७।७।२८।

**निर्हा(र्ह्रा)द** पु० निर्+ह्रद (ह्राद) वा घञ्। शब्दभेदे खगादीनां शब्दे "सारसानाञ्च निर्हादमतोदकमसंशयम्" भा० व० ३११०। "सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिता ननौ" रघुः।

**निर्हार** पु० निर्+हृ—घञ्। १निखातशल्यादेः उद्धरणे २मलमूत्रादित्यागे "आहारनिर्हारविहारयोगाः सुसंवृता धर्मविदा तु कार्य्याः" आ०त०। ३प्रेतदेहस्य दाहार्थं बहिर्नयने, ४यथेष्टविनियोगे च। "न निर्हारं स्त्रियः कुर्युः कुटुम्बात् बहुमध्यगात्। स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया" मनुः।

**निर्हारक** त्रि० निर्हरति बहिर्गमयति निर्+हृ—ण्वुल्। शवादेर्गृहात् बहिष्कारके "प्रेतनिर्हारकाश्चैव वर्ज्जनीयाः प्रयत्नतः" मनुः प्रेतनिर्हारकस्य अपाङ्क्तेयत्वोक्तिर्धनग्रहणेन तन्निर्हारकविषया। धर्मार्थं तन्निर्हारे तु न दोषः "एतद्वै परमं तपो यत् प्रेतमरण्यं हरन्तीति" कुल्लूकभट्टधृतश्रुत्या तद्विधानात्।

**निर्हारिन्** पु० निर्हरति दूरं गच्छति निर्+हृ—णिनि। १दूरगामिगन्धे अमरः। २निर्हरणकर्त्तरि। ३शवादेर्बहिर्निष्कारके त्रि०च।

**निर्हिम** अव्य० हिमस्याभावः अव्ययी०। १हिमाभावे निर्गतं हिमं यतः प्रा० ब०। २हिमशून्ये त्रि०।

**निर्ह्रास** पु० निःशेषेण ह्रासः। नितान्तह्रासे "निर्ह्रास एवैकस्मिन्" आश्व० श्रौ० ६।६।६।

**निलय** पु० निलीयतेऽत्र ली—आधारे अच्। १गृहे २आवासस्थाने च अमरः। "निलयः श्रियः सततमेतदिति" माघः। ३निःशेषेण लये ४अदर्शने। उभयत्र "सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्। प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः" रघुः।

**निलयन** न० निलीयतेऽत्र नि+ली आधारे ल्युट्। नीडादावाश्रये। "निलयनञ्चानिलयनञ्च" तैत्ति०उप० "निलयनं नीडमाश्रयो मूर्त्तस्यैव धर्मः" भा०। "विह्वलं तत् समुद्राभं सभयं भारतातुरम्। बलमासीत् तदा सर्वंस्तते द्रोणार्जुनावुभौ। तावेवास्तां निलयनं तावार्त्तायनमेव च" भा०द्रो० १८८ अ०। भावे ल्युट्। २श्लेषणे सम्बन्धे "उत्तमाङ्गे निलयनं कपोतकङ्कप्रभृतीनाम्" सुश्रु०।

**निलिम्प** पु० नि+लिप कर्त्तरि श। १देवे "जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी" रावणकृतशिवस्तोत्रम्। "येऽस्यां स्थ ध्रुवायां दिशि निलिम्पा नाम देवास्तेषाम्" अथ० ३।२६।५। २स्त्रीगव्यां स्त्री त्रिका०। स्वार्थे क। निलिम्पिका सौरभेय्यां स्त्रीगव्यां स्त्री हेम०।

**निलीन** त्रि० नितरां लीनः। अत्यन्तसम्बद्धे तस्माद्दूरदेशादि कृश्वादि० क। निलीनक तत्सन्निकृष्टदेशादौ त्रि०

**निवचन** न० निरन्तरं वचनम् प्रा० त० । निरन्तरवचने । "तदेतन्निवचनमिवास्ति" शत०ब्रा०२।४।४।४ "निवचनं निरन्तरवचनम्" भा० । अभावे अव्ययी० । २वचनाभावे अव्य० ।

**निवचने** अव्य०निवचनं वचनाभावः एतदन्तत्वं निपातनात् । वचननियमे "मध्ये पदे निवचने च" पा०"अनत्याधाने (उपश्लेषणाभावे) एतैः सह कृञो विभाषया उप०स० । "निवचनेकृत्य निवचने कृत्वे ति वा वाचं नियम्येत्यर्थः" सि० कौ० ।

**निवत्** त्रि० नि+ "उपसर्गाच्छन्दसि धात्वर्थे" पा० "धात्वर्थविशिष्टे साधने वर्त्तमानादुपसर्गादुत्तरे स्वार्थे वतिः स्यात्" सि० कौ० वेदे वति । निम्नगताद्यर्थे "निवतः निम्नगतानित्यर्थः" सि०कौ० । "त्वष्टं निवतस्तपः स्वपस्यया नरः" ऋ०१।१६१।११। "निवत्सु प्रवणदेशेषु" भा० नीचैर्भाववति २निम्नदेशे च "स उद्वतो निवतो याति वेविषत्" ऋ० ३।२।१० । "निवतः नीचैर्भाववतः प्रदेशान्" भा० "श्वघ्नीव निवता चरन्" ऋ०८।४५।३८ । "अपो रीयन्ते निवतेव सिन्धवः" ऋ० १०।४०।९ । "निवतेव प्रवणेनेव" भा० छान्दसः तस्य नः ।

**निवपन** न० नि+वप-भावे ल्युट् । पित्राद्युद्देशेन दाने "कृष्यो वर्षनित्यास्तु कृत्वा निवपनान्युत । तर्पणञ्चाप्यकुर्वन्त" भा० अनु० ९२ अ० । "अत्र वा निवपनम्" कात्या० ७।७।२ "अस्मिन् काले वा उत्तरदेशे सोमनिवपनं भवति" कर्कः ।

**निवर** त्रि० नि+अन्तर्भूतण्यर्थे वृ-कर्त्तरि अच् । १निवारके "स्वादुः से निवरो भुवत्" ऋ० ८।९३।१५ । "निवरो निवारयिता" भा० । नितरां व्रियते वृ-वरणे कर्मणि "ग्रहवृदृनिश्चिगमश्च" पा० अप् । "कुमार्य्यामविवाहितायां स्त्रियां स्त्री सि० कौ० ।

**निवर्त्तन** न० नि+वृत-णिच्-भावे ल्युट् । १निवारणे "सेतुश्च द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च । तोयप्रवर्त्तनात् खेयो बन्ध्यः स्यात् तन्निवर्तनात्" मिताक्षरा । "तथा कराणां दशकेन वंशः । निवर्त्तनं विंशतिसंख्यैः क्षेत्रं चतुर्भिश्च भुजैर्निबद्धम्" लीलावतीपरिभाषिते (१विघा) क्षेत्रभेदे "विप्राणे विषयं ग्रामं ग्रामार्द्धमपि शक्तितः" इत्युपक्रमे "निवर्त्तनशतं वा यो विप्राणे विनिवेदयेत् । सर्वगीर्वाणनिलये स क्रीडति युगावधि । निवर्त्तनशतेनापि यः प्रीणयति केशवम् । शतयोजनविस्तीर्णे स राजा भूतले भवेत्" हेमा०दा० वराहपु० । अन्यथाऽपि निवर्त्तनमानम् यथाह बृहस्पतिः "दशहस्तेन दण्डेन त्रिंशद्दण्डो निवर्त्तनम्" । मत्स्यपु०"दण्डेन सप्तहस्तेन त्रिंशद्दण्डो निवर्त्तनम्" । देशभेदात् शक्त्यपेक्षया वा दाने फलतारतम्यद्योतनाय मानभेदोक्तिः ।

**निवसति** स्त्री नि+वस-आधारे अतिच् । गृहे शब्दरत्ना० ।

**निवसथ** पु० न्युष्यतेऽत्र नि+वस-आधारे अथच् । ग्रामे हेमच० ।

**निवसन** न० न्युष्यतेऽत्र नि+वस-निवासे आधारे ल्युट् । १गृहे शब्दर० । नि+वस-आच्छादने ल्युट् । २वस्त्रे हलायुधः । "प्राप्तनाभिनदमज्जनमाशु प्रस्थितं निवसनग्रहणाय" माघः । "क्षौमनैर्निवसनैः सुमध्यमा" रघुः ।

**निवह** पु० नितरामुह्यते वह-घ । १समूहे अमरः "भाग्ये (११अङ्के) शबरपुलिन्द्रप्रध्वंसकरोऽब्धुनिवहमोचाय" वृ० स०८अ० । नि+वह-अच् । २सप्तवायुमध्ये वायुभेदे । अनिलशब्दे १६६ पृ० दृश्यम् । "निवहो यत्र वा वाति केषाञ्चिच्च सुखप्रदः । न प्रचण्डो न च मृदुः प्रमादी च प्रभञ्जनः" ज्यो०त० ।

**निवाकु** त्रि० नि+वच-बा० घुण् । निवचनशीले । ततः बाह्वा० अपत्यादौ इञ् । नैवाकवि तदपत्यादौ ।

**निवात** पु० निवृत्तो निरुद्धो वा वातोऽस्मात् प्रा०ब० । १दृढकवचे शस्त्राद्यभेद्यकवचे, २आश्रये च अमरः । निवा(वा)त निष्कम्पमिव प्रदीपम्" कुमा० । "निर्या(वा)तनिष्कम्पतया विभाति" रघुः ।

**निवातकवच** पु० हिरण्यकशिपोः पुत्रस्य संह्रादस्य दैत्यस्य पुत्रे १दैत्यभेदे अग्निपु० । निवातमभेद्यं कवचं येषाम् । २दानवभेदे ते च इन्द्रप्रेरितेनार्जुनेन निहतास्तत्कथा भा०व०१६८अध्यायादौ । "निवातकवचानाम दानवा मम शत्रवः । समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत । तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः । तांस्तत्र जहि . कौन्तेय ! गुर्वर्थस्ते भविष्यति" १६८ इत्युपक्रमे ५ अध्यायैस्तद्वधो वर्णितः ।

**निवान्या** स्त्री नितरां वाति गच्छति पात्रत्वेन नि+वा-क-निवः पाता अन्यः परकीयोवत्सो यस्याः । परकीयेण वत्सेन वा स्रुतवत्सा गौर्दुह्यते तस्यां गवि । "अभिस्रुवार्द्धनपिह्ना निवान्या दुग्धे" कात्या०श्रौ० ५।८।१८।

**निवान्यवत्सा** स्त्री निवः पाता अन्यस्मात्वत्सः अन्यवत्सो यस्याः । स्वदुग्धपायिपरकीयवत्सयुक्तायां गवि "निवा-

न्यवत्सामेष्टवै ब्रूयात् तस्यै पयसा जुहुयादार्त्तं वा एतत् पयो यन्निवान्यवत्साया आर्त्तमेतदग्निहोत्रं यन्मृतस्य तदार्त्तेनैव तदार्त्तं निष्कृत्य श्रेयान् भवति” शत०ब्रा० १२।५।१।४ ।

**निवाप** पु० न्युप्यते नि+वप–घञ् । १पित्राद्युद्देशेन दाने २दानमात्रे च अमरः । “मर्त्त्यलोकप्रपन्नानां निवापान् विदधुः पृथक्” । “अनुष्ठ्णन्नोऽस्य निवापदत्तिभिः” रघुः

**नि(नी)वार** पु० नि+वृ–“नौ वृ धान्ये” कर्मणि घञ् वा दीर्घः । नीवाराख्ये धान्यभेदे । नीवाराञ्जलिनाऽपि केवलमहो सेयं कृतार्था तनुः” सा०द० । निवारयति पापानि नि+वारि अच् वा० दीर्घः । दीर्घयुक्तः नदीभेदे स्त्री “नीवारां महितां चापि सुप्रयोगां जनाधिप !” भा० भी०९ अ० । [“कंडूयनैर्दंशनिवारणैश्च” रघुः ।

**निवारण** न० नि+वृ–णिच्–भावे ल्युट् । नितरां वारणे

**निवास** पु० नि+वस–आधारे घञ् । १गृहे २आश्रये च हेमच० “जगन्निवासो वसुदेवसद्मनि” माघः । भावे घञ् । ३वासे “कुम्भकारस्य शालायां निवासं चक्रिरे तदा” भा० आ० १८५ अ० । ततः धान्या० चतुरर्थ्यां क । निवासक तत्सन्निकृष्टदेशादौ त्रि० ।

**निवासिन्** त्रि०नि+वस+णिनि । १निवासकारके “क्रव्यादान् शकुनीन् सर्वांस्तथा ग्रामनिवासिनः” मनुः । “अयानाथा प्रकृतयो मातृबन्धुनिवासिनम्” रघुः ।

**निविड** त्रि०नितरां विडति संहन्यते नि+विड–क । १सान्द्रे घने २नीरन्ध्रे ३दृढे च “गुरुनिविडनितम्बबिम्बभारा” माघः । नितता नासा नि+नासायाः विडच् । ४नतनासिकायां स्त्री हेमच० निनतनासिकायुक्ते ५घ-वटादि त्रि० ।

**निविद्** स्त्री नि+विद–करणे क्विप् । १वाचि निघण्टुः । वैश्वदेवस्य शस्त्रे शंसनीये २मन्त्रपदभेदे च “कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे, यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा” छ०उप० । “स याज्ञवल्क्योऽपि एतयैव वक्ष्यमाणया निविदा प्रतिपेदे, यां संख्यां पृष्टवान् शाकल्यो यावन्तो यावत्सङ्ख्याका देवा वैश्वदेवस्य शस्त्रस्य निविदि, निविन्नाम देवतासंख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवे शस्त्रे शस्यन्ते तानि निवित्संज्ञकानि तस्यां निविदि यावन्तो देवाः श्रूयन्ते तावन्तो देवा इति । का पुनः सा निविदिति तानि निवित्पदानि प्रदर्श्यन्ते । त्रयश्च त्री च शता त्रयश्च देवा देवानां त्रीणि च शतानि पुनरप्येवं त्रयश्च त्री च सहस्राण्ये तावन्तो देवाः” भा० । ३वक्ष्यमाणन्यूङ्खशब्दार्थे “पदैरामोति निविदः” यजु०१९।२५ “पदैः निविदः न्यूङ्खानाप्नोति” वेददी० “सावित्रं शस्त्रैकाहिके निविदं दधाति” “चतुर्थकं द्यावापृथिवीयं शस्त्रैकाहिके निविदं दधाति” “आर्भवं शस्त्रैकाहिके निविदं दधाति” वैश्वदेवं शस्त्रैकाहिके निविदं दधाति” इत्यादीनि शत० ब्रा० १३।५।१।११ पठितानि ।

**निविद्धान** न० निविद् न्यूङ्खो धीयतेऽस्मिन् धा–आधारे ल्युट् । ऐकाहिके यज्ञादौ “तद्यदैकाहिकानि निविद्धानानि भवन्ति” शत०ब्रा० १३।५।१।१२ यत्र यत्र निविद् धीयते तत् निविदिति शब्दे उक्तम् दृश्यम् ।

**निविरीस** स्त्री निनता नासा “नेर्विडज्विरीसचौ” पा० विरीसच् दन्त्योच्चारणसामर्थ्यात् न षत्वम् । १नतायां नासिकायां २तद्युक्तपुरुषादौ त्रि० । ३सान्द्रे घने जटा० “बहुनिविरीसनितम्बभारखेदि” माघः ।

**निविष्ट** त्रि०नि+विश–क्त । १चित्ताभिनिवेशयुक्ते २एकाग्रे च “भवन्ति साम्येऽपि निविष्टचेतसाम्” कुमा० ।

**निवीत** न० नि+व्यञ–क्त व्याप्तिः । १कण्ठलम्बिते यज्ञसूत्रे । व्येञ् संवरणे क्त संप्रसारणादि । २प्रावृतवस्त्रे अमरः “उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जनम्” कूर्मपु० “अधो वासः प्रतिसृच्योष्णीषं संवेष्ट्य निवीते” कात्या०श्रौ०१५।५।१२ “निवीतञ्च कण्ठे सज्जनम्” कर्कः ।

**निवीतिन्** त्रि० निवीतमस्त्यस्य इनि । कण्ठलम्बितयज्ञसूत्रयुक्ते “कृतोपवीतो देवेभ्यो निवीती च भवेत्ततः । मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा” ग्राङ्कि०त०ब्रह्मपु० “उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजैः । सव्ये प्राचीनावीती निवीती कण्ठसज्जने” मनुः । स्त्रियां ङीप् “लघुत्तरासङ्गवतीं निवीतिनीम्” कुमा० ।

**निवृत्** स्त्री “जनाधिकेनैकेन निवृद्भुरिजौ” छन्दोऽनुक्रमणिकायां कात्यायनोक्तेषु गायत्र्याद्यष्टच्छन्दःसु एकाक्षरन्यूनपादके छन्दोभेदे । [२परिवृते त्रि० ।

**निवृत** न० नि+वृ–क्त । (उड़नी) १उत्तरीये स्वामी ।

**निवृत्त** न० नि+वृत–भावे क्त । १निवृत्तौ यत्नभेदे चित्तस्य विषयेभ्य २उपरमे च । ३अभावे न० । नञस्तत्वभावत्रे “निवृत्तपदार्थक” इत्युक्तम् । “तस्यार्थः निवृत्तमभावः पदार्थो यस्येति नपुंसके भावे क्त इति” वैयाकरणभूषणे

उक्तं, हरिणाप्युक्तं यथा "अभावो वा तदर्थस्तु भाष्यस्य हि तदाशयात्" । कर्त्तरि क्त । ४निवृत्तियुक्ते त्रि० "निवृत्ततर्षैरुपगीयमानात्" भाग० १।१अ०। "निवृत्ते भरते धीमानत्रेरामस्तपोवनम्" भट्टिः । ५निवृत्तिपूर्वके कर्मणि न० "प्रवृत्तञ्च निवृत्तं च द्विविधं कर्म वैदिकम् । सर्गादौ सृजता सृष्टं ब्रह्मणा वेदरूपिणा" हेमा० व्रत० भृगुः । धर्मभेदस्य निवृत्तिपूर्वकत्वादुपचारादस्य निवृत्तपदव्यपदेश्यता ।

**निवृत्तसन्तापन** न० निवृत्तं सन्तापनं यस्य । सन्तापविहीने। तस्मै हितम् छ । निवृत्तसन्तापनीय रसायनभेदे यथोक्तं सुश्रुते "यथा निवृत्तसन्तापा मोदन्ते दिवि देवताः । तथौषधीरिमाः प्राप्य मोदन्ते भुवि मानवाः। अथ सप्त पुरुषा रसायनं नोपयुञ्जीरन् तद्यथा अनात्मवानलसो दरिद्रः प्रमादी व्यसनी पापकृद्भेषजापमानी चेति। सप्तभिरेव कारणैर्न सम्पद्यते । अज्ञानादनारम्भादस्थिरचित्तत्वाद्दारिद्र्यादनायत्तत्वादधर्मादौषधालाभाच्चेति" औषधशब्दे दृश्यम् ।

**निवृत्तात्मन्** त्रि० निवृत्तः विषयेभ्य उपरत आत्मा अन्तःकरणं यस्य । १विषयरागशून्यचेतस्के २विष्णौ पु० "अनिवर्त्ती निवृत्तात्मा" विष्णुस० "स्वभावतो विषयेभ्यो निवृत्त आत्मायस्येति विग्रहः" भा० ।

**निवृत्ति** स्त्री नि+वृत भावे क्तिन् । न्यायमतसिद्धे १यत्नभेदे "प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् । एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् । निवृत्तिस्तु भवेद् द्वेषात् द्विष्टसाधनधीर्धियः" भाषा० "द्विष्टसाधनताज्ञानस्य दुःखसाधनविषयकनिवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति" मुक्ता० मीमांसकमते कलञ्जाधिकरणशब्दे "प्रवृत्त्युपाधिना विनाशं प्राप्स्यन् प्रागभाव एव प्रवृत्तिनिराकरणस्य साध्यमानो निवृत्तिरित्युच्यते" इत्युक्ते २पदार्थे । अधिकं तच्छब्दे नञ्शब्दे च दृश्यम् "औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः" सां०का० ।

**निवृत्त्यात्मन्** त्रि० निवृत्तिः आत्मा स्वरूपं यस्य । निषेधे "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" ति०त० ।

**निवेश** पु० नि+विश–भावे घञ् । १प्रवेशे २उपवेशने आधारे घञ् । ३निवेशाधारे गृहादौ अस्य क्षुभ्ना० उत्तरपदस्थस्य संज्ञायामपि न णत्वम् शरनिवेशः । "श्रीमतां हरिसखवाहिनीनिवेशः" किरा० । आधारे घञ् । ४शिविरे भावे घञ् । ५उद्वाहे विवाहे मेदिनिकोषः ।

**निवेशन** न० नि+विश–आधारे ल्युट् । १गेहे २नगरे हेमच० । ३निवेशाधारे पृथिव्यां स्त्री ङीप् । "स्योना पृथिवि ! नो भवानृक्षरा निवेशनी" "निविशन्ति जना यस्यां साधुप्रतिष्ठाना पृथिवी" वेददी० । भावे ल्युट् । ४प्रवेशे ५स्थितौ च जटाध० नि+विश+णिच्–भावे ल्युट् । ६विन्यासे "सा गौरसिद्धार्थनिवेशवद्भिः" कुमा० ।

**निवेष्य** न० नि+विष–भावे ण्यत् । १व्याप्तौ । कर्मणि ण्यत् । २व्याप्ये त्रि० वा० कर्त्तरि ण्यत् । ३व्यापके देवभेदे पु० "निवेष्यं (देवभेदम्) मूर्द्ध्नि" यजु० २५।२। ४आवर्त्ते ५नीहारजले पु० "अथ निवेष्यं गृह्णाति" शत०ब्रा० ५।३।४।११ "निवेष्य आवर्त्तः" भा० निवेष्ये भवः यत् । ६तत्र भवे त्रि० । ७तत्र भवे रुद्रे पु० "हृदय्याय च निवेष्याय च" यजु० १६।४४ "निवेष्य आवर्त्तः नीहारजलं वा तत्र भवो निवेष्यः" वेददी० ।

**निव्याधिन्** पु० नितरां विध्यति हन्ति शत्रून् नि+व्यध–णिनि । १रुद्रभेदे "नमः सहमानाय निव्याधिने" यजु० १६।२०। २नितान्तव्याधके त्रि० ।

**निश्** स्त्री नितरां श्यति तनूकरोति व्यापारान् शो–क पृषो० । १रात्रौ २हरिद्रायाञ्च निशाशब्दस्य शसादौ भत्वे च वा निश् आदेशः । "विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि" मनुः निशाशब्दे दृश्यम् ।

**निशठ** पु० बलदेवपुत्रभेदे "रामाच्च निशठो जज्ञे रेवत्यां दयितः सुतः" हरिवं० ३६अ० ।

**निशमन** न० नि+शम–णिच्–ल्युट् वा ह्रस्वः । १दर्शने दृष्टौ २श्रवणे च मेदि०। निपूर्वकात् शमयतेः श्रवणार्थत्वं यथा "निशामय तदुत्पत्तिं विस्तरात् गदतो मम" देवीमा० । "अहिद्विषस्तद्भवता निशम्यताम्" । "निशम्य ताः शेषगवीरभिधातुमधोक्षजः" माघः

**निशा** स्त्री नितरां श्यति तनूकरोति व्यापारान् शो–क । १रात्रौ २हरिद्रायाम् "अजगोपतियुग्मञ्च कर्किधन्विमृगा निशा" इति ज्योतिषोक्तेषु ३मेषादिराशिषु च । शसादौ भत्वे च वा निश् आदेशः । "अग्निहोत्रं जुहुयात् आद्यन्ते द्युनिशोः सदा" मनुः "न स्नानमाचरेत् भुक्त्वा नातुरो न महानिशि" मनुः "संविशत्र कुशशयने निशां निनाय" रघुः "त्रिभागशेषासु निशासु च क्षणम्" कुमा० "निशातुषारैर्नयनाम्बुकल्पैः" भट्टिः । तत्पुरुषेऽस्य "विभाषा सेनासुराच्छायाशालानिशानाम्",

क्लीवता "श्वनिशं श्वनिशा वा" सि॰ कौ॰। समाहारद्वन्द्वेऽपि क्लीवता। "इन्द्रियाणां जये योगं स याति चेद्दिवानिशम्" मनुः।

**निशाकर** पु॰ निशां करोति "दिवाविभानिशेति" पा॰ क्ल–ट उप॰स॰। १चन्द्रे २कर्पूरे च अमरः। "द्विजावलीबालनिशाकरांशुभिः" माघः "वक्क्लेऽपि गते निशाकरः" कुमा॰। ३कुक्कुटे शब्दरत्ना॰।

**निशाख्या** स्त्री निशायाः आख्या आख्या यस्याः। निशाह्वयायां हरिद्रायाम् अमरः।

**निशाचर** पुंस्त्री निशायां चरति चर–ट। १राक्षसे २शृगाले ३पेचके ४सर्पे च मेदि॰ "अर्जुनस्य वचः श्रुत्वा वित्रस्तोऽभूविशाचरः" भा॰वन॰१५२अ॰ "तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः" रघुः स्त्रियां जातित्वात् ङीष्। ५रात्रिचारिमात्रे त्रि॰ स्त्रियां टित्वात् ङीप्। सा च ६कुलटायां ७केशिनीनामगन्धद्रव्ये च जटाधरः। "राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी। गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा" रघुः। ८पिशाचादौ त्रि॰।

**निशाचरपति** निशाचराणां भूतानां पतिः। प्रमथपतौ १शिवे "ततो हरो जटी स्थाणुर्निशाचरपतिः शिवः" भा॰द्रो॰५२अ॰ २राक्षसेश्वरे रावणे च। [त्रिका॰।

**निशाचर्मन्** पु॰ निशाया चर्मेव आवरकत्वात्। अन्धकारे

**निशाजल** न॰ निशाजातं जलम् शा॰त॰। हिमजले त्रिका॰।

**निशाट** पुंस्त्री निशायामटति अट–अच्। १पेचके हेमच॰ स्त्रियां जातित्वात् ङीष्। २निशागतियुक्तमात्रे त्रि॰

**निशाटक** पु॰ निशेव कृष्णत्वात् अटति निशायामटति वा अट–ण्वुल्। १गुग्गुलौ राजनि॰। २रात्रिचरमात्रे त्रि॰।

**निशाटन** पुंस्त्री निशायामटति अट–ल्यु। १पेचके हला॰ स्त्रियां जातित्वात् ङीष्। २रात्रिचरमात्रे त्रि॰ स्त्रियां टाप्।

**निशात** त्रि॰ नि+शो–क्त पक्षे इत्वाभावः। तेजिते तीक्ष्णीकृते "पुराणि दुर्गाणि निशातमायुधम्" माघः "तमुद्यतनिशातासिं प्रत्युवाच जिजीविषुः" भट्टिः।

**निशात्यय** पु॰६त॰। १निशावसाने। ७त॰। २प्रभाते च हेमच॰

**निशाद** पु॰ निशायामत्ति अद–अच्। १रात्रिभोजिनि २निषादे रमानाथः। [शब्दार्थकल्पतरुः।

**निशादर्शिन्** पु॰ निशायां पश्यति दृश–णिनि। पेचके श॰

**निशादि** पु॰ ६त॰। सायंसन्ध्यायां राजनि॰।

**निशान** न॰ नि+शो–भावे ल्युट्। तीक्ष्णीकरणे तेजने "क्रमादेतेऽत्र सन्देहे चान्तिनिन्दाविचारणे। निशानाऽर्जवनिन्दासु रुगजयेऽपि कितोमतः" मुग्धबो॰। "तेषां (शस्त्राणां) निशानार्थं शाल्मलिशिलामाषवर्णम्" सुश्रुतः

**निशानाथ** पु॰ ६त॰। १चन्द्रे "अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः। प्रवासी सुखमायाति सौख्यैर्भोगसमन्वितः" षट्पञ्चाशिका। २कर्पूरे च अमरः।

**निशान्त** न॰ नितरां शाम्यते विश्रम्यतेऽत्र आधारे क्त। १भवने अमरः। "तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं विवेश" रघुः "निशान्तनारीपरिधानधूननेत्यादि" माघः ६त॰। २निशायाः अन्ते। ७त॰। ३उषसि। "न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्" मनुः। प्रा॰त॰। ४नितान्तशान्ते च मेदि॰। ततः उत्करा॰। चतुरर्थ्यां छ। निशान्तीय तत्सन्निकृष्टदेशादौ त्रि॰।

**निशान्ध** त्रि॰ निशायामन्धः ७त॰। १रात्र्यन्धे नक्तान्धशब्दे दृश्यम्। २जतुकालतायां स्त्री रात्र्यन्धसूचकयोगभेदो बृहज्जातके उक्तो यथा "शूरःस्तब्धो विकलनयनो निर्घृणोऽर्के ततुस्थे मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः"। "सिंहलग्ने तत्रस्थे चार्के निशान्धः रात्र्यन्धो भवति" भट्टोत्पलः।

**निशापति** पु॰ ६त॰। १चन्द्रे २कर्पूरे च अमरः "खसखिभुक्तिसंयुक्ता मध्यभुक्तिर्निशापतेः" सू॰सि॰।

**निशापुत्र** पु॰ निशायाः पुत्र इव। खेचरे नक्षत्रादौ तेषां रात्रौ पुष्पज्योतिष्कत्वात् रात्रिपुत्रतुल्यत्वम्। "खेचराश्च निशापुत्रास्तथा पातालवासिनः" हरिवं॰ २२६अ॰।

**निशापुष्प** न॰ निशायां पुष्प्यति पुष्प–विकाशे अच्। कुमुदे उत्पले राजनि॰।

**निशाबल** पु॰निशायां बलं वीर्यमस्य। मेषवृषधनुःकर्कटमिथुनमकराख्येषु षट्सु राशिषु यथोक्तं बृहज्जातके "गोऽजाश्विकर्किमिथुना सस्रगा निशाख्याः पृष्ठोदया विमिथुनाः कथितास्तएव। शीर्षोदया दिनबलाश्च भवन्ति शेषा लग्नं समेत्युभयतः पृथुरोमयुग्मम्"। "निशाख्या निशाबलसंज्ञा उक्तरत दिनबला इत्युक्तेरत्रापि निशाबला इति, व्याख्यातं तत्प्रयोजनं, यात्रायां तत्रोक्तं यथा च "शस्तं दिवा दिनबले निशि नक्तवीर्ये राशौ विपर्ययमतो गमनं न शस्तम्"। नक्तवीर्यादयोऽप्यत्र।

**निशाभङ्गा** पु॰निशाया हरिद्राया भङ्गः इव भङ्गः पत्त्रमस्याः। दुग्धपुच्छाग्राम् (दुधमेवा) शब्दच॰।

**निशामणि** पु० निशायां मणिरिव प्रकाशकत्वात् । १चन्द्रे त्रिका० २कर्पूरे च ।

**निशामन** पुंक्ली नि+शम–णिच्–ल्युट् । १दर्शने २आलोचने च मेदि० ३श्रवणे हेमच० ।

**निशासुख** न० ६त० । प्रदोषे "स चोपेन्द्रो वृषं हत्वा कान्तचन्द्रे निशासुखे" हरिवं० ७८अ० "व्रतं निशासुखे पाद्मम्" प्रा०त० ।

**निशामृग** पुंस्त्री निशाचरः मृगः पशुः शाक०त० । शृगाले शब्दर०। स्त्रियां जातित्वात् ङीष् ।

**निशारण** न० नि+शॄ–हिंसायां स्वार्थे णिच्–भावे ल्युट् । १मारणे अमरः । स्वार्थे णिजभावे निशरणमप्यत्र ।

**निशारत्न** न० निशायां रत्नमिव प्रकाशित्वात् । १चन्द्रे हेमच० २कर्पूरे च ।

**निशारुक** पु० १सङ्गीतशास्त्रप्रसिद्धे रूपकभेदे यथा "द्रुतः प्लौढाऽथ खचरो विभवश्चतुरक्रमः । निशारुकः प्रतितालः कथिताः सप्त रूपकाः" तस्य लक्षणं यथा "लघु द्वन्द्वं गुरुद्वन्द्वं तन्न्यासतालकः स्मृतः । चतुर्विंशतिवर्णैस्तु रसे हास्ये निशारुकः" सङ्गीतदामोदरः । स च तालविशेषः । तथा हि "प्रविश्य नर्त्तको रङ्गं विकीर्य्य कुसुमादिकम् । निशारुकेण तालेन कोमलं नृत्यमाचरेत्" सङ्गीतदा०। २नितान्तहिंसके त्रि० । राजनि०।

**निशावन** पु० निशानां हरिद्राणामिव वनमत्र । शणवृक्षे

**निशाविहार** पुंस्त्री निशायां विहारोऽस्य । राक्षसे "इत्थं प्रवादं युधि संहारं प्रचक्रतुः रामनिशाविहारौ" भट्टिः । स्त्रियां जातित्वात् ङीष् ।

**निशावृन्द** न० ६त० । रात्रिगणे शब्दरत्ना० ।

**निशावेदिन्** पु० निशा तन्मानं तत्परिच्छेदं वेदयति रुतेन विद्+णिच्–णिनि । कुक्कुटे हेमच० ।

**निशाहस** पु० निशायां हसति पुष्पविकाशेन हस–अच् । कुमुदे त्रिका० । [हरिद्रायाम् अमरः ।

**निशाह्वा** स्त्री निशाया आह्वा आह्वाऽभिधानं यस्याः ।

**निशित** त्रि० नि+शो–क्त पक्षे इत्वम् । १शाणिते तेजिते २लौहे न० राजनि०। आधारे क्त । ३निशीथे स्त्री "निशितायां निर्वमेञ्जिशितायां हि रक्षांसि प्रेरते" तैत्ति० स०२।२।२।२

**निशिति** स्त्री नि+शो–कर्मणि क्तिन् । तनूकृते "आहूतिं निशितिं मर्त्यो नशत्" ऋ०६।२।५ "निशितिं तनूकृताम्" भा० ।

**निशिपालक** न० पञ्चदशाक्षरपादके १छन्दोभेदे "निशिपालकमिदं भजसनाश्च रः" वृ०टीका० । २निशिपालके प्रहरिभेदे पु० ।

**निशिपुष्पा** स्त्री निशि रात्रौ पुष्पति पुष्प–अच् अलुक्स०। शेफालिकायाम् । पाककर्णेति ङीष् । निशिपुष्पीत्यप्यत्र

**निशीथ** पु० निशेरतेऽत्र नि+शी–आधारे थक् । १अर्द्धरात्रे अमरः । "यन्निशीथादधो भवेत्" ति०त० २रात्रिमात्रे मेदिनिः । "निशीथदीपाः सहसा हतत्विषः" रघुः ।

**निशीथिनी** स्त्री निशीथोऽस्त्यस्या इनि । रात्रौ अमरः ।

**निशीथिनीश** पु० ६त० । १चन्द्रे हला० । २कर्पूरे च ।

**निशुम्भ** पु०नि+शुनभ–भावे घञ् । १वधे हेमच० । २हिंसने ३मर्दने "प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविभङ्गोद्यतः" वीरच०। ४असुरभेदे "कश्यपस्य दनुर्नाम भार्य्यासीद्द्विजसत्तम ! । तस्यास्तु द्वौ सुतावास्तां सहस्राक्षाद्बलाधिकौ । ज्येष्ठः शुम्भ इति ख्यातो निशुम्भश्चापरोऽसुरः । तृतीयो नमुचिर्नाम महाबलसमन्वितः" वामनपु०५२अ०। "पुरा शुम्भनिशुम्भाभ्यामसुराभ्यां शचीपतेः । त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात्" देवीमा० । देव्या तस्य वधकथा "शूलहस्तं समायान्तं निशुम्भममरार्द्दनम् । हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका । भिन्नस्य तस्य शूलेन हृदयान्निःसृतोऽपरः । महाबलो महावीर्य्यस्तिष्ठेति पुरुषो वदन् । तस्य निष्क्रामतो देवी प्रहस्य स्वनवत्तदा । शिरश्चिच्छेद खड्गेन ततोऽसावपतद्भुवि" मार्कण्डपु० ८८अ०। अन्योऽपि निशुम्भासुर आसीत् यथाह देवीमाहा० "वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे । शुम्भो निशुम्भश्चैवान्यावुत्पत्स्येते महासुरौ । नन्दगोपगृहे जाता यशोदागर्भसम्भवा । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी" मार्क०९१अ०। "तत्रैव त्वां भगिन्यर्थे गृहीष्यति स वासवः । कुशिकस्य तु गोत्रेण कौशिकी त्वं भविष्यसि । स ते विन्ध्ये नगश्रेष्ठे स्थानं दास्यति शाश्वतम् । ततः स्थानसहस्रैस्त्वं पृथिवीं शोभयिष्यसि । तत्र शुम्भनिशुम्भौ द्वौ दानवौ नगचारिणौ । मांश्च कृत्वा मनसि तौ सानुगौ नाशयिष्यसि" हरिवं० ५८अ० ।

**निशुम्भन** न० नि+शुनभ–भावे ल्युट् । मारणे ।

**निशुम्भमर्दिनी** स्त्री निशुम्भं मृद्नाति मृद–णिनि ६त० । दुर्गायाम् अमरः । तत्कथा निशुम्भशब्दे दृश्या । [त्रि०।

**निशुम्भिन्** पु०नि+शुनभ–णिनि । १बुद्धभेदे त्रिका०। २नाशके

**निशुम्भ** पु॰ निश्नथ्य सम्बध्य हरति नि+श्नथ-बा॰ भक् बा॰ सम्प्रसा॰ पृषो॰। निश्नथ्य सम्बध्य हर्त्तरि पूष्णश्छागभेदे "आजासः पूषणं रथे निशृम्भास्ते जनाश्रियम्" ऋ॰६।५५।६ "निशृम्भा निश्नथ्य सम्बध्य हर्त्तारः पूष्णो वाहनतया प्रसिद्धाः" भा॰। इमामेव ऋचमधिकृत्य निरु॰ ६।४ "निशृम्भा निश्नथ्य हारिणः" इत्युक्तम्।

**निश्वेत** पुंस्त्री निशायामेतम् ईषद्गतं यस्य। वके त्रिका॰ स्त्रियां जातित्वात् ङीष्। [त्वारिंशतोनिर्गते।

**निश्चत्वारिंश** त्रि॰ निर्गतः चत्वारिंशतः शदन्तात् ड। च-

**निश्चप्रच** त्रि॰ निश्चितं च प्रचितञ्च मयूरव्य॰ नि॰। निश्चिते अथच प्रचिते वस्तुनि।

**निश्चय** पु॰ निर्+चि-अच्। १संशयान्यज्ञाने निर्णये २सिद्धान्ते इदमित्थमेवेति ३विषयपरिच्छेदे च "तद्भावाप्रकारा धीः तत्प्रकारा तु निश्चयः" भाषा॰। "तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वं निश्चयत्वम्" मुक्ता॰ अनुमित्यादौ निश्चयत्वमेव न सन्देहत्वम् "परोक्षज्ञानमनाहार्यं निश्चयश्च" अनु॰चि॰ उक्ते। "संशयोऽथ विपर्य्यासो निश्चयः स्मृतिरेव च" भाग॰३।२६।३० ४बुद्धेरसाधारणवृत्तिभेदे "मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्। संशयो निश्चयो गर्वः स्मरणं विषया इमे" वेदान्तपरिभा॰ "वृद्धिर्नाम निश्चयात्मकान्तःकरणवृत्तिः" वेदा॰सा॰। "अध्यवसायो बुद्धिः" सां॰सू॰ "महत्तत्त्वस्य पर्य्यायो बुद्धिरिति अध्यवसायश्च निश्चयाख्यस्तस्यासाधारणी वृत्तिरित्यर्थः अभेदनिर्देशस्तु. धर्मधर्म्यभेदात्" भा॰। ५अर्थालङ्कारभेदे अलङ्कारशब्दे ३८८पृ॰ दृश्यम्।

**निश्चर** पु॰ एकादशमन्वन्तरीये सप्तर्षिभेदे तन्मन्वन्तरमुपक्रम्य "अङ्गिराश्चोदधिष्णश्च पौलस्त्यो निश्चरस्तथा। पुलहश्चाग्नितेजाश्च भाव्याः सप्त महर्षयः" हरिवं॰७अ॰।

**निश्चल** त्रि॰ निर्+चल-अच्। १स्थिरे २अचले ३असम्भावनाविपरीतभावनारहिते च। ४भूमौ ५शालपर्ण्याञ्च स्त्री राजनि॰। "तालुस्थाचलजिह्वश्च संवृतास्योऽथ निश्चलः" याज्ञ॰। "श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि" गीता।

**निश्चलाङ्ग** पुंस्त्री निश्चलं मत्स्यधारणाय स्पन्दरहितमङ्गं यस्य। १वके राजनि॰ स्त्रियां जातित्वात् ङीष्। २स्पन्दरहिते त्रि॰। स्त्रियां स्वाङ्गत्वात् वा ङीष्।

**निश्चायक** त्रि॰ निर्+चि-ण्वुल्। निश्चयकर्त्तरि निर्णायके

**निश्चारक** त्रि॰ निर्+चर-ण्वुल्। १वायौ २पुरीषक्षये ३स्वच्छन्दे त्रि॰ मेदि॰। निर्गतश्चारो यस्मात् प्रा॰ब॰ कप्। ४चाररहिते त्रि॰ चारश्च गतिर्दूतभेदश्च।

**निश्चित** त्रि॰ निर्+चि-कर्मणि क्त। १निश्चयज्ञानविषये अवधारिते "वेदान्तविज्ञानसुनिश्चितार्थाः" वेदा॰। २नदीभेदे स्त्री "कौशिकीं निश्चितां लत्यां निचितां लोहतारिणीम्" भा॰भी॰ ९अ॰ नानानद्युक्तौ।

**निश्चिन्त** त्रि॰ निर्गता चिन्ता यस्मात् प्रा॰ब॰। चिन्ताशून्ये "निश्चिन्तो मृदुरनिशं कलापरोधीरर्ललितः स्यात्" सा॰द॰

**निश्चि(श्ची)रा** स्त्री नदीभेदे विष्णुपु॰। [(मिषि) त्रिका॰।

**निश्चुक्कण** न॰ निःशेषेण चुक्कणम्। दन्तशोधके चूर्णभेदे

**निश्चेष्टाकरण** निश्चेष्टा चेष्टाराहित्यं क्रियतेऽनेन करणे ल्युट्। १कामबाणभेदे त्रिका॰। २मनःशिलाघटितौषधभेदे वैद्यकम्।

**निश्च्यवन** पु॰वैवस्वतमन्वन्तरे सप्तर्षिमध्ये १ऋषिभेदे तदुपक्रमे "प्राणो बृहस्पतिश्चैव दत्तो निश्च्यवनस्तथा" हरिवं॰ ७अ॰। २अग्निभेदे "यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया। अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम्" भा॰व॰ ११८अ॰। निर्गतं च्यवनमस्य प्रा॰ब॰। ३च्युतिहीने त्रि॰।

**निश्छन्दस्** त्रि॰ निर्गतं छन्दो वेदोयस्य प्रा॰ब॰। वेदाध्ययनहीने "हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्" (कुलम्) मनुः।

**निश्न** त्रि॰ निश-समाधौ बा॰ नङ्। समाहिते ततः। ब्रा॰ ह्मणा॰ भावे कर्मणि च ष्यञ्। नैश्न्य समाहितत्वे न॰।

**निश्वास** पु॰ नि+श्वस-भावे घञ्। प्राणवायोर्बहिर्गमनरूपे व्यापारे हेमच॰। "निश्वासधूमं सह रत्नभाभिः" माघः।

**निश्वाससंहिता** शिवप्रणीते पाशुपते शास्त्रभेदे "एवमभ्यर्थितस्तैस्तु पुराहं द्विजसत्तमाः। वेदक्रियासमायुक्तां कृतवानस्मि संहिताम्। निश्वासाख्यां ततस्तस्यां लीना वाभ्रव्यशाण्डिलाः। निश्वाससंहिता या हि लक्षमात्रप्रमाणतः। सैव पाशुपती दीक्षा योगः पाशुपतस्य हि। एतस्मादेदमार्गाद्धि यदन्यदिह जायते। तत् क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम्" वराहपु॰।

**निषङ्ग** पु॰ नितरां सजन्ति शरा यत्र सन्ज-आधारे घञ्। १तूणीरे अमरः। "जाताभिषङ्गो नृपतिर्निषङ्गात्" ततो निषङ्गादसमप्युद्धृतम्" रघुः। भावे घञ्। २नितान्तसङ्गे च "केन कार्यं निषङ्गेण तमाख्याहि महाबल!" भा॰शा॰ २०१अ॰। ३खड्गे च वेददी॰ निषङ्गिशब्दे दृश्यम्।

**निषङ्गथि** पु० नि+सन्ज–भावे अथिन् कुत्वम्। समालिङ्गने उज्ज्वद०।

**निषङ्गधि** पु० निषङ्गः खड्गः धीयतेऽस्मिन् धा–आधारे कि १खड्गपिधाने कोषे (खाप्) "आतुरस्य निषङ्गधिः" यजु० १६।१० "निषङ्गः खड्गः स धीयतेऽस्मिन्निति निषङ्गधिः कोशः" वेददी०।

**निषङ्गिन्** त्रि०निषङ्गोऽस्त्यस्य इनि। १धनुर्द्धरे अमरः। नि+सन्ज–घिणुन्। २तूणीरे शब्दार्थचि० ४खड्गधारिणि च "नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये" यजु० १६।२० "निषङ्गिणे खड्गधारिणे" वेददी०। "निषङ्गस्त्री धनुर्द्धरः" इत्यमरे पाठात् निषङ्गीन इति शब्दक० उक्तिः प्रामादिकी यथात्वञ्च चिन्त्यम्। ५नितान्तसङ्गयुक्ते च "स्थाणौ निषङ्गिण्यनसि क्षणं पुरः" माघः "निषङ्गिणि सक्ते अनसि" मल्लि०। ६तूणीरवति च "रथी निषङ्गी कवची धनुष्मान्" रघुः। ७धृतराष्ट्रपुत्रभेदे पु० "कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः" भा०आ० ६७अ० तत्पुत्रोक्तौ।

**निषण्ण** त्रि० नि+सद–कर्त्तरि क्त। उपविष्टे "संनिषण्णा सिताब्जे" सरस्वतीध्यानम्। "निषण्णा पङ्कजे पूज्या नमो देव्यै श्रिया इति" ति०त०। स्वार्थे–क। तत्रार्थे त्रि० संज्ञायां कन्। सुनिषण्णके शाकभेदे शब्दरत्ना०।

**निषत्स्नु** त्रि० नि+सद–वा०स्नु। निषण्णे "निषत्स्नुं स यः सरीसृपम्" ऋ०१०।१६२।३

**निषद्** स्त्री निषीदत्यस्याम् नि+सद–आधारे घञ्। १यज्ञदीक्षायाम् "या वै दीक्षा सा निषत् तत्सत्रं तदयनं तस्य प्रायणम्" शत०ब्रा०४।६।७।२। निषीदति वेद्यत्वेन देवता अत्र आधारे क्विप्। २वेदवाक्यविशेषे "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। गृणन्ति सत्यकर्माणम्" भा० शा० ७७अ०। "वाकेषु मन्त्रेषु सामान्यतः कर्मप्रकाशकेषु अनुवाकेषु मन्त्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु निषत्सु कर्माङ्गावबद्धदेवताविज्ञानवाक्येषु उपनिषत्सु केवलात्मज्ञापकेषु गृणन्ति ध्यायन्ति" नीलक०। सम्प० भावे क्विप्। ३उपसदने स्त्री "अभिख्यरा निषदा गा अवस्यवः" ऋ० २।२१।५ "निषदा उपसदनेन" भा०। नि+सद–कर्त्तरि क्विप्। ४उपवेष्टरि निषद्वरशब्दे दृश्यम्।

**निषदन** न०निषीदत्यत्र आधारे ल्युट्। १गृहे शब्दार्थचि०। २उपवेशनस्थाने च "निक्रमणं निषदनम्" यजु०२५।२८ "निषदनमुपवेशनस्थानम्" वेददी०। भावे ल्युट्। ३स्थितौ "अश्वत्थे वो निषदनम् पर्णे वो वसतिष्कृता" यजु० १२। ७६ "निषदनं स्थानम्" वेददी०। निषीदति पापकमत्र ल्युट्। ४निषादे पु० "निषादः कस्मान्निषदनो भवति निषण्णमत्र पापकमिति" निरु० ३।८

**निषद्या** स्त्री निषीदन्त्यस्याम् जनाः नि+सद–आधारे क्यप्। १पण्यविक्रयशालायां (हाटचाला) २हट्टे अमरः ३क्षुद्रखट्वायाञ्च शब्दार्थचि० "केचित् गुर्वीनेत्य संयन्निषद्याम् क्रीणन्ति स्म प्राणमूल्यैर्यशांसि" माघः।

**निषद्वर** पु० नि+सद–क्विप् निषद् आसनं तां वृणाति वृ–अच् वरः आवरकः ६त०। जम्बाले १कर्दमे अमरः। नि–सद आधारे वा० ष्वरच्। षित्त्वात् ङीष्। २निशायां स्त्री मेदि०। उभयत्र हि गतेर्निषण्णत्वात् तथात्वम्। ६त०। ३निषदामुपवेष्टॄणां वरे श्रेष्ठे वृषभेदे "निषद्वरं वृषभं नव्यौपसम्" यजु० २८।४ "निषीदन्ति निषद उपवेष्टारस्तेषां वरम् श्रेष्ठम् ऋषभम्" वेददी०।

**निषध** पु० पर्वतभेदे स च सि०शि० उक्तो यथा

"लङ्कादेशाद्धिमगिरिरुदग्घेमकूटोऽथ तस्मात् तस्मात्त्वन्यो निषध इति ते सिन्धुपर्यन्त दैर्घ्याः"। एवं सिद्धापुरादुगपि पुरात् शृङ्गवच्छुक्लनीलाः वर्षाण्येषां जगुरिह बुधा अन्तरे क्रौञ्चदेशान्। भारतवर्षमिदं हृदगस्मात् किन्नरवर्षमतो हरिवर्षम्" मू० "अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वं सिन्धुपर्यन्तदैर्घ्योऽस्ति। तस्योत्तरे हेमकूटः, सोऽपि समुद्रपर्यन्तदैर्घ्यः। तथा तदुत्तरे निषधः"। तेषामन्तरे क्रौञ्चदेशा वर्षसंज्ञाः, तत्रादौ भारतवर्षम्। तदुत्तरं किन्नरवर्षम्। ततो हरिवर्षमिति" प्रमिता०। स च किंपुरुषवर्षस्य सीमापर्वतः यथाह भाग० ५।१६। १०श्लो०। "एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयः। अयुतयोजनोत्सेधा हरिवर्षकिम्पुरुषभारतानां यथासंख्यम्"। सूर्यवंश्ये रामात्मजकुशस्य पौत्रे २नृपभेदे "अतिथिस्तु कुशाज्जज्ञे निषधस्तस्य चात्मजः" हरिवं १५अ०। "स (अतिथिः) नैषधस्यार्थपतेः सुतायाम् उत्पादयामास निषिद्धशत्रुः। अनूनसारं निषधान्नगेन्द्रात् पुत्रं यमाहुर्निषधाख्यमेव" रघुः। चन्द्रवंश्ये ३जनमेजयान्तरस्यात्मजभेदे "जनमेयस्य तनयाः भुवि ख्याता महाबलाः। धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च। निषधश्च महातेजास्तथा जाम्बूनदो बली" भा०आ०९४अ०। ४देशभेदे पु० ब०व०। "यथा

निषादा निषधास्तथैवानर्त्तनैर्ऋताः" भा० भी० ६ अ० जनपदांशौ। "निषधेषु महीपालो वीरसेन इति श्रुतः" भा०व०५२अ०। निषधानां राजा ते चाभिजनोऽस्य वा अण्। नैषध तद्देशन्दसे पित्रादिक्रमेण तद्देशवासिनि च। "न नैषधे कार्य्यमिदं निगाद्यम्" नैष० बहुषु अणो लुक्। ५कठिने त्रि० मेदि० ६निषादस्वरे हेमच०। ७कुरुनामकन्दपपुत्रे च "तपत्यां सूर्य्यकन्यायां कुरुश्चे-त्रपतिः कुरुः। परीचित् सुधनुर्मन्युर्निषधश्च कुरोः सुताः" भाग० २२।३

**निषाद** पुंस्त्री निषीदति पापमत्र नि+सद-आधारे घञ्। १चण्डाले जातिभेदे अमरः तन्निरुक्तिः "निषादः कस्मान्निषदनो भवति निषणमत्र पापकमिति" निरु० ३।८। वेनोरुमन्थनाज्जाते २जातिभेदे तत्कथा "दग्धस्थूणा-प्रतीकाशो विकटाक्षोऽतिह्रस्वकः। किङ्करोमीति तान् सर्वान् विप्रानाह स चातुरः। निषीदेति तमूचुस्ते निषादस्तेन सोऽभवत्। ततस्तत्सम्भवा जाता विन्ध्य-शैलनिवासिनः। निषादा मुनिशार्दूल! पापकर्मोपल-क्षणाः। तेन द्वारेण निष्क्रान्तं तत्पापं तस्य भूपतेः। निषादास्ते ततो जाता वेनकल्मषनाशनाः" स्त्रियां जातित्वात् ङीष्। "निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि" भा०आ० १४८अ०। तन्त्रीकण्ठोत्थिते ३स्वर-भेदे पु० अमरः। "षड्जादयः षडेतेऽत्र स्वराः सर्वे मनोहराः। निषीदन्ति यतो लोके निषादस्तेन कथ्यते। चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः। ऋषभे धैवते तिस्रोद्वे गान्धारनिषादके" सङ्गीतदामो-दरः "निषादं रौति कुञ्जरः" इत्युक्तेः तस्य हस्तितुल्य-स्वरता। ४ब्राह्मणाच्छूद्रकन्यायामुत्पन्ने पारशवाख्ये जातिभेदे च "ब्राह्मणात् वैश्यकन्यायामम्बष्ठो नाम जायते निषादः। शूद्रकन्यायां यः पारशव उच्यते" मनुः। "मत्स्यघातो निषादानाम्" मनुना तद्वृत्तिरुक्ता ५देशभेदे स च देशः सरस्वती नद्यन्तर्द्धानस्थानं यथोक्तं भा०व०१३०अ० "एतद्विनशनं नाम सरस्वत्या विशां-म्पते!। द्वारं निषादराष्ट्रस्य येषां दोषात् सरस्वती। प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः"।

**निषादकर्षू** पु० देशभेदे ततः शैषिकः ठञ् "इसुसुक्तान्तात् कः" पा० ठस्य कः, "केऽणः" पा० ह्रस्वः। नैषादकर्षुक तत्सम्बन्ध्यादौ त्रि०।

**निषादवत्** पु० निषादोऽस्त्यस्य मतुप् मस्य वः। १निषाद-स्वरे "षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा। पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान्" भा०शा० १८४ अ०। २निषादस्वरयुक्ते गानादौ त्रि० स्त्रियां ङीप्।

**निषादित** न०नि+सद-णिच्-भावे क्त। १निषादने उपवेशनकरणे। निषादितमनेनेत्यर्थे इष्टा० इनि। निषादितिन् निषादनकर्त्तरि त्रि० स्त्रियां ङीप्। कर्मणि क्त। २उपवेशिते त्रि०।

**निषादिन्** पु० निषादयति हस्तिनं नि+सद-णिच्-णिनि। हस्त्यादिरुपवेशनादिकारके १हस्तिपके अमरः "निर्याण निर्यद्दस्रजं चलितं निषादी" माघः। नि+सद-णिनि। २उपविष्टे "आतपात्ययसंक्षिप्तनीवाराम्यु निषादिभिः" रघुः। स्त्रियां ङीप्। "हृतच्छायानिषादिन्यः" रघुः।

**निषिक्त** त्रि० नि+सिच-क्त। १नितान्तसिक्ते आहिते २शुक्रादौ च ३तज्जे गर्भे च "योनेः शरीरम्" शा० सूत्रभाष्ये "योनौ निषिक्ते रेतसि" उक्तम् "विष्णु निषिक्तपामर्वोभिः" ऋ० ७।३६।९ "निषिक्तपाम् निषिक्तस्य गर्भस्य रक्षितारम्" भा०।

**निषिद्ध** त्रि० नि+षिध-कर्मणि क्त। १निषेधविषये २वाधिते "निषिद्धैरप्यभिलुलितमकरन्दैर्मधुकरैः" वेणीसं०। ३अभावगतेष्टसाधनतानिषेधिनञ्पदयोगिवाक्यगम्ये ४अनिष्टसाधनताबोधकलिङाद्यनुपक्तनञ्पदयोगिवाक्यगम्ये च यथा "न कलञ्जं भक्षयेत्" इत्यत्र "कलञ्जभक्षणं निषिद्धम्" "काम्यनिषिद्धवर्जनपुरःसरम्" वेदान्तसा०।

**निषेक** पु० नि+सिच-भावे घञ् कुत्वम्। १जलादेः नितान्त सेचने २गर्भाधाने च "निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः" मनुः "योषित्सु तद्वीर्य्यनिषेकभूमिः" कुमा०। "वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्य्यः शरीरसंस्कारः" मनुः। "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च" श्रा०त० भविष्यपु०। "निषेककाले गर्भार्थशुक्राधानदिने" रघु०।

**निषेदिवस्** त्रि० नि+सद-क्वसु। निषण्णे उपविष्टे स्त्रियां ङीप् सेटोवस्य उः। "निषेदुषी स्थण्डिल एव केवले" कुमा०

**निषेध** पु० नि+षिध-भावे घञ्। १वारणे २निवर्त्तने। निषिध्यतेऽनेन करणे घञ्। ३अनिष्टसाधनताबोधक वेदादिवाक्यभेदे "स च (वेदः) विधिमन्त्रनामधेयनिषेधार्थवादभेदात् पञ्चविधः" लौगाक्षिभास्करः। तत्रत्यादि तत्र निरूपितं यथा

"पुरुषस्य निवर्त्तकं वाक्यं निषेधः निषेधवाक्यानामनर्थहेतुक्रियानिवृत्तिजनकत्वेनैवार्थवत्त्वात्। तथाहि यथा विधिः प्रवर्त्तनां प्रतिपादयन् स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेरिष्टसाधनत्वमाक्षिपन् पुरुषं तत्र प्रवर्त्तयति। तथा "न कलञ्जं भक्षयेत्" इत्यादि निषेधोऽपि निवर्त्तयन् स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्त्तयति। ननु निषेधवाक्यस्य कथं निवर्त्तनाप्रतिपादकत्वमिति चेत्? उच्यते न तावदत्र धात्वर्थस्य नञर्थेनान्वयः अव्यवधानेऽपि तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः। न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्रान्वेति। अन्यथा राजपुरुषमानयेत्यादावपि राज्ञः क्रियान्वयापत्तेः। अतः प्रत्ययार्थस्यैव नञर्थेऽन्वयः। तत्रापि नाख्यातांशवाच्यार्थभावनायाः, तस्या लिङंशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितेः। किन्तु लिङंशवाच्यशाब्दभावनायाः, तस्याः सर्वापेक्षया प्रधानत्वात्। नञश्चैष स्वभावो यत् स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। यथा "घटोनास्तीत्यादौ" अस्तीति शब्दसमभिव्याहृतो नञ् घटसत्ताविरोधिनिवर्त्तनामेव बोधयति विधिवाक्यश्रवणेऽयं मां प्रवर्त्तयतीति प्रतीतेः। तस्मान्निषेधवाक्यस्थले निवर्त्तनैव वाक्यार्थः! यदा तु प्रत्ययार्थस्य तत्रान्वये बाधकं तदा धात्वर्थस्यैव तत्रान्वयः। तच्च बाधकं द्विविधम्। तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च। तत्राद्यं "नेक्षेतोद्यन्तमादित्यम्" इत्यादौ तस्य व्रतमित्युपक्रम्यैतद्वाक्यपाठात्। तथा चात्र पर्युदासाश्रयणम्। तथा हि व्रतशब्दस्य कर्त्तव्यार्थरूढत्वात्तस्य व्रतमित्यत्र स्नातकस्य व्रतानां कर्त्तव्यत्वेनोपक्रमात् किं तत् कर्त्तव्यमित्याकाङ्क्षायां "नेक्षेतोद्यन्तमादित्यम्" इत्यादिना कर्त्तव्यार्थ एव प्रतिपादनीयः। अन्यथा पूर्वोत्तरवाक्ययोरेकवाक्यत्वं न स्यात्। तथा च नञर्थेन प्रत्ययार्थान्वये कर्त्तव्यार्थानवबोधात् विध्यर्थप्रवर्त्तनाविरोधिनिवर्त्तनाया एव तादृशनञा बोधनात् तस्याश्च कर्त्तव्यार्थत्वाभावात्। तस्मान्नेक्षेतेत्यत्र नञा धात्वर्थविरोध्यनीक्षणसङ्कल्प एव लक्षणया प्रतिपाद्यते। तस्य कर्त्तव्यत्वसम्भवात्। आदित्यविषयकानीक्षणसङ्कल्पेन भावयेदिति वाक्यार्थस्तत्र भाव्याकाङ्क्षायाम् "एतावता हैनसा वियुक्तो भवतीति" वाक्यशेषावगतः पापक्षयो भाव्यतयान्वेति। एवञ्च पूर्वोत्तरयोरेकवाक्यत्वं निर्व्वहत्येव। न चात्र धात्वर्थविरोधिनः पदार्थान्तरस्यापि सम्भवात् कथमनीक्षणसङ्कल्पस्यैव भावनान्वय इति वाच्यम् तत्र कर्त्तव्यत्वाभावेन प्रकृते भावनान्वयायोग्यत्वात्। द्वितीयं "यजतिषु ये यजामहङ्करोति नानुयाजेषु" इत्यादौ। अत्र विकल्पप्रसक्त्यैव पर्युदासाश्रयणात्। तथाहि यद्यत्र वाक्ये नञर्थे प्रत्ययार्थान्वयः स्यात्तदा "अनुयाजेषु ये यजामहे" इति मन्त्रस्य प्रतिषेधः स्यात्। अनुयाजेषु ये यजामहे" न कुर्यादिति। स च प्राप्तिपूर्वक एव प्राप्तस्यैव प्रतिषेधात्। प्राप्तिश्च यजतिषु "ये यजामहङ्करोतीति" शास्त्रादेव वाच्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्प एव न तु बाधः। प्राप्तिमूलरागस्यैव तन्मूलशास्त्रस्य शास्त्रान्तरेण बाधायोगात्। न च पदे जुहोतीत्यादौ हि विशेषशास्त्रेणाहवनीये जुहोतीति शास्त्रस्येव नानुयाजेष्वित्यनेन यजतिषु ये यजामहङ्करोतीत्यस्य बाधः स्यादिति वाच्यम् परस्परनिरपेक्षयोरेव शास्त्रयोर्बाध्यबाधकभावात्। पदशास्त्रस्य हि स्वार्थविधानार्थमाहवनीयशास्त्रानपेक्षणान्निरपेक्षत्वम्। प्रकृते तु निषेधशास्त्रस्य निषेध्यप्रसक्त्यर्थं "यजतिषु ये यजामहम्" इत्यस्यानपेक्षणान्न निरपेक्षत्वम्। तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्प एव, स च न युक्तः। विकल्पे शास्त्रस्य पाक्षिकाप्रामाण्यापातात्। न "ह्यनुयाजेषु ये यजामहम्" इत्यस्यानुष्ठाने नानुयाजेष्वित्यस्य प्रामाण्यं सम्भवति, व्रीहियागानुष्ठाने यवशास्त्रस्येव। द्विरदृष्टकल्पना च स्यात्, विधिप्रतिषेधयोरपि पुरुषार्थत्वात्। अतोऽत्र न प्रतिषेधस्याश्रयणम्। किन्तु अनुयाजसम्बन्धमाश्रित्य पर्युदासस्यैव। इत्थञ्चानुयाजव्यतिरिक्तेषु "यजतिषु ये यजामहे" इति मन्त्रं कुर्य्यादिति वाक्यार्थबोधः नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात्। एवञ्च न विकल्पः। अत्र च वाक्ये "ये यजामहे" इति न विधीयते। "यजतिषु ये यजामहे" इत्यनेनैव प्राप्तत्वात्। किन्तु सामान्यशास्त्रप्राप्तये "ये यजामहे" इत्यनुवादेन तस्यानुयाजव्यतिरिक्तविषयत्वं विधीयते यत् यजतिषु ये यजामहङ्करोति तदनुयाजव्यतिरिक्तेष्वेवेति। नन्वेवं सामान्यतः प्राप्तस्य विशेषसङ्कोचरूपादुपसंहारात् पर्युदासस्य भेदो न स्यादिति चेन्न उपसंहारो हि तन्मात्रसङ्कोचार्थः। यथा पुरोडाशे "चतुर्द्धा करोतीति" सामान्यप्राप्तचतुर्द्धाकरणम् "आग्नेयं चतुर्द्धा करोतीति" विशेषादाग्नेयपुरोडाशमात्रे सङ्को-

ध्यते पर्युदासस्तु तदन्यमात्रसङ्कोचार्थ इति ततो भेदात्। क्वचिद्विकल्पप्रसक्त्यावश्यनगत्या प्रतिषेधाश्रयणम्। यथा "नातिरात्रे षोडशिनं गृह्णाति" इत्यादौ। अत्र "अतिरात्रे षोडशिनं गृह्णातीति" शास्त्रप्राप्तषोडशिग्रहणस्य निषेधाद्विकल्पप्रसक्तावपि न पर्युदासाश्रयणम्, असम्भवात्। तथाहि यद्यत्र षोडशिपदार्थे नञर्थान्वयस्तदातिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थबोधः स्यात्। स च न सम्भवति "अतिरात्रे षोडशिनं गृह्णातीति" प्रत्यक्षविधिविरोधात्। यदि चातिरात्रपदार्थेनान्वयस्तदातिरात्रव्यतिरिक्ते षोडशिनं गृह्णातीति वाक्यार्थबोधः स्यात्। सोऽपि न सम्भवति, तद्विधिविरोधात्। अतोऽनन्यगत्या शास्त्रप्राप्तषोडशिग्रहणस्यैव निषेधः। न च विकल्पप्रसक्तिः तस्याप्याश्रयणीयत्वात्। इयांस्तु विशेषो यद्विकल्पादावेकप्रतिषिध्यमानस्य नानर्थहेतुत्वम्। यथा "न कलञ्जं भक्षयेत्" इत्यादौ कलञ्जभक्षणादेः, तत्र भक्षणनिषेधस्यैव पुरुषार्थत्वात्। न च "दीक्षितो न ददाति न जुहोति" इत्यादौ शास्त्रप्राप्तदानहोमादीनां निषेधाद्विकल्पापत्तिरिति वाच्यम्। स्वतः पुरुषार्थभूतदानहोमादीनां निषेधस्य पुरुषार्थत्वाऽभावेऽपि निषिध्यमानस्यानर्थहेतुत्वम् यथा क्रतौ स्त्रीगमनादेः। तन्निषेधस्य क्रत्वर्थत्वेन तस्य क्रतुवैगुण्यसम्पादकत्वात्"। [निषेधकाः" मार्कण्डपु०।

**निषेधक** त्रि० नि+षिध–ण्वुल्। निवारके "ये चाह्लाद०

**निषेधविधि** पु० निषेधे अभावे विधिरिष्टसाधनताधीहेतुः। अभावे इष्टसाधनताबोधकवाक्ये यथा "एकादश्यां न भुञ्जीतेत्यादौ" भोजनाभावे एव इष्टसाधनत्वं बोधयति न तु भोजने विध्यर्थेष्टसाधनत्वभावम्, अतो निषेधवाक्यादस्य भेदः। "अष्टम्यां मांसं नाश्नीयात्" इत्यादौ तु निषेधे मांसभोजने अनिष्टसाधनत्वं बोधयति "एकादश्यां न भुञ्जीत" इत्यादौ तु भोजनाभावे इष्टसाधनत्वमिति विधिस्वरूपे गदाधरः। एवं नेक्षेतोद्यन्तमादित्यमित्यादावपि निषेधविधित्वमित्याकरे स्थितम्। अतएव एकादशीभोजनाभावस्य अभोजनसंकल्परूपस्य व्रतत्वम् तिथितत्त्वविशेषनियमञ्च। निषेधत्वे कालमात्रापेक्षतया तत्कालमात्रेण निवृत्तिः स्यात् "निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति भट्टोक्तेः।

**निष्क** माने चु० आत्म०सक० सेट्। १निष्कयते अनिनिष्कत। अणोपदेशत्वात् षत्वं निमित्ते न णत्वम्। प्रनिष्कयते।

**निष्क** पु०न० निश्चयेन कायति निस्+कै–क निष्क–अच् वा। शास्त्रीयषोडशमाषकपरिमितसुवर्णेनाष्टाधिकशते, २व्यवहारिकरूपके (टाका) ३चतुःसुवर्णपरिमिते पलपरिमाणे मानभेदे, ४वक्षोभूषणे ५हेमपात्रे ६दीनारे च अमरः। दीनारशब्दे दीनारार्थः दृश्यः। ७पणे दषोडशद्रम्मे (काहन) परिमाणे "वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्रः। ते षोडश द्रम्म इहावगम्यो द्रम्मैस्तथा षोडशभिश्च निष्कः" लीला०। "हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम्" कुमा० "चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" मनुः "गवामभावे निष्कः स्यात् तदर्द्धं पादमेव वा" मिता० धृता स्मृतिः।

**निष्कण्टक** त्रि० निर्गतः कण्टकोऽस्य प्रा०ब०। १उपसर्गहीने २बाधकरहिते "राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः" भा०वि० ह्व०।

**निष्कण्ठ** पु० निर्गतः कण्ठः स्कन्धोऽस्य। वरणद्रुमे शब्दच०

**निष्कम्प** त्रि० निर्गतः कम्पो यस्य प्रा०ब०। कम्पहीने "निवातनिष्कम्पमिव प्रदीपम्" "निष्कम्पवृत्तं निभृतद्विरेफम्" कुमा० "दिवः पपात पत्रेण वेगनिष्कम्पकेतुना" रघुः।

**निष्कम्पु** पु० देवसेनाधिपभेदे "बलिना वृषपर्वा तु सह निष्कम्पुना रणे" हरिवं० २४४अ० देवासुरयुद्धोक्तौ।

**निष्कर्ष** पु० निस्+कृष+भावे घञ्। १निश्चये २इयत्तादिना स्वरूपपरिच्छेदे "एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्" मनुः। "स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते" भाषा०। ३निःसारणे च

**निष्कर्षण** न० निस्+कृष–भावे ल्युट्। १निष्कासने २निःसारणे "आह्वानकं प्रियाशोकशल्यनिष्कर्षणौषधम्" रघुः

**निष्कल** त्रि० निर्गता कला यस्य प्रा०ब०। १कलाशून्ये २निरवयवे सम्पूर्णे "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्वेता०उ० "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः" एका० जामदग्न्यवाक्यम्। ३कलादिव्यापारशून्ये च "दृश्यन्ते निष्कलाः शान्तं प्रक्षीणाः स्वस्वकर्मभिः" भा०व० २०८अ०। ४गतार्त्तवायां वृद्धायां स्त्रियां स्त्री शब्दरत्ना० नीरकस्थायां स्त्रियां स्त्री ङीप् शब्दरत्ना०।

**निष्कषाय** त्रि० निर्गतः कषायः चित्तमलभेदो यस्य प्रा०ब०। १चित्तदोषशून्ये निर्मलचित्ते शुद्धचित्ते। उत्सर्पिण्यां २जिनभेदे पु० हेमच०।

**निष्कादि** पु० "असमासे निष्कादिभ्यः" पा० तेन क्रीतमित्यर्थे असमासे ठग्निमित्ते शब्दगणे स च गणः पा०ग० सू० उक्तो यथा "निष्क पण पाद माष वाह द्रोण षष्टि"। निष्केण क्रीतं नैष्किक निष्केण क्रीते त्रि०। स्त्रियां टाप्। समासे तु ठञ् स्त्रियां ङीप् इतिभेदः

**निष्काम** त्रि० निर्गतः कामोऽभिलाषो यस्य यत्र वा प्रा०ब०। विषयभोगेच्छाशून्ये १काम्नयाऽकृते कर्मादौ च "निष्कामं ज्ञानपूर्वं च निवृत्तमुपदिश्यते" मनुः। "निष्कामादन्तर्यागजपादिकर्मणो न दुःखं प्रत्युत मोक्षफलं प्राप्यते" सा०प्र०भा० "विशिष्टफलदाः पुंसां निष्कामाणां विमुक्तिदाः" मल०त० विष्णु पु० "निष्कामाणां मुक्तिप्रतिकूलकामनारहितानाम्" रघुनन्दनः।

**निष्कालक** पु० निर्गतः कालकः केशादिः मुण्डनेन यस्य प्रा०ब०। १मुण्डितकेशलोमादौ "निष्कालको घृताभ्यक्तस्तप्तां सूर्मीं परिष्वज्य मरणात् पूतो भवतीति विज्ञायते" वसिष्ठः। प्रा०ब०कप्। २निर्गतसमयके अभावे अव्ययी०। ३कालकाभावे अव्य०। निरुदकादि० अन्तोदात्ततास्य

**निष्कालन** न०निर्+कल–भावे ल्युट्। १चालने २मारणे च

**निष्कालिक** अव्य० कालिकस्याभावः अव्ययी०। कालिकाभावे निरुदकादि० अस्य अन्तोदात्तता। काले कालने साधु तदर्हति वा ठञ् कालिकः काली कालयिता जेता वा स निर्गतो यस्य प्रा०ब० कप् वा। २कालयितृहीने जेतृशून्ये अजय्ये च त्रि०। "तं सूतपूतं रथिनां वरिष्ठं निष्कालिकं कालवशं नयाद्य" भा०क० ७२अ०। निष्कालिक० निर्गतः काली कालयिता जेता यस्येति विग्रहः" नीलकण्ठः।

**निष्का(श)स** पु० निर्+काश(स)–भावे घञ्। निष्कासने बहिष्करणे १निःसारणे "सन्ध्ये रजनीदिनयोः प्रवेश निष्काशौ(सौ)" हला० "न च पश्यामि निष्काश(स)म्" रामा०कि० ५२सर्गः। कर्त्तरि घञ्। प्रासादाद्युपरितो बहिर्गतभागे (साजा) ख्याते पदार्थे च।

**निष्काशि(सि)त** त्रि० निस्+क(श)स–गतौ णिच्–क्त। १निःसारिते दन्त्यमध्यस्तु दूरीकृते समपसारिते जटा०। २निर्गमिते ३आहिते ४अधिकृते च त्रि० मेदि०।

**निष्काष** पु० निर्–कष घञ्। तापवशादधःस्थालीतललग्ने पयसोऽवशेषे "वारुणीनिष्काषेणावभृथम्" कात्या०श्रौ० ५।५।२८। उक्तार्थएव कर्कोक्तः।

**निष्किञ्चन** त्रि० निर्गतं किञ्चन गम्यं धनं वा यस्य प्रा०ब०। १किञ्चनशून्ये विषयान्तरशून्ये "प्रज्ञानं शौचमेवात्र शरीरस्य विशेषतः। तथा निष्किञ्चनत्वं मनसश्च प्रसन्नता" भा०अनु०१०८अ०। २अकिञ्चने दरिद्रे च।

**निष्कुट** पु० निस्+कुट–क। १गृहसमीपस्थे उपवने अमरः २केदारे क्षेत्रे ३राज्ञाम् अन्तःपुरे च मेदि०। "अवस्करे चिरं स्थानं निष्कुटेषु च वर्जयेत्" भा०व०२२२अ०। ४पर्वतभेदे "स विनिर्जित्य संग्रामे हिमवन्तं सनिष्कुटम्" भा०स० २६अ०। "सपर्वतवनाकाशां ससमुद्रां सनिष्कुटाम्" भा० व० २५२अ०।

**निष्कुटि(टी)** स्त्री कुट–इन् कौटिल्यम् निर्गता कुटिर्यस्याः वा० ङीप्। एलायाम् अमरः।

**निष्कुटिका** स्त्री निष्कुटः अस्त्यस्याः वासत्वेन ठन्। कुमारानुचरमातृभेदे "कृच्छ्राऽम्बिका निष्कुटिका वामा चत्वरवासिनी" भा०श० ४७अ० स्कन्दमातृगणोक्तौ।

**निष्कुम्भ** पु० नि+स्कुम्भ–अच् षत्वम्। १दन्तीवृक्षे रायमुकुटः। निर्गतः कुम्भोऽस्य प्रा०ब०। २कुम्भशून्ये च त्रि०।

**निष्कुल** त्रि०निर्गतं कुलमवयवानां समूहो यस्मात् प्रा०ब०। अवयवसमूहशून्ये। ततः निष्कोषणे कृञि डाच्। निष्कुलाकरोति दाडिमम् निष्कोषयतीत्यर्थः। निर्गतं कुलं सपिण्डादिर्यस्य प्रा०ब०। २सपिण्डादिकुलरहिते त्रि०। "वशाऽपुत्रासु चैवं स्यात् रक्षणं निष्कुलासु च। पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च" मनुः "निष्कुलासु सपिण्डरहितासु" कुल्लू०।

**निष्कुलीकृत** त्रि०निष्कुल+अभूततद्भावे च्वि–कृ–कर्मणि क्त। निष्कुषिते "काश्मर्य्याणां निष्कुलीकृतानाम्" सुश्रुतः।

**निष्कुषित** त्रि० निस्+कुष–निष्कर्षे क्त। १निस्त्वचीकृते खण्डिते "काकैर्निष्कुषितं श्वभिः कवलितं वीचिभिरान्दोलितम्" गङ्गास्तोत्रम्। "चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः" भट्टिः "उपान्तयोर्निष्कुषितं विहङ्गैः" रघुः। २मरुद्गणभेदे पु० "अप्रमत्तं चित्ररश्मिश्च तथा निष्कुषितं नृपम्" हरिवं० २०४अ० मरुद्गणोक्तौ।

**निष्कुह** पु० निःशेषेण कुहयते विस्मापयति कुह–अच्। वृक्षादिस्थे स्वयंजाते रन्ध्रे कोटरे अमरः।

**निष्कृति** स्त्री निर्+कृ–क्तिन्। १निस्तारे २निर्मुक्तौ पापादिभ्य ३उद्धारे च अमरः "कामतो ब्रह्मणवधे निष्कृतिर्न विधीयते" मनुः "कृतघ्ने नास्ति निष्कृतिः" स्मृतिः

**निष्कृष्ट** त्रि० निर+कृष–क्त। १सारांशे २निश्चिते च

**निष्केवल्य** पु॰ यज्ञिये स्तोमकारितशंसनात्मके शस्त्रभेदे "माध्यन्दिने तु होतुर्निष्केवल्ये स्तोमकारितं शस्त्रम्" आश्व॰ श्रौ॰८।१।१४ "तत्र तु ऋग्भिरेव निष्केवल्यस्य स्तोमकारित शंसनं स्वस्तोमातिशंसनञ्च कर्त्तव्यं न सूक्तेन। यदि स्वस्तोमाधिको निष्केवल्यस्तोमस्तदा तस्मादप्यतिशंसनञ्च कर्त्तव्यं यदा हीनं तदास्मादतिशंसनमिति निष्केवल्ये स्तोमकारितमिति पाठः कर्त्तव्यो न निष्केवल्यस्तोमकारितमिति" नारा॰। "निष्केवल्यमुक्थमव्यथायै" यजु॰१५।१२ "प्रउगं शंसति निष्केवल्यं शंसतीति" श्रुतिः तच्छस्त्रेण साध्ये २यज्ञपात्ररूपे ग्रहभेदे पु॰ "मरुत्वतीयाश्च मे निष्केवल्यश्च मे" यजु॰ १८।२०।

**निष्कैवल्य** त्रि॰ केवलस्य भावः कैवल्यम् निश्चितकैवल्यमसहायत्वमस्य प्रा॰ब॰। निश्चितकेवलत्वे अन्यासहकारिणि "निष्कैवल्येन पापेन तिर्य्यग्योनिमवाप्नुयात्। पुण्यपापेन मानुष्यं पुण्येनैकेन देवताम्" भा॰शा॰ २०४ अ॰। २निवृत्तकैवल्ये ३मोक्षहीने च।

**निष्कोषण** न॰ निर्+कुष—ल्युट्। अन्तरवयवानां बहिर्निःसारणे "शर्करासिकतामेहवातकुण्डलिकाष्ठीलादन्तशर्करोपकुशकण्ठशालूकनिष्कोषणदूषिताश्च दन्तवेष्टाः" सुश्रुतः

**निष्कौशाम्बि** त्रि॰ निर्गतः कौशाम्ब्या नगर्य्याः निरा॰त॰ तत्पुरुषे गौणत्वेन ह्रस्वः। कौशाम्ब्या नगर्य्या निर्गते।

**निष्क्रम** पु॰निर्+क्रम—घञ्। १गृहादितो बहिर्गमने प्रथमनिष्क्रमनिमित्तं कर्त्तव्ये शिशोः २संस्कारभेदे च "अह्न्येकादशे नाम चतुर्थे मासि निष्क्रमः" याज्ञ॰।

**निष्क्रमण** न॰ निर्+क्रम—ल्युट्। १गृहादितो बहिर्गमने चतुर्थे मासि शिशोः कर्त्तव्ये प्रथमनिष्क्रमनिमित्ते २संस्कारभेदे च। तन्मुहूर्त्तादिकं मुहू॰ पी॰ उक्तं यथा "दोलाधिरूढिरथ निष्क्रमणं चतुर्थमासे गमोक्तसमयेऽर्कमितेऽह्नि वा स्यात्" मू॰ "अथ निष्क्रमणमुहूर्त्तः तत्र चतुर्थमासे गमोक्तसमये यात्राभिहितसमीचीनतिथिवारनक्षत्रादिविहिते काले शिशूनां निष्क्रमणम्। निष्क्रमाख्यसंस्कारपूर्वं गृहाद्बहिर्गमनं कुर्य्यात्। वा अथवाऽर्कमितेऽह्नि द्वादशे दिवसे निष्क्रमणं कुर्य्यात्। यदाह मनुः "चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहात्"। गुरुरपि "गृहात् निष्क्रमणं सूतेश्चतुर्थे मासि कारयेत्। यात्रोक्ते समये मासि तृतीये द्वादशेऽहनि" अत्र तृतीयमासोऽप्युक्तः। राजमार्त्तण्डेनापि "मासे तृतीये शशिवृद्धिपक्षे क्षपाकरे शोभनगोचरस्थे। उत्पातपापग्रहवर्जिते भे निष्कासनं सौख्यकरं शिशूनाम्"। तदेतयोः पक्षयोर्यथागृह्यं व्यवस्था। मुहूर्त्तसंग्रहे तु निष्क्रमणे विशिष्य तिथ्याद्युक्तं यथा "पूर्वः पक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना। रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जयेत्। चत्वार्य्यार्य्यमणतस्त्रीणि वैश्वात् त्रीणि च बुध्नभात्"। बुध्नभादुत्तराभाद्रपदातस्त्रीणि भानि। "मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः। क्रूराणि मेषा वर्ज्याः स्युस्तथैवाधोमुखानि च। सतां तु वारवर्गाश्च शुभदास्तूदयास्तथा। केन्द्रत्रिकोणगाः सौम्याः पापाः षट्त्रिलाभगाः। उपनिष्क्रमणे शस्ता मातुलो वाहयेच्छिशुमिति"। अधोमुखानि मूलाहिमिश्रोग्रमधोमुखं भवेदित्युक्तानि। उदयाः लग्नानि। एवंविधे सुलग्ने क्रियमाणस्य शिशुनिष्क्रमण फलमाह वृहस्पतिः। "अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः। अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः"। कृते संपदिवृद्धिः स्यादायुर्वर्द्धनमेव चेति" अत्र विशेषमाह यमः "तृतीये मासि कर्त्तव्यं शिशोः सूर्य्यस्य दर्शनम्। चतुर्थे मासि कर्त्तव्यमग्नेश्चन्द्रस्य दर्शनम्" इति। वेदभेदेन व्यवस्था ज्यो॰त॰ दर्शिता यथा "चतुर्थमासीति ऋग्वेदियजुर्वेदिनोः। यथाह विष्णुः "चतुर्थमासस्यादित्यदर्शनमिति"। शौनकोऽपि "चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः" पारस्करः "चतुर्थे मासि निष्क्रमणिकं सूर्य्यमुदीक्षयति तच्चक्षुरितीति" मासे तृतीय इति तु छन्दोगानां गोभिलेन जननान्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रमणविधानात् यथा गोभिलः "जननाद्यस्तृतीयो ज्यौत्स्नस्तस्य तृतीयायामित्यादि"। ज्यौत्स्नः शुक्लपक्षः। अत्रैव कृत्यचिन्तामणिः "तस्मात् स्वस्वविधानतोऽर्कशशिनोरर्घ्यं शिशुं दापयेत्"। ततः तारका॰ संजातार्थे इतच्। निष्क्रमणित संजातनिष्क्रमणे त्रि॰।

**निष्क्रय** पु॰ निष्क्रीयते प्रत्याह्रियतेऽनेन परगृहीतम् निस्+क्री—करणे अच्। १भृतौ वेतने २विनिमयद्रव्ये तुल्यमूल्यद्रव्येण विनिमिते द्रव्ये। भावे अच्। ३क्रये ४बुद्धियोगे ५सामर्थ्ये ६निर्गमने च वैजय॰। ७प्रत्युपकारे ८विनिमये च शब्दार्थचि॰ "उतृक्षिपन् यः पृथिवीभृतां वरम् वरप्रदानस्य चकार शूलिनः। त्रसत्तुषाराद्रिसुताससम्भ्रमस्वयंग्रहश्लेषसुखेन निष्क्रयम्" माघः।

६विक्रये "न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते" मनुः ।

**निष्क्रिय** त्रि० निर्गता क्रिया यस्य प्रा०ब० पत्वम् । क्रियादिव्यापारशून्ये "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" श्रुतिः "निष्क्रियस्य तदसम्भवात्" शा०सू० "अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः" भाषा० । [क्वाथे (भोल) हेमच० ।

**निष्क्वाथ** पु० निःसृतः क्वाथः प्रा० त० पत्वम् । मांसादि-

**निष्टक्वन्** त्रि० निर्+तक-सहने क्वनिप् वेदे षत्वटुत्वे । नितरां सहनशीले स्त्रियां "वनो र च" पा० ङीप् रश्चान्तादेशः । निष्टक्वरी । "दार्वी निष्टक्वरीमिच्छ" अथ० ५।२२।६

**निष्टानक** पु०नितान्तस्तानकः शब्दभेदः प्रा०त०बा०षत्वटुत्वे । अव्ययशब्दे "निष्टानकश्च सुमहांस्तव सैन्यस्य चाभवत्" भा०भी०४८अ० ।

**निष्टि** स्त्री निस–समाधौ क्तिच् । अदितिसपत्न्यां १दितौ "निष्टयाः पुत्रमाच्यावयोतयः" ऋ०१०।१०१।१२ "निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिगीरदितिः तस्याः पुत्रम्" भा० ।

**निष्टुर्** त्रि०निस्+तॄ-क्विप् वेदे बा० उः रपरत्वम् षत्वटुत्वे । निस्तरते शत्रूणामभिभावके "प्र व उपाय निष्टुरे" ऋ० ८।३२।२७ "निष्टुरे शत्रून् निस्तरते" भा० ।

**निष्ठ्य** पु० निर्गत्य स्त्यायते स्त्यै–क निस्+गतार्थे त्यप् वा । विसर्गलोपषत्वष्टुत्वे १चण्डालादौ २म्लेच्छजातिभेदे हेमच० ३पुलादौ च । "यं मे निष्ट्यो यममात्यो निचखान" यजु० ५।२३। "ष्ठ्यै स्त्यै शब्दसङ्घातयोः नितरां स्त्यायति सङ्घातरूपेण सह वर्त्तते इति निष्ठ्यः यद्वा निर्गत्य शरीरात् स्त्यायति विस्तीर्णो भवतीति निष्ठ्यः पुलादिः । यद्वा निर्गतो वर्णाश्रमेभ्यो निष्ठ्यः चण्डालादिः "निसो गते" इति पा० वार्त्तिकेन निस उपसर्गाद्गतार्थे त्यप् इति काशिकायाम्" वेददी० ।

**निष्ठ** त्रि० नि+स्था-क षत्वष्टुत्वे । नितरां स्थितिशीले "अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना" भाषा० ।

**निष्ठा** स्त्री नि+स्था–भावे अ षत्वष्टुत्वे । १निष्पत्तौ २नाशे ३अन्तसीमायां ४निर्वहणे च अमरः । ५याच्ञायां मेदि० । ६धर्मादौ श्रद्धायाम् "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ! । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्" गीता "तन्निष्ठस्य मोक्षोपदेशात्" शा० सू० "तस्मिन्नात्मनि चेतने निष्ठा यस्येति विग्रहः । "तेषां निष्ठा तु का कृष्ण ! सत्वमाहो रजस्तमः" गीता । ७अवधारणे च "घ्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रं मनएव च । न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति" भा० आश्व० ६६५ श्लो० । व्याकरणपरिभाषिते क्तक्तवतुप्रत्यये "क्तक्तवतू निष्ठा" पा० "ञीरनिङ्निष्ठः" धातुपाठः । नितरां तिष्ठन्ति भूतान्यत्र आधारे बा० अ । प्रलये सर्वभूतस्थित्याधारे ८विष्णौ स्त्री "निष्ठा शान्तिः परायणः" विष्णुस० ।

**निः(नि)ष्ठा** त्रि० नि(निर्)+स्था–क्विप् षत्वष्टुत्वे वा विसर्गलोपः । नितरां यथा भूतस्थितौ "जातो निःष्ठामदधुर्गोषु धीरान्" ऋ०३।३१।१० "निष्ठां पूर्वं यथास्थितिमकार्षुः तथा" भा० अस्य शसाद्यजादौ निःष्ठः निःष्ठा निःष्ठे इत्यादिरूपमिति भेदः । [ष्ठेमने व्यञ्जने अमरः ।

**निष्ठान** न० नि+स्था–करणे ल्युट् षत्वष्टुत्वे । भक्ताद्युपसेचने

**निष्ठानक** पु० नागभेदे "निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा" भा०आ० ३५अ० ।

**निष्ठान्त** त्रि० निष्ठा नाशोऽन्ते यस्य । नाशान्ते वस्तुनि । "निष्ठान्तं पश्य चापि त्वं चात्रं धर्मश्च केवलम्" भा० स्त्री० ११अ० । २नितरांस्थित्यन्ते च "नानादिश्य निष्ठान्तो मानुषा बहवो यथा" अनु० १०१अ० ।

**निष्ठित** त्रि० नि+स्था–क्त षत्वष्टुत्वे । १नितरांस्थिते वस्तुनि २निष्ठायुक्ते च "बुद्धियोगबलोत्साहैः सर्वार्थेषु च निष्ठितः" भा०आ० १२२अ० ।

**निष्ठी(ष्ठे)व** पु० नि+ष्ठिव–भावे घञ् वा दीर्घः । ष्ठीवने श्लेष्मादीनां मुखान्निरसने हेमच० ।

**निष्ठी(ष्ठे)वन** न० नि+ष्ठिव–भावे ल्युट् वा दीर्घः । श्लेष्मादीनां मुखेन निरसने "वान्तं निष्ठीवनं चैव कुर्वते चास्य सन्निधौ" भा०शा० ५६अ० "क्षुतेऽवलीढे वान्ते च तथा निष्ठीवनादिषु । कुर्य्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम्" मार्कण्डपु० ३४अ० ।

**निष्ठीवित** न० निष्ठीवं करोति क्तौ निष्ठीव+णिच्–भावे क्त । निष्ठीवनकरणे "वाचः परुषा निष्ठीवितं क्षुतं चाशुभं कथितम्" ह०सं० ५३अ० ।

**निष्ठुर** न० नि+स्था–उरच् मद्गुरादि०नि०षत्वष्टुत्वे । १परुषवाक्ये २कठोरे त्रि० । "गुह्याङ्गामेध्यशब्दानां वचनं निष्ठुरं विदुः । यदन्यद्वा वचो नीचं स्त्रीपुंसमैथुनाश्रयम्"

इत्युक्ते १अश्लीलवाक्ये न० ४तत्तद्विशिष्टे त्रि० अमरः। "हिंसा भवतु ते बुद्धिरेतास्तु कुरु निष्ठुरम्" भट्टिः। "संरब्धहस्तिपकनिष्ठुरचोदनाभिः" माघः।

**निष्ठुरिक** पु० नागभेदे "आप्तः कोटरकश्चैव शिखी निष्ठुरिकस्तथा" भा० उ० १०२ अ०।

**निष्ठ्यूत** त्रि० नि+ष्ठिव–क्त ऊठ्। १मुखेन निरस्ते श्लेष्मादौ "अङ्गुष्ठनिष्ठ्यूतमियोऽर्द्धसक्थैः" माघः "श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत्तु कामतः" मनुः भावे क्त। २निष्ठीवने न०।

**निष्ण** त्रि० नि+स्ना–क "निनदीभ्यां स्नातेः कौशले" पा० षत्वे टुत्वम्। कुशले "आतिथ्यनिष्णा वनवासिमुख्याः" भट्टिः।

**निष्णात** त्रि० नि+स्ना–कर्त्तरि क्त "निनदीभ्यां स्नातेः कौशले" पा० षत्वे टुत्वम्। १कुशले निपुणे अमरः। "निष्णातैरघ सरसा प्रियासमूहैः" माघः। २पारङ्गते च "वैशम्पायन एवैको निष्णातो यजुषामभूत" भाग० १।४ अ०।

**निष्पक्व** त्रि० नितान्तं पक्वम्। "इदुदुपधस्य चाप्रत्ययस्य" पा० षत्वम्। १अतिशयेन पक्वे व्यञ्जने २क्वाथिते दशमूलादौ च "पर्य्यङ्कपायनिष्पक्वा एतामापो भवन्ति" शत०ब्रा० ६।५।१।१

**निष्पतिष्णु** त्रि० निस्+पत–वा० इष्णुच् षत्वम्। नितान्तपतनशीले "इन्द्रियाणि प्रमाथीनि बुद्ध्या संयम्य यत्नतः। सर्वतो निष्पतिष्णूनि" भा० शा० २५० अ०।

**निष्पतिसुता** स्त्री निर्गतो पतिः सुतश्च यस्याः प्रा० ब० षत्वम्। अवीरायां पतिपुत्रविहीनायां स्त्रियाम् अमरः।

**निष्पत्ति** स्त्री निर्+पद–क्तिन् षत्वम्। १समाप्तौ २सिद्धौ च "कथमप्यम्बुसामन्तरा निष्पत्तेः प्रतीक्ष्यते" कुमा० "निष्पत्तिः कर्मणो दैवे पौरुषे च व्यवस्थिता" मार्क० पु० ४२ अ०।

**निष्पत्र** त्रि० निर्गतमन्यपार्श्वेन निःसृतं पत्रं शरपुङ्खो यस्य प्रा० ब० षत्वम्। १एकपार्श्वनिक्षिप्तसपुङ्खशरस्यापरपार्श्वेन निर्गमयुक्ते मृगादौ ततः "सपत्रनिष्पत्रादतिव्यथने" पा० कृञ्योगे डाच्। निष्पत्राकरोति मृगं सपुङ्खस्य शरस्यापरपार्श्वेन निर्गमनात् निष्पत्रं करोतीत्यर्थः सि० कौ०। निर्गतं पत्रं यस्य। निर्गतपत्रके त्रि०। "विध्यन्त्यनिष्पत्रम्" कात्या० श्रौ० १३।२२।३ "अनिष्पत्रमनिःसृतपत्रं विध्यन्ति क्षत्रियाः" कर्कः।

**निष्पत्रक** त्रि० निर्गतं पत्रं पर्णं यस्य कप्। १पत्रशून्ये स्त्रियां टाप् कापि अत इत्त्वम्। सा च २करीरवृक्षे राजनि०। [यने हेमच०।

**निष्पत्राकृति** स्त्री निष्पत्र+डाच् कृ–भावे क्तिन्। अतिव्य-

**निष्पद** न० निर्गतं पदं पादोऽस्य प्रा० ब० षत्वम्। १पादहीने २तादृशयाने नौकादौ युक्तिकल्पतरुः।

निष्पदयानञ्च नौकादिरूपं तद्विवरणमुक्तं तत्र यथा "नौकाद्यं निष्पदं यानं तस्य लक्षणमुच्यते। अश्वादिकन्तु यद् यानं स्थले सर्वं प्रतिष्ठितम्। जले नौकैव यानं स्यात्तस्मां यत्नतो वहेत्"। तद्घटनादिकालो यथा "सुवारवेला तिथिचन्द्रयोगे चरे विलग्ने मकरादिषट्के। कश्चिऽन्यसम्बव्यतिरेकतोऽन्ये वदन्ति नौकाघटनादि कर्म। अश्विखरांशुसुधानिधिपूर्वामित्रधनाच्युतभे शुभलग्ने। तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे। वृक्षायुर्वेदगदिता वृक्षजातिश्चतुर्विधा। समासेनैव गदितं तेषां काष्ठं चतुर्विधम्"। तद्यथा "लघु यत् कोमलं काष्ठं सुघटं ब्रह्मजाति तत्। दृढाङ्गं लघु यत् काष्ठमघटं क्षत्रजाति तत्। कोमलं गुरु यत् काष्ठं वैश्यजाति तदुच्यते। दृढाङ्गं गुरु यत् काष्ठं शूद्रजाति तदुच्यते। लक्षणद्वययोगेन द्विजातिकाष्ठसंग्रहः। क्षत्रियकाष्ठैर्घटिता भोजमते सुखसम्पद् नौका। अन्ये लघुभिः सुदृढैर्विदधति जलदुष्पदे नौकाम्। विभिन्नजातिद्वयकाष्ठजाता न श्रेयसे नापि सुखाय नौका। नैषा चिरं तिष्ठति भुज्यते च विभिद्यते वारिणि मज्जते च। न सिन्धुगाद्यार्हति लौहबन्धं तल्लौहकान्तैर्ह्रियते हि लौहम्। विपद्यते तेन जलेषु नौका गुणेन बन्धं निजगाद भोजः"। अथ लक्षणानि "सामान्यञ्च विशेषश्च नौकाया लक्षणद्वयम्"। तत्र सामान्यम्। "राजहस्तमितायामा तत्पादपरिणाहिनी। तावदेवोन्नता नौका क्षुद्रेति गदिता बुधैः। अतः सार्द्धमितायामा तदर्द्धपरिणाहिनी। त्रिभागेणोन्नता नौका मध्यमेति प्रचक्षते। क्षुद्राऽथ मध्यमा भीमा चपला पटला भया। दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा। नौकादशकमित्युक्तं राजहस्ताद्यनुक्रमात्। एकैकवृद्धैः सार्द्धैश्च विजानीयाद् द्वयं द्वयम्। उन्नतिश्च प्रवीणा च हस्तादर्द्धांशसम्मिता। अत्र भीमा भया चैव गर्भराख्या शुभप्रदा। मन्थरा परतोयासु तासामेवाप्यधोगतिः। तासां गुणस्तु संक्षेपात् दृढता च प्रकीर्त्तिता"। अथ विशेषः "दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा। तत्र दीर्घा यथा "राजहस्तद्वयायामा अष्टांशपरिणाहिनी। नौकेयं दीर्घिका नाम दशांशेनोन्नतापि च। दीर्घिका तरणिर्लोला

गत्वरा गामिनी तरिः। जङ्घाला प्लाविनी चैव धारिणी वेगिनी तथा। राजहस्तैकैकवृद्ध्या नौकानामानि वै दश। उन्नतिः परिणाहश्च दशाष्टांशमितौ क्रमात्। अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत्। लोलायमानामारभ्य यावत् भवति गत्वरा। लोलायाः फलमाधत्ते एवं सर्वात्र निर्णयः। वेगिन्याः परतो या तु साखिलायोत्तरा तथा"। भोजोऽपि "नौकादीर्घं यथेच्छं स्यात् तत्रैतानि विवर्जयेत्। हस्तसंख्या परित्याज्या दवसु४वेद८ग्रहोत्तरैः। पञ्चोत्तरमिता नौका कुलं हन्ति बलं धनम्। नवतेरुत्तरे यापि या चत्वारिंशतः परा"। यावदपरदशकं तावदेव तत् फलमिति। अथोन्नता। "राजहस्तद्वयमिता तावत् प्रसरणोन्नता। ऊर्ध्वमूर्ध्वाभिधा नौका क्षेमाय पृथिवीभुजाम्। ऊर्ध्वानूर्ध्वा स्वर्णमुखी गर्भिणी मन्थरा तथा। राजहस्तैकैकवृद्ध्या नाम पञ्च त्रयं भवेत्। अत्रानूर्ध्वा गर्भिणी च निन्दितं नाम युग्मकम्। मन्थरायाः परास्तु ताः शुभाय यथोक्तवत्"। भोजोऽपि। बाणान्त्युत्तरतो मानं नौका नाम शुभा वहेत्। पञ्चाशदूर्ध्वां दुःखार्थं धननाशं त्वयोर्द्धतः। इत्युक्ता "धात्वादौ नाऽतो वच्मि निर्णयं तरिसंश्रयम्। कनकं रजतं ताम्रं त्रितयं वा यथाक्रमम्। वक्त्रादिभिः परिन्यस्य नौकाचित्रणकर्मणि। चतुःशृङ्गा त्रिशृङ्गा वा द्विशृङ्गा चैकशृङ्गिणी। सितरक्तपीतनीलवर्णास्ताः स्युर्यथाक्रमम्। केशरी महिषो नागो द्विरदो व्याघ्र एव च। पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम्। नावां मुखोपरिन्यस्य आदित्यादिदशासुवाम्। कलशो दर्पणश्चन्द्रस्त्वेदशानां महीभुजाम्। हंसः केकी शुकः सिंहो गजोऽहिर्व्याघ्रषट्पदौ। आदित्यादिदशाजातनौकोपरि परिन्यसेत्। नौकासु मणिविन्यासो विज्ञेयो नवदण्डवत्। मुक्तास्तवकैर्युक्ता नौका स्यात् सर्वतो भद्रा। तत्संख्या चेदथ रसवेदद्वयसम्मिता क्रमशः। कनकादीनां माला जयमालेति गद्यते सद्भिः। वज्रछत्रे द्वितये एकैके वैश्यशूद्रयोनी। निर्गृहं सगृहं वाथ तत्सर्वं द्विविधं भवेत्। निर्गृहं पूर्वमुद्दिष्टं सगृहाणि यथा शृणु। सगृहा त्रिविधा प्रोक्ता सर्वमध्याग्रमन्दिरा। सर्वतो मन्दिरं यत्र सा ज्ञेया सर्वमन्दिरा। राज्ञां कोशाश्वनारीणां फलमत्र प्रशस्यते। मध्यतो मन्दिरं यत्र सा ज्ञेया मध्यमन्दिरा। राज्ञां विलासयात्रादिवर्षासु च प्रशस्यते। अग्रतो मन्दिरं यत्र सा ज्ञेया अग्रमन्दिरा। चिरप्रवासयात्रायां रणे काले घनात्यये। मन्दिरमानं नौकाप्रसरत एवार्द्धभागतो न्यूनम्"। भोजस्तु "दीर्घवृत्तवसुषड्द्विकरानेकदिङ्नवमिता यथाक्रमम्। राजपञ्चभुजसम्मितोन्नतिर्मन्दिरे तरिगते महीभुजाम्। भास्करादिकदशाभुवां पुनर्धातुनिर्णयनमत्र पूर्ववत्। पताकाकलसादीनां निर्णयो नवदण्डवत्। काष्ठजं धातुजं चेति मन्दिरं द्विविधं भवेत्। काष्ठजं सुखसम्पत्त्यै विलासे धातुजं मतम्। अत्र शय्यासनादीनां मन्थरोल्लोचयोरपि। अन्ये प्राग्वैव मुनिभिर्निर्णयः पूर्ववन्मतः। दिङ्मात्रमिदमुद्दिष्टं नौकालक्षणमञ्जसा। प्रधानेष्वेव नियमो अप्रधाने न निर्णयः। लघुता दृढता चैव गामिताऽच्छिद्रता तथा। समतेति गुणोद्देशो नौकानां सम्प्रकाशितः। एवं विचिन्त्य यो राजा नौकायानं करोति च। स चिरं सुखमाप्नोति विजयं समरे श्रियम्। योऽज्ञानादन्यथा मानं नौकानां कुरुते नृपः। तस्यैतानि विनश्यन्ति यशोवीर्यं बलं धनम्"। जघन्यजलयानानि यथा "नौकान्यतो जले यानं जघन्यमिति गद्यते। तद्भेदावह-यक्तौ तु पाश्चात्त्यानां प्रकीर्त्तिताः। द्रोणीरूपन्तु यद्यानं द्रोणीयानं तदुच्यते। घटीभिर्घटितं यानं घटीनौकेति गद्यते। तुम्बाद्यैस्तु फलैर्यानं फलयानं प्रचक्षते। चर्मभिस्थूलपूर्णैर्यच्चर्मयानं तदुच्यते। यानं यद्वपुभिर्दृढैश्चयानं तदुच्यते। जन्तुभिः सलिले यानं जन्तुयानं प्रचक्ष्यते। बाहुभ्यां सन्तरेद्वारि जघन्येषु न निर्णयः"

**निष्पदी** स्त्री निर्गतः पादोऽस्याः पादः अन्त्यलोपः समा॰ कुम्भपद्या॰ ङीष् पद्भावः विसर्गस्य षः। १पादहीनायां स्त्रियाम्। निर्+पद–क्विप्। २निर्गते "निष्पदो सुहृज्जानाम्" भाग॰ १०।१०२।६ "निष्पदः निर्गच्छन्तः" भा॰।

**निष्ष्पन्द** त्रि॰ निर्गतः स्पन्दो यस्य प्रा॰ब॰। विसर्गलोपाभावे "इदुदुपधस्य चाप्रत्ययस्य" पा॰ षत्वष्टुत्वे। स्पन्दनरहिते "ज्यावन्धनिष्पन्दभुजेन यस्य"। "मैथिलीतनयोद्गीतनिष्पन्दमृगमाश्रमम्" रघुः। विसर्गलोपे न षत्वम्।

**निष्पन्न** त्रि॰ निर्+पद–क्त षत्वम्। १सिद्धे २समाप्ते च।

**निष्परिग्रह** त्रि॰ निर्गतः परिग्रहः यस्य प्रा॰ब॰। १विषयादिसङ्गरहिते कन्थापादुकादिभिन्नद्रव्यरहिते २यत्यादौ च "आत्मन्यात्मानमाधाय निर्द्वन्द्वो निष्परिग्रहः" मार्क॰ पु॰ १६अ॰।

**निष्पवन** न॰ निस्+पू—भावे ल्युट् षत्वम्। धान्यादेर्निस्तुषी-करणे। निष्पावशब्दार्थे "निष्पवनादिफलीकरणान्तं भेदेन प्रात्यामभ्यभिमन्त्रणादिफलनिधानान्तं कण्डनम्" कात्या॰ श्रौ॰ पद्धतौ कर्कः।

**निष्पाद्** पु॰ निर्गतौ पादौ यस्य प्रा॰ब॰ अन्त्यलोपः समा॰ विसर्गस्य षः। निर्गतपादके ततः सिध्मा॰ अस्त्यर्थे लच्। निष्पादल तद्युक्ते देशादौ त्रि॰।

**निष्पादक** त्रि॰ निर्+पद—णिच्-ण्वुल् विसर्गस्य षः। निष्पत्तिकारके "न चार्थचिन्तने तस्य मन्त्री सहायः किन्तु स्वयमेव निष्पादकः" सा॰द॰।

**निष्पाव** पु॰ निष्पूयते तुषाद्यपनयनेन शोध्यतेऽनेन निर्+पू—करणे घञ् षत्वम्। १शूर्पादिवायौ तेन हि खलस्थ-धान्यादिकं कडङ्गरादिशून्यं करोति। कर्मणि घञ्। २कडङ्गरे (आगडा) ३राजमाषे (बरबटी) ४श्वेतशि-म्बीधान्ये ५निर्विकल्पे त्रि॰ मेदि॰। भावे घञ्। ६धान्यादीनां विलुषीकरणे अमरः। "चोरयित्वा तु निष्पावान् जायते ऽट्टहगोलकः" मार्क॰ पु॰ १५अ॰ संज्ञायां कन्। श्वेतशिम्ब्यां राजनि॰ "निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः। कषायस्तन्यपित्ता-सृङ्मूत्रवातविबन्धकृत्। विदाह्यूष्णविषश्लेष्मशोथघ्नःत् मल-नाशनः" भावप्र॰। ततः सिध्मा॰ अस्त्यर्थे लच्। निष्पावल. वितुषीकरणयुक्ते धान्यादौ त्रि॰ गौरा॰ ङीष्। निष्पावी शिम्बीभेदे स्त्री राजनि॰।

**निष्पुलाक** त्रि॰ निर्गतः पुलाको यतः प्रा॰ब॰ षत्वम्। १पुलाकरहिते धान्यादौ (आगडा) तुच्छ धान्यरहिते उत्सर्पिण्यां २जैनभेदे पु॰ हेम॰।

**निष्पेष** पु॰निर्+पिष—घञ्। १निष्पीडने २निघर्षणे ३चूर्णने "नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलम्" रघुः। तस्मै प्रभवति सन्तापादि॰ ठञ्। नैष्पेषिक निष्पेषस-म्पादके। अभावे अव्य॰ ४पेषणाभावे अव्य॰ निरुदका॰ अन्तोदात्तताऽस्य भावे ल्युट्। निष्पेषणमप्यत्र न॰।

**निष्प्रकम्प** त्रि॰ निर्गतः प्रकम्पो यस्य प्रा॰ब॰ षत्वम्। १प्रक-म्पकम्पशून्ये त्रयोदशमन्वन्तरीये २सप्तर्षिभेदे पु॰। तदुप क्रमे "निष्प्रकम्पस्तथात्रेयो निर्मोहः काश्यपस्तथा। सुतपाश्चैव वासिष्ठः सप्तैते तु महर्षयः" हरिवं॰ ७अ॰।

**निष्प्रतिभ** त्रि॰ निर्गतः प्रतिभायाः निरा॰त॰ षत्वम्। १जडे अस्से २प्रागल्भ्यरहिते च जटाध॰ "वीणाकाराश्च हाराश्च छन्ननिष्प्रतिभाश्च च" हरिवं॰ ८३अ॰।

**निष्प्रत्यूह** त्रि॰ निर्गतः प्रत्यूहो यस्य प्रा॰ब॰ षत्वम्। निर्विघ्ने निरुपसर्गे "निष्प्रत्यूहस्तुपाकस्ते भगवतः कौमोदकीलक्षणः" मुरारिनाटकम्।

**निष्प्रभ** त्रि॰ निर्गता प्रभाऽस्य प्रा॰ब॰ षत्वम्। १दीप्तिशून्ये अमरः। "निष्प्रभश्च रिपुरास भूभृताम्" रघुः। २दा-नवभेदे पु॰। "निष्प्रभः सुप्रभश्चैव तथैव च निरुद्दरः" हरिवं॰२६३अ॰ ३नानादानयोक्तौ।

**निष्प्रयोजन** त्रि॰ निर्गतं प्रयोजनमस्य प्रा॰ब॰ षत्वम्। प्रयोजनशून्ये "गुरुणाप्युपदेशो हि निष्प्रयोजनतां व्रजेत्" प्राय॰त॰ "निरानन्दं निरास्वादं निष्प्रयोजनमारुतम्" हरिवं॰अ॰।

**निष्प्रवाण** न॰ प्रकर्षेण वयति अनेन प्र+वे—ल्युटौ करणे ल्युट् प्रवाणं तन्त्रवयनसाधनद्रव्यं निर्गतं प्रवाणात् निरा॰त॰। नवाम्बरे हारा॰।

**निष्प्रवाणि** त्रि॰ प्रोयन्तेऽस्यामनया वा प्र+वेञ्—करणे ल्युट् ङीप् प्रवाणी तन्त्रवायशलाका निर्गतः प्रवाण्याः निरा॰ स॰ गौणत्वेन ह्रस्वः षत्वम्। नवाम्बरे अभिनवे (ताँतकाटा) वसने अमरः।

**निष्प्राण** त्रि॰ निर्गतः प्राणः तज्जन्योच्छ्वासादिर्यस्य प्रा॰ब॰ षत्वम्। श्वासप्रश्वासादिशून्ये "ग्लानिर्निष्प्राणताकम्पका-र्श्यानुत्सहतादिकृत्" सा॰द॰ "संस्तम्भितमिवाभाति निष्प्राणसदृशाकृति" (बलम्) हरिवं॰ ४६अ॰।

**निष्फल** त्रि॰ निर्गतं फलं यस्मात् प्रा॰ब॰षत्वम्। १फलरहिते "अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः" कुमा॰। फलशून्ये धान्यखण्डे २पलाले (नाड़ा) पु॰ अमरः। ३विगतार्त्तवायां स्त्रियां स्त्री गौरा॰ ङीष्। निष्फली विगतरजस्कायां स्त्रियां स्त्री शब्दरत्ना॰।

**निष्फेन** त्रि॰ निर्गतं फेनं यस्य प्रा॰ब॰ षत्वम्। फेनरहिते उपरतफेने "यत् क्वाथ्यमानं निर्वेगं निष्फेनं निर्मलं लघु" सुश्रुतः। पक्षे विसर्गोपध्मानीयौ

**निष्य(स्य)न्द** पु॰ नि+स्यन्द—भावे घञ् वा षत्वम्। क्षरणे जलादेः स्वयंस्रवणे "हिमनिष्यन्दशीतलम्।" अच्.। २निष्यन्दयुक्ते त्रि॰।

**निष्यूत** त्रि॰ नि+सिव—क्त ऊठ् षत्वम्। नितान्तस्यूते

**निष्षन्धि** त्रि॰ निर्गतः सन्धिः सन्धानं यस्य प्रा॰ब॰सुषामा॰ षत्वम् इत्वञ्च। सन्धिरहिते।

**निष्षम** अव्य॰ निर्गता समा यस्य तिष्ठद्गु प्र॰ अव्ययी॰ षत्वद्गुत्वे। वत्सरातीते।

**निष्षामन्** त्रि० निर्गतं षाम यस्य प्रा०त० सुषामा० षत्वम् ष्टुत्वञ्च । षामशून्ये । [निताल्तषेधे ।

**निषषेध** पु० निस्+षिध–भावे घञ् सुषामा० षत्वम् ष्टुत्वञ्च ।

**निस्** अव्य०निस्–क्विप् उपसर्गभेदः । १निषेधे २निश्चये ३स्वाकल्ये ४अतिक्रमे च शब्दार्थचि० । निर् शब्दे दृश्यम्

**निसम्पात** पु० निवृत्तः सम्पातः सञ्चारो यत्र । निशीथे अर्द्धरात्रे शब्दरत्ना० निरा समासे निःसम्पातोऽप्यत्र ।

**निसर** त्रि० निसरति नि+सृ–अच् । नितान्तसर्त्तरि नितान्त गन्तके "मन्यवेऽयस्तापं क्रोधाय निसरम्" यजु० ३०।१४ अ० ।

**निसर्ग** पु० नि+सृज–घञ् । १स्वभावे २स्वरूपे ३सृष्टौ च मेदि० "स्वर्गोनिसर्गोज्ज्वलः" नैष० "मधुरालापनिसर्गपण्डिताम्" कुमा० "निसर्गदुर्बोधमबोधविक्लवाः" किरा० "निसर्गज तु तत्तस्य कस्तस्मात्तदपोहति" मनुः । प्रच्छायां निसर्गबलम् यद्दवलशब्दे २७१४ पृ० दृश्यम् ।

**निसार** पु० नि+सृ–घञ् । समूहे त्रिका० ।

**निसिन्धु** पु० नितरां सिन्धुरिव बहुद्रवपत्रादिमत्त्वात् । सिन्धुवारे (निसिन्दा) शब्दच०।

**निसुन्ध(न्द)** पु० असुरभेदे "सादिता भौरवाः काथा निसुन्ध(न्द) न्दतको हतो" भा०व० १२अ० "हयग्रीवो निसु(न्द)श्च वीरः पञ्चनखस्तथा" हरिवं० १२२अ० ।

**निसूदक** त्रि० निसूदयति नि+सूदि–ण्वुल् । हिंसके "तथान्येर्यौनिसूदकः" याज्ञ०।

**निसूदन** न० नि+सूद–भावे ल्युट् । १मारणे वधे अमरः । कर्त्तरि ल्यु । २मारके नाशके त्रि० "यमिन्द्रशब्दार्थनिसूदनं हरेः" माघः "बलनिसूदनमर्थपतिञ्च तम्" रघुः ।

**निसृता** स्त्री नितरां सृता नि+सृ–क्त । २निवृतायाम् (तेओडि) रत्नमा० । २नितान्तगते त्रि० ।

**निसृष्ट** त्रि० नि+सृज–कर्मणि क्त । १न्यस्ते अमरः २मध्यस्थे त्रिका० । "न स्वामिना निसृष्टोऽपि शूद्रो दास्याद्विमुच्यते" मनुः ।

**निसृष्टार्थ** पु० "उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सन्दिष्टः कुरुते कर्म निसृष्टार्थस्तु स स्मृतः" सा०द० इत्युक्ते १दूतभेदे "निसृष्टार्थोमितार्थश्च तथा सन्देशहारकः । कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः" सा०द० "यः स्वामिना नियुक्तोऽपि धनायव्ययपालने । कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः" २वहस्त्युक्ते "धीरः स्थिरमतिः शूरः स्वामिकार्यविधायकः । स्वपोहप्रकाशी च निसृष्टार्थः स उच्यते" सङ्गीतदा० च उक्ते ३पुरुषे ।

**निसोढ** त्रि० नि+सह क्त ओत् ओत्त्वत्वान्न षः । नितान्तसह्ये एवं निसोढवत् । निसोढि इत्यादावपि न षः ।

**निस्तत्त्व** त्रि० निर्गतं तत्त्वं वास्तवं रूपं स्वरूपं वा यस्य प्रा०व० । असत्पदार्थे ।

**निस्तनी** स्त्री नितरां स्तनस्तदाकारोऽस्त्यस्याः अच् गौरा० ङीष् वा रोर्लोपः । वटिकायां (वडि) अत्र निस्तनीत्येव पाठः शब्दच० । निर्गतौ स्तनौ यस्याः वा विसर्ग लोपः । स्तनहीनायां स्त्रियाञ्च स्वाङ्गत्वात् वा ङीष् पक्षे टाप् इति भेदः ।

**निस्तन्द्र** त्रि० निष्क्रान्ता तन्द्रा यस्य प्रा०व० । १तन्द्रारहिते २आलस्यरहिते च "निस्तन्द्रो ह्यवितथसंस्कृतप्रभाषी" इत्यु०

**निस्तन्द्रि** त्रि० निर्गता तन्द्रिरालस्यं यस्य प्रा०। आलस्यरहिते । निर्गता तन्द्र्याः निरा०त०। निस्तन्द्री इत्येव स्त्रीप्रत्ययान्तत्वाभावात् गोणत्वेऽपि न ह्रस्व इति भेदः ।

**निस्तरण** न०निर्+तॄ–करणे ल्युट् । १उपाये । भावे ल्युट् । २निस्तारे ३पारगमने ४तरणे च मेदि० ५निर्गमे विश्वः ।

**निस्तरीक** अव्य० तरे देयः ठन् तरीकः अभावे अव्ययी० । १तरपार्थदेयकराभवे निरुदका० अन्तोदात्तताऽस्य । प्रा०व०। २तरीकशून्ये त्रि० ।

**निस्तीप** त्रि० तरीं पाति पाः क निर्गतस्तरीपो यस्मात् प्रा०व० । १नौकापालकशून्ये अभावे अव्ययी० । २तरीपाभावे अव्य०। निरुदका० अस्यान्तोदात्तता । [अमरः।

**निस्तर्हण** न० नि+तृह–हिंसायां भावे ल्युट् । मारणे

**निस्तल** त्रि० निरस्तं तलं प्रतिष्ठा यस्य । १वर्त्तुले २तलशून्ये अतले न० अमरः । ३चले मेदि० चलस्य प्रतिष्ठाराहित्यात् तथात्वम् । नितान्तं तलं प्रा०व० । ५तले हेमच० ५वटिकायां स्त्री शब्दच० गौरा० ङीष् ।

**निस्तार** पु० निःशेषेण तारः पारगमनम् । १उद्धारे २पारगमने ३अभीष्टप्राप्तौ च "जीर्णा तरिः सरिदतीवगभीरनीरा बाला वयं सकलमित्यनर्थहेतुः । निस्तारबीजमिदमेव कृशोदरीणां यन्माधव ! त्वमसि सम्प्रति कर्णधारः" उद्भटः । "कलौ पापयुगे घोरे तपोहीनेऽतिदुस्तरे । निस्तारबीजमेतद्धि यद्ब्रह्ममन्त्रस्य साधनम्" महानि०त०।

**निस्तुष** त्रि० निर्गतास्तुषा यतः प्रा०व०। १वितुषीकृते धान्ययवादौ "पूर्वैर्दुर्दिवसाग्नौ निस्तुषयवानाम्" कात्या० श्रौ० ५।३।२। २निर्मले च ।

**निस्तुषक्षीर** पु॰ निस्तुषं निर्मलं क्षीरं यस्य । गोधूमे राजनि॰

**निस्तुषरत्न** न॰ निस्तुषं निर्मलं रत्नम् । स्फटिके राजनि॰ ।

**निस्तुषित** त्रि॰ निस्तुष+कृतौ णिच्—क्त । १त्वग्विहीने कृते तण्डुलादौ २लघूकृते ३त्यक्ते च मेदि॰ ।

**निस्तेजस्** त्रि॰ निर्गतं तेजोऽस्य प्रा॰ब॰ । तेजोहीने "न-मेतव्यं कथं चैते मात्रा निस्तेजसः कृताः" मार्कण्डपु॰ १८अ॰ ।

**निस्तोद** पु॰ निस्+तुद—भावे घञ् । नितान्तव्यथने "सू-चीभिरिव निस्तोदः" "तेषु कालेषु निस्तोदो मारुतेनो-पजायते" सुश्रुतः भावे ल्युट् । निस्तोदनमप्यत्र न॰ । "पार्श्वभङ्गो गुदवस्तिनिस्तोदनम्" सुश्रुतः ।

**निस्त्रिंश** पु॰ निर्गतस्त्रिंशतोऽङ्गुलिभ्यः डच् समा॰ । १खड्गे अमरः त्रिंशदङ्गुल्यधिकस्यैव खड्गत्वात् ततो न्यूनत्वे छुरिका । तत्तुल्यहिंसकत्वात् २निर्दये त्रि॰मेदि॰ "हे निस्त्रिंश (निर्दय) विमुक्तकण्ठकरुणं तावत् सखी रोदितु" अमरुशतकम् "सधनुर्वद्धनिस्त्रिंशः पादचारीव पर्वतः" भा॰आ॰ १३६अ॰ । ३मन्त्रभेदे "नवाक्षरो भुव युतो मनुर्निस्त्रिंश ईरितः" तन्त्रसा॰ ।

**निस्त्रिंशपत्त्रिका** स्त्री निस्त्रिंशः खड्ग इव पत्त्रमस्या कप् कापि अत इत्त्वम् । स्नुहीवृक्षे राजनि॰ ।

**निस्त्रिंशिन्** त्रि॰निस्त्रिंशः धार्य्यत्वेनास्त्यस्य इनि । खड्ग धारिणि "सन्नद्धा लोहितोष्णीषा निस्त्रिंशिनो याज-येयुः" आश्व॰श्रौ॰ ६।७।४ स्त्रियां ङीप् ।

**निस्त्रैगुण्य** त्रि॰ निष्क्रान्तः त्रैगुण्यात् त्रिगुणकार्य्यात् संसा-रात् तत्कार्येभ्यः कामादिभ्यो वा निरा॰त॰ । १कामा-नादिशून्ये २संसारातीते च "निस्त्रैगुण्यो भवार्जुन !" गीता ।

**निस्त्रैणपुष्पी** स्त्री निर्गतं स्त्रैणं स्त्रीरागादि यस्मात् प्रा॰ब॰ निस्त्रैणं पुष्पमस्याः ङीष् । राजधुस्तूरवृक्षे राजनि॰।

**निस्स्नेह** त्रि॰ निर्गतः स्नेहः प्रेम तैलादिकं वास्य प्रा॰ब॰। १प्रेमशून्ये २तैलशून्ये च ३मन्त्रभेदे पु॰ "शतद्वयं द्विन-वतिरेकहीना तथापि वा । यावच्छततयं सङ्ख्या निस्-स्नेहास्ते प्रकीर्त्तिताः" तन्त्रसा॰पक्षे विसर्गः । निःस्नेहः

**निस्स्नेहफला** स्त्री निःस्नेहं फलमस्याः । श्वेतकण्टकार्य्यां राजनि॰ । पक्षे विसर्गः ।

**निस्पन्द** पु॰ निर्गतः स्पन्दो यस्य प्रा॰ब॰ वा विसर्गलोपः । १स्पन्दनरहिते "स्फुञ्जे घने नैषधकेशपाशे निपत्य नि-ष्पन्दतरीभवद्भ्राम्" नैष॰ । २चेष्टाशून्ये पक्षे विसर्गः ।

**नि(ष्पृ)स्पृह** त्रि॰ निर्गता स्पृहा यस्य वा विसर्गलोपाभावे विसर्गस्य इदुदुपधत्वेन षत्वे ष्टुत्वम् ऋरोऋरीति प लोपे एकपः । १विषयादिषु इच्छाशून्ये "व्यासादीनां निस्पृहाणां पाराध्यमिह दृश्यते" "निस्पृहः सर्व-कामेभ्यो युक्तइत्युच्यते तदा" गीता । २अग्निशिखा-वृक्षे स्त्री शब्दर॰। अव्ययी॰ ३स्पृहाया अभावे अव्य॰। विसर्गलोपे न षः ।

**निस्यन्द** पु॰ नि+स्यन्द—घञ् वा षत्वम् । १स्यन्दने ईषत्क्ष-रणे । कर्त्तरि अच् । २तद्युते त्रि॰ । "शशाङ्ककिरणा-हतचन्द्रकान्तो निस्यन्दनीरनिकरेण कृताभिषेका" माघः "तदङ्गनिस्यन्दजलेन लोचने" रघुः ।

**निस्र(स्रा)व** पु॰नि+स्रु—अप्, संज्ञायां घञ् वा । १भक्त-मण्डे (माड) अमरः । भावे अप् घञ् वा । २अप-क्षरणे च ।

**निस्स्व** त्रि॰ निर्गतं स्वमस्य प्रा॰ब॰ । दरिद्रे पक्षे विसर्गः ।

**नि(स्व)स्वान** पु॰ नि+स्वन—अप् घञ् वा । शब्दे अमरः । "सुखश्रवा मङ्गलतूर्यनिस्वनाः" रघुः "वायुं कृत्वाथ भ्राजाभ्यां युङ्क्ते वैवस्वतं यमम् । विद्युत् कृत्वाथ निस्वानं मेरुं कृत्वाथ वै ध्वजम्" भा॰द्रो॰ २०२अ॰ । आर्षे विद्युत्मित्यत्र अमो लोपः ।

**निस्सीम** त्रि॰ निष्क्रान्ता सीमा यस्मात् प्रा॰ब॰ विसर्गस्य वा सः । अवधिशून्ये अपर्य्यन्ते "निः(स)सीमानन्दमासी-दुपनिषदुपमा तत्परीभूय भूयः" नैष॰ ।

**निह** त्रि॰ निहन्ति नि+हन—ड । निहन्तरि "अति निहो अति स्रिधः" यजु॰ २७।६

**निहनन** न॰ नि+हन—ल्युट् । १वधे अमरः । उदात्तस्व-रेणानुदात्तादेरनुच्चारणरूपे निघाते च । निघातशब्दे दृश्यम् ।

**निहन्तृ** त्रि॰ नि+हन—तृच् । १नाशकर्त्तरि "निहन्ता वैर-कारणाम्" भट्टिः स्त्रियां ङीप् । २महादेवे पु॰ "भग-हारी निहन्ता च कालो ब्रह्मा पितामहः" भा॰अनु॰ १७अ॰ "अनुमन्ता विशसिता निहन्ता क्रयविक्रयी" मनुः एकपदे अन्यस्वरोच्चारणाप्रयोजके निघातकर्त्तरि ३उदात्ते स्वरभेदे च अतएव "निहन्त्यरीनेकपदे य उदात्तः स्वरानिव" माघे उदात्तस्वरस्य एकपदे अन्य-स्वराणां निहन्तृत्वस्योपमानविधयोक्तम् "अनुदात्तं पद-मेकवर्जमिति" पा॰ परिभाषाबलेन तस्य तथात्वम् निघातशब्दे दृश्यम् ।

निह्नव पु० नि+ह्वे—अप् "ह्वः संप्रसारणञ्च" पा० सम्प्रसार-णम् याऽथादि पा०सू० अस्य अन्तोदात्तता। आह्वाने "आदित्य अकारः निह्नव एकारः"छा०उ०"निह्नव इत्या-ह्वानमेकारः स्तोभः। एहीति चाह्वयन्तीति तत्सामा-न्यात्" भा०। "इन्द्र! नेदीय एदिहीन्द्रो निह्नवः प्रयासः" आश्व०श्रौ० ५।१४।५

निहाका स्त्री नियतं जहाति भुवं हा—कन् ह्रस्वः। गो-धिकायाम् अमरः "शाकं नश्च निहाकया" ऋ०१०।९७ ११ "नीहाराय स्वाहा निहाकायै स्वाहा" तैत्ति० सं० ५।५।११।११

नि(नी)हार न० निह्रियते नि+हृ—कर्मणि घञ् वा दीर्घः। ह्रस्वमध्यः। १हिमे शब्दरत्ना०। दीर्घमध्यः। तत्रार्थे अमरः २कुज्झटिकायां कुल्लू० "नीहारे वाणशब्दे च सन्ध्ययोरेव चोभयोः" मनुः। "नीहारः कुज्झटिका" कुल्लू०कः स च घनीभूतं शिशिरं (बरफ) इति ख्यातं कुज्झटिका च "नीहारमग्नो दिनपूर्वभागः" रघुः "एवं तयोक्तो भगवान्नीहारमसृजत् प्रभुः" भा० आ० ६०अ०। अत्रस्वगत्वयोक्तः परावरः कुज्झटिकारूपं नीहारं सृष्टवानिति प्रसिद्धम्।

निहिंसन न० नि+हिन्स—भावे ल्युट्। मारणे अमरः।

निहित त्रि० नि+धा—क्त हिरादेशः। १आहिते २स्थापिते ३निक्षिप्ते च "धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः" भा०व० ३१२अ०।

निहीन त्रि० नितरां हीनः प्रा०स०। १नीचे २पामरे अमरः। "निहीनैः परिक्लिश्यन्तीं समुपेचन्ति मां क-थम्" भा०व०१२अ०। समुपेचन्तीत्यत्र आर्षः पदव्यत्ययः।

निह्नव पु० नि+ह्नु—अप्। १शाठ्ये अन्यथा स्थितस्य वस्तुनो ऽन्यथात्वेन २कथने अपलापे। "निह्नवे साक्षिभावि-तम्"मनुः"निह्नवे याचितो दद्याद्धनं राज्ञे च तत्समम्" याज्ञ०। नि+ह्नु—क्तिन्। निह्नुतिरप्यत्र स्त्री अमरः।

नी त्रि० नयति नी+कर्त्तरि—क्विप्। प्रापके। ङौ न्याम्

नीक पु० नी—कक्। हत्तभेदे [२अवहेलने शब्दार्थचि०।

नी(नि)कार पु० नि+कृ—भावे घञ् वा दीर्घः। १न्यक्कारे

नीकाश पु०नि+काश—घञ्। उत्तरपदस्थः १उपमाने अमरः अस्य निभादित्वेन नित्यसमास एव पृथक्प्रयोगाभा-वात्। २निश्चये पु० मेदि० "आकाशनीकाशतटां तोरवा-नीरसङ्कुलाम्" भा०व० १८२अ०।

नीकुलक पु० प्रवरभेदे हेमा०व्र० प्रवरोक्तौ दृश्यम्।

नीक्षण न० नीक्ष्यतेऽनेन नि+ईच—करणे ल्युट्। पाकादि-परीक्षासाधने काष्ठभेदे "यन्नीक्षणं मांसपचन्याः" ऋ० १।१५२।१३ "नीक्षणं पाकपरीक्षासाधनं काष्ठम्" भा०।

नीच त्रि० निकृष्टामीं शोभां चिनोति चि—ड। जातिगुण कर्मादिभिः निकृष्टे १अधमे अमरः। २वामने खर्वे च अमरः। ३चोरनामगन्धद्रव्ये पु० राजनि०। ४निम्ने च। नीचसङ्गदोषो यथा "न प्राप्नोति सुखं किञ्चिन्नीच-सङ्गान्महानपि। मेतत्सङ्गात् महादेवो नग्नो भस्मविभू-षितः। प्रविश्य निलयं नीचः स्तोधनादिकमिच्छति। स्वयं नेतुं न शक्नोति तदा नाशयति ध्रुवम्। स्थिते गुणेऽपि नीचस्तु यत्नाद्दोषं प्रपद्यते। किञ्चित्तु सङ्गमा-साद्य तदुक्तं स्यात् सनातनम्। सतां श्रुत्वा गुणं नीचः श्रोतुमायाति बन्धुवत्। ततः समयमासाद्य प्रकाशयति तद्धनम्। मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्। मनस्यन्यद्वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्" पाद्मे क्रिया योगसारे ५अ०। "बुद्धिश्च हीयते पुंसां नीचैः सह स-मागमात्। मध्यमैः मध्यतां याति श्रेष्ठतां याति वि-शमैः" भा० शा०। "प्रायो नीचानपि मेदिनीभृतः" माघः। "नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि" मनुः। ग्रहभेदानाम् उच्चशब्दद्दर्शितोच्चस्थानात् सप्त-मस्थाने तत्र रव्यादीनां यद्यद्र भवति तत् नीचस्थान-शब्दे दृश्यम्। स्वार्थे क। नीचक तत्रार्थे

नीचकदम्ब पु० नीचः कदम्बो यस्मात् ५त०। मण्डीरे नैघण्टुप्रकाशिका।

नीचका स्त्री निकृष्टामीं शोभां चकते प्रतिहन्ति चक—प्रतिघाते अच्। उत्तमायां गवि भरतः।

नीचकिन् त्रि० निकृष्टामीं शोभां चकते चक—प्रतिघाते बा० इनि। उक्षे हला०।

नीचकैस् अव्य० नीचैस् अव्ययस्य चैः पूर्वमकच्। नीचैरित्यर्थे

नीचग त्रि० नीचं निम्नं गच्छति गम—ड। १निम्नगामिनि २जले च। ३नीचवर्णगामिन्यां स्त्रियां स्त्री"नीचगामङ्गनां प्राप्य चन्द्रैर्मण्डलं लिखेत्" तन्त्रम्। ३स्वस्वोच्चस्थानात् सप्तमं स्थानं नीचं तत्स्थानस्थिते ग्रहे "तत्सप्तमं भवेन्नीचम्" ज्यो०ति०। "सुनीचगेऽस्तमेऽपि वा दृशाफलं प्रकीर्त्तितम्" नील०ता०। उच्चशब्दे दृश्यम्। ४निम्न-गायां नद्यां स्त्री "सङ्गमयति विद्यैव नीचगाऽपि नरं सरित्। समुद्रमिव दुर्द्धर्षं नृपं भाग्यं यतः पृथक्" मिता०।

**नीचगृह** न० रव्यादीनां स्वस्वोच्चस्थानात् सप्तमे राशौ यथा रवेस्तुला, चन्द्रस्य वृषः, कुजस्य कर्कः। बुधस्य मीनो गुरोर्मकरः शुक्रस्य कन्या शनेर्मेषः। "स्वोच्चात् यामित्रमुशन्ति नीचम् यवनेश्वरोक्तेः। उच्चशब्दे दृश्यम्

**नीचभोज्य** पु० नीचैर्भोज्यः। १पलाण्डौ शब्दच०। २नीचभोज्यमात्रे त्रि०।

**नीचयोनिन्** त्रि० नीचा योनिरस्यास्य व्रीह्या० इनि। नीचजातिमति। "एतत् क्रतयुगे वृत्तं सर्वेषामेव भारत!। प्राणिनां धर्मबुद्धीनामपि चेन्नीचयोनिनाम्" हरिवं० १६८अ०। इन्यभावे ब०व०। नीचयोनिरप्यत्र।

**नीचवज्र** पु०न० नीचप्रियं वज्रम्। वैक्रान्तमणौ राजनि०।

**नीचा** अव्य० निकृष्टामीं शोभां चिनोति बा० डा। १नीचैरित्यर्थे २नीचे च "नीचा सन्तमुदनयः" ऋ० २।१३।१२ "नीचा नीचम्" भा० "नीचा वर्त्तन्त उपरि" ऋ०१०।३४।९

**नीचात्** अव्य० निकृष्टामीं चिनोति बा० डाति। नीचैरित्यर्थे "नीचादुच्चा चक्रथुः पातवे वा" ऋ० १।११६।२२

**नीचायक** त्रि० नितरां निश्चयेन वा चिनोति नि+चि-ण्वुल् गणसूत्रनिर्देशात् दीर्घः। नितान्तचायके। ततः उत्करा० चातुरर्थ्यां छ। नीचायकीय तत्सम्बन्ध्यादौ

**नीचावया** त्रि० नीचा न्यग्भावमवयाति अव+या-क्विप्। न्यग्भावप्राप्ते "नीचावया अभवत् वृत्रपुत्रेन्द्रः" ऋ० १।३२।९ "नीचावयाः न्यग्भावं प्राप्तः वृतः" भा०।

**नीचीन** त्रि० न्यगेव स्वार्थे ख अच्छुतेर्नलोपाल्लोपे पूर्वाणो दीर्घः। न्यग्भूते अधोमुखे "नीचीनाः स्युरुपरि बुध्नः" ऋ० १।२४।७ "नीचीनवारं वरुणः कबन्धम्" ऋ०५।८५।३ "नीचीनवारमधोमुखबिलम्" भा०।

**नीचैर्गति** स्त्री कर्म०। १मन्दगमने २निम्नगमने च।

**नीचैस्** अव्य० नि+चि-"नौ दीर्घश्च" डैसि दीर्घश्च। १नीचे २खर्वे ३अल्पे ४अनुच्चे च अमरः "नीचैर्गच्छत्युपरि च दशाचक्रनेमिः क्रमेण" मेघ०। तथापि नीचैर्विनयाद्दृश्यत" "प्रविश्य चैनं पुरमग्रयायी नीचैस्तथोपचरदर्पितश्रीः" रघुः। ततः अद्रव्ये उत्कर्षे तरप् तमप् च आमु। नीचैस्तराम्(माम्)वा। द्रव्ये तु नीचैस्तरकः। [दीर्घश्च। निम्नभवे न्यग्भूतभवे।

**नीच्य** त्रि० नीचि भवः न्यनृच्-यत् नलोपाल्लोपौ पूर्वाणो

**नीड** पु०न० नितरामिलन्ति खगा अत्र नि+इल-क डस्य लः। खगानां १वासस्थाने (बासा) अमरः २आश्रये च "वितर्दिनिर्यूहविटङ्कनीडः" माघः "नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः" मेघ०। नितरामीड्यते नि+ईड-कर्मणि घञ्। ३रथावयवभेदे "प्रदक्षिणं रथनीडपरिहारः" कात्या० श्रौ० १८।५।१८ "अनुचक्राक्षनीडाश्च निपातितमहाध्वजाः" भा०भी० ७१अ०। स्वार्थे क। तत्रार्थे "कुर्वाणौ नीडकं तत्र जटासु तव तन्तुभिः" भा०आ० २६२अ०।

**नीडक** पुंस्त्री नीडे कायति प्रकाशते कै-क ७त०। खगे शब्दार्थचि०। स्त्रियां जातित्वात् ङीष्।

**नीडज** पुंस्त्री नीडे जायते जन-ड ७त०। खगे हेमच०। स्त्रियां जातित्वात् ङीष्।

**नीडि** पु० नितान्तमिलन्त्यत्र नि+इल-स्वप्ने इन् डस्य लः। निवासे आवासस्थाने "श्येनासो अदितस्य नीडयः" ऋ० १०।९२।६

**नीडोद्भव** पुंस्त्री नीडे उद्भवति उद्+भू-अच्, उद्भवत्यस्मात् उद्-भू-अपादाने अप् नीड उद्भवो यस्य वा। खगे अमरः स्त्रियां जातित्वात् ङीष्।

**नीत** त्रि० नी-कर्मणि क्त। १प्रापिते २यापिते ३स्वीकृते च "नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया" भ्रमरा० "नीते पलाशिन्युचिते शरीरवद्गजात्मकेनात्ममदान्तकर्मणा" माघः।

**नीति** स्त्री नीयन्ते उन्नीयन्तेऽर्थाः अनया वा नी-क्तिन्। १शुक्राद्युक्तराजविद्यायां कार्यकारणयोरभेदात् २तत्स्थास्त्रे च। भावे क्तिन्। ३प्रापणे ४नये च मेदि०। ५तदधिष्ठात्र्देवीभेदे "धिष्ठाश्च देव्यः प्रवराः ह्रीः कीर्त्तिर्द्युतिरेव च। प्रभा धृतिः क्षमा भूतिर्नीतिर्विद्या दया मतिः" हरिवं०२५६अ०। "नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये" माघः नीतिश्च कामन्दकीयशास्त्रादौ दृश्या।

"नीतिस्ते पुष्करोक्ता तु रामोक्ता लक्ष्मणाय या। जयाय तां प्रवक्ष्यामि शृणु धर्मादिवर्द्धनीम्। न्यायेनार्जनमर्थस्य वर्द्धनं रक्षणं चरेत्। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्। नयस्य विनयो मूलं विनयः शास्त्रनिश्चयात्। विनयो हीन्द्रियजयस्तैर्युक्तः पालयेन्महीम्। शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता। उत्साहो वाग्मितौदार्यमापत्कालसहिष्णुता। प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता। कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः। प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम्। ज्ञानाङ्कुशेन कुर्वीत

वश्यानिन्द्रियदन्तिनम्। कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा। षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः। आन्वीक्षिकीं त्रयीं वार्त्तां दण्डनीतिं च पार्थिवः। तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः। आन्वीक्षिक्यार्थविज्ञानं धर्माधर्मौ च त्रयीस्थितौ। अर्थानर्थौ तु वार्त्तायां दण्डनीत्यां नयानयौ। अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा। वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते। प्रजाः समनुगृह्णीयात् कुर्य्यादाचारसंस्थितिम्। वाक् सूनृता दया दानं हीनोपगत रक्षणम्। इति वृत्तं सतां साधु हितं सत्पुरुषव्रतम्। आधिव्याधिपरीताय अद्य श्वो वा विनाशिने। को हि राजा शरीराय धर्मापेतं समाचरेत्। न हि स्वसुखमन्विच्छन् पीडयेत् कृपणं जनम्। कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम्। क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः। ततः साधुतरः कार्य्यो दुर्जनाय शिवार्थिना। प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च। देवास्ते प्रियवक्तारः पशवः क्रूरवादिनः। शुचितास्तिक्यपूतात्मा पूजयेद्देवता सदा। देवतावद्गुरुजनमात्मवच्च सुहृज्जनम्। प्रणिपातेन हि गुरुं सतोऽनूचानचेष्टितैः। कुर्वीताभिमुखान् भृत्यैर्देवान् सुकृतकर्मणा। सद्भावेन हरेन्मित्रं सम्भ्रमेण च बान्धवान्। स्त्रीभृत्यान् प्रेमदानाभ्यां दाक्षिण्येनेतरं जनम्। अनिन्दा परकृत्येषु स्वधर्मपरिपालनम्। कृपणेषु दयालुत्वं सर्वत्र मधुरा गिरः। प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे। गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता। स्वसमृद्धिष्वनुत्सेकः परवृद्धिष्वमत्सरः। परोपतापि वचनं मौनव्रतचरिष्णुता। बन्धुभिर्बद्धसंयोगः स्वजने चतुरस्रता। उचितानुविधायित्वमिति वृत्तं महात्मनाम्" अग्निपु० २३७अ०।

**नीतिघोष** पु० नीत्यात्मकः घोषो यस्य। वृहस्पतिरथे त्रिका०

**नीतिज्ञ** त्रि० नीतिं जानाति ज्ञा–क। नीतिवेदिनि विदुषिनि। नीतिवेदिन् तत्रार्थे "त्रिवर्गो नीतिवेदिनाम्"

**नीतिमत्** त्रि० प्रशस्त्येन नीतिर्विद्यतेऽनवाऽस्य मतुप्। प्रशस्तनीतियुक्ते "कदाचिदथ गाङ्गेयः सर्वनीतिमतां वरः" भा०आ० १७६अ०। स्त्रियां ङीप्।

**नीतिशास्त्र** न० शिष्यतेऽनेन शास–ष्ट्रन् ६त०। नीतिज्ञापके औशनसबृहस्पतिकामन्दकपञ्चतन्त्रनीतिसारनीतिमालानीतिमयूखहितोपदेशचाणक्यसारसंग्रहाद्यात्मके शास्त्रे "भार्गवो नीतिशास्त्रं तु जगाद जगतोहितम्" भा०शा०२१०अ०।

**नीथ** त्रि०नी–क्थन्। १नेतरि प्रापके। करणे क्थन्। २स्तोत्रे ३नयनहेतौ च पु० "प्रति यत् स्या नीथादर्शि" ऋ०१।१०४।५"नीथा नयनहेतुभूता" भा०। भावे क्थन्। ४प्रापणे पु० "सहस्रचेताः शतनीथ ऋभुः" ऋ०१।१००।१२ "शतनीथः बहुस्तुतिः बहुप्रापणो वा" भा० "नीथाविदो जरितारः" ऋ० ३।१२।५ "नीथाविदः स्तोत्राभिज्ञाः" भा०।

**नीध्र(व्र)** न० नितरां ध्रि(व्रि)यते धृ–वृ–वा मूलवि० क दीर्घः। १वल्मीके पटलप्रान्ते २वने ३नेमौ ४चन्द्रे ५रेवतीनक्षत्रे हेमच०। नीव्रमिति पाठान्तरं तत्रार्थे "गृहाणि नीध्रैरिव यत्र रेजुः" माघः।

**नीनाह** पु० नि+नह–भावे घञ् दीर्घः। निबन्धे नितरां बन्धने "स्त्रयाश्च इव कक्ष्यामश्व इव नीनाहम्" अथ०।८।५७।४

**नीप** पु० नी–प किच्च। १कदम्बवृक्षे अमरः २धाराकदम्बे राजनि०। ३बन्धूकवृक्षे ४नीलाशोकवृक्षे च मेदि० "नवनीपवनीधुवनः पवनः" सा०द० टीका। "तस्य नीपरजसाङ्गरागिणः" रघुः। ५देशभेदे स च देशः बृह०सं० १४अ० कूर्मविभागे मध्यदेशतयोक्तः यथा "भद्रारिमेदमाण्डव्यशाल्वनीपोज्जिहानसंख्याताः" इत्युपक्रमे "गजाह्वयाश्चेति मध्यमिदम्" इत्युक्तम्। जनपदवाचित्वात् अभिजने राजनि० च अण्। नैप तद्देशवासिनि तच्छृपे च बहुषु अणो लुक्। "शतं महस्रा नृपतयः शतं नीपाः शतं हयान्" भा०स० ८अ०। निपतिता नीचैः पतिता आपो यत्र अचमा० न्युपसर्गात्परस्याप आदेरत ईत्वम्। ६गिर्य्यधोभागे पु०तत्र भवः यत्। नीप्य तत्र भवे त्रि० रुद्रभेदे पु० "नमः काटचाय च नीप्याय च" यजु०१६।३७। "नीपो गिर्य्यधोभागस्तत्र भवः" वेददी०।

**नीर** न० नी–रक् निर्गतं रादग्नेः निरा०त०। निर्गतो रोऽग्निर्यस्मात् प्रा०ब० वा। १जले अमरः। "आपोमयः प्राणः" छा०उ० उक्तेः जलस्य प्राणाग्निहेतुत्वात् "अग्नेरापः" श्रुत्या तस्य अग्नेर्जातत्वात् "अद्भ्रोऽग्निः ब्रह्मणः क्षत्रमिति" स्मृतेश्च वज्राद्यग्नेर्जलजातत्वेन च तस्य तथात्वम्। "निपतन्दुनीरनिकरेण कृताभिषेका" माघः। तद्गुणवादि अम्बुशब्दे उक्तं द्रष्टव्यम्। पूर्वमनुक्तत्वात् सम्प्रति कश्चिद्विशेषोऽत्रोच्यते

बृहस्पतिः “भूमिस्थमुदकं मेध्यं यत्र गोर्वितृषीभवेत् । अव्याप्तं चेदमध्येन तद्देव शिलागतम् । शिलागतमिति शिला नीहारस्तद्गतमित्यर्थः । उशनाः “नद्यः कूपं तडागानि सरांसि सरितस्तथा । असंस्पृष्टान्यदोषाणि मनुः स्वायम्भुवोऽब्रवीत्” । देवलः “अपि गन्धरसोपेता निर्मलाः पृथिवीगताः । अक्षीणाश्चैव गोपानादापः शुद्धिकराः स्मृताः । उद्धृतास्तु प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि । एकरात्रोषितास्तास्तु त्यजेदपः समुद्धृताः” इति । सर्वनाम्ना प्रक्रान्तगोतृप्तिमात्रपर्य्याप्ता अल्पा एवेत्यर्थात् परामृश्यन्ते अतो बहुकालात् तडागादेरुद्धृतानां रात्र्युषितानां च न दोषः । तडागोद्धृता अप्यापः रात्र्युषितोदकान्तरसम्भवे अशुद्धा एवेति मदनपारिजाते । इदं गङ्गाव्यतिरिक्तविषयम् “त्यजेत् पर्युषितं पुष्पं त्यजेत् पर्युषितं जलम् । गङ्गातोयं च तुलसी पवित्रं सर्वदा स्मृतम्” इति विशेषोक्तेः । “अक्षोभ्याणि तडागानि नदी वापीसरांसि च । चण्डालाद्यशुचिस्पर्शैस्तीर्थं तत् परिवर्जयेत्” । चण्डालाद्यवतरणमार्गमित्यर्थः । हारीतः “वापीकूपतडागेषु मानुषो म्रियते यदि । अस्थिचर्मविनिर्मुक्तैर्दूषितं च खरादिभिः । उद्धृत्य तज्जलं सर्वं शोधनं परिकल्पयेत्” । “अस्थिचर्मविनिर्मुक्तैश्चिरकालवासेन विशीर्णैरित्यर्थः । बृहस्पतिः “मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा । अपः समुद्धरेत् सर्वाः शेषं वस्त्रेण शोधयेत् । वह्निप्रज्वालितं कृत्वा कूपे पक्वेष्टकाचिते । पञ्चगव्यं न्यसेत्पश्चान्नवतोये समुद्भवे” । देवलः “उद्धरेदुदकं सर्वं पञ्चपिण्डानृदस्तथा” । अचिरकालोपघाते स्वल्पघाते च हारीतः “घटानां शतमुद्धृत्य पञ्चगव्यं क्षिपेत्ततः । श्वभिश्च काकचाण्डालैर्दूषितेषु विशोधनम्” । आपस्तम्बः “उपानत्स्वप्रविण्मूत्रं स्त्रीरजो मद्यमेव च । एभिर्विदूषिते कूपे कुम्भानां षष्टिमुद्धरेत्” । विष्णुः “जलाशयेष्वथाल्पेषु स्थावरेषु महीतले । कूपवत् कथिता शुद्धिर्महत्सु न तु दूषणमिति” । स्थावरेषु महीतलेऽप्रवाहिषु । यमः “चाण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् । गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति” । तथा ‘नदीवेगेन शुध्यति’ कश्यपः “दृतीनां रञ्जनं शुद्धिः” । दृतिः चर्मकोषः रञ्जनं कषायद्रव्येण शोधनम् । यमः “प्रपास्वरण्येष्वथ वाप्यकूपे द्रोण्यां जलं कोषगता तथापः । ऋतेऽपि शूद्रं द्विजपेपमाङ्गरापद्गतः काङ्क्षितवत् पिबेत्तु” । अस्यार्थः यद्यपि शूद्रातिरिक्तविप्रादिवर्णसम्बन्धि प्रपादि तथापि तद्गतजलं धर्मार्थं दीयमानमनापदि न पेयम् । आपदि पेयं यद्यरण्यगतं प्रपादिर्भवति । द्रोणिः अश्मादिमयी जलपात्री सर्वसाधारणी । कोषो दृतिः तथा “अजागावोमहिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुध्यन्ति भूमिस्थं च नवोदकम्” । योगीश्वरः “शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्” । प्रकृतिस्थं रूपरसगन्धस्पर्शान्तरमनापन्नं महीगतमित्यशुद्धत्वनिवृत्त्यर्थं न तु अन्तरिक्षोदकस्य शुद्धत्वव्यावृत्त्यर्थं नाप्युद्धृतस्य । “उद्धृताश्चेति” प्रागुक्तदेवलवचनादिति विज्ञानेश्वरः । हेमाद्रौ पराशरः “वापीकूपतडागेभ्य आपो ग्राह्यास्तु सर्वतः । पश्चात्पश्येदमेध्यन्तु पञ्चगव्येन शुध्यति । अस्थिचर्मावसिक्तेन मार्जारैश्च समूषिकैः । दूषितं तद्भवेत्तोयं यथाधस्तात् सुशोधनम् । अस्थिचर्मावपतितं खरवानरसूकरैः । उद्धरेदुदकं सर्वं शोधनं परिमार्जनम्” । इदं चिरकालविषयमित्युक्तमेव । यमः “वापीकूपतडागेषु दूषितेषु कथञ्चन । उद्धृत्य शतकुम्भांश्च पञ्चगव्येन शुध्यति । खनिकूपतडागेषु सन्दिग्धेषु विशेषतः । अयोद्धृत्य पञ्चशतं पञ्चगव्येन शुध्यति । पादुकोपानह विण्मूत्रं कूपे यदि निमज्जति । षष्टिकुम्भान् समुद्धृत्य पञ्चगव्येन शुध्यति” । मात्स्येऽपि “दूषितं च शवैः क्लिन्नं यच्च विष्ठानुलेपितम् । अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत् । गवां मूत्रपुरीषेण सोमसूर्य्याग्निरश्मिभिः । मारुतस्य च वेगेन त्वापः शुद्धिमवाप्नुयुरिति” स्मृत्यर्थसारेऽपि “वापीकूपतडागेष्वल्पजलेषु श्वमार्जारादिशवक्लिन्ने जीर्णरोधसि तज्जलं सर्वं निःसार्य्य मृत्तिकां परितश्चोद्धृत्य पञ्चगव्यप्रोक्षणात् शुद्धिः । पाषाणैरिष्टकाभिर्वा बद्धे तत्तत्स्थाने दहनम् । सदा बद्धे प्रक्षालनमेव बहुजले तु तस्मिन् षष्टिकुम्भोद्धारः । मूषकादिक्षुद्रप्राणिघाते त्रिंशत्कुम्भोद्धारो गोमूत्रादिप्रक्षेपश्च । जले जलप्राणिशवोपघाते न दोषः । वापीकूपादिजले नरशवे स्थितेऽल्पोपघाते घटशतमुद्धृत्य पञ्चगव्यप्रक्षेपात् शुद्धिः । पशुशवपातेऽप्येवमेव शुद्धिः कार्य्या । तत्र खलेन मरणे जलस्य त्रिरात्रमाशौचम् । अशौचान्ते पूर्वोक्ता शुद्धिः कार्य्या । वापीकूपजले उपानच्छ्वप्रविण्मूत्ररक्तपूयमज्जास्थि-

ऽस्थिदूषिते घटिकुम्भानुद्धृत्य पञ्चगव्येन शुद्धिः। जल बाहुल्ये घतकुम्भोद्धारात् पञ्चगव्यप्रोक्षणाच्च शुद्धिः। कूपादिषु दूषितेषु दिवा सूर्य्यरश्मिवायुस्पर्शनात् शुद्धिः। रात्रौ वायुचन्द्रनक्षत्ररश्मिस्पर्शनात् शुद्धिः। सन्ध्यायां वायुस्पर्शनात् शुद्धिः। नद्यादौ अन्त्यजादिभिर्दूषिते तत्स्थानात् जलस्थानादन्यत्र जलं शुद्धमेवेति। एवं स्वबुद्ध्या शुद्धिर्विवेचनीया" विधा०पा०।

अथ प्रसङ्गादुपहतजलपाने प्रायश्चित्तमभिधीयते। तत्र विष्णुः "मृतपञ्चनखात् कूपादत्यन्तोपहताद्वोदकं पीत्वा ब्राह्मणस्त्र्यहमुपवसेत् द्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वे तेऽन्ते पञ्चगव्यं पिबेयुरिति"। अत्यन्तोपहतात् मूत्रपुरीषादिभिः। इदमकामविषयं कामतो मानुष शवोपहतकूपादिजलपाने हारीतः "क्लिन्नं भिन्नं शवं तोयं तत्रस्थं यदि तत् पिबेत्। शुद्ध्यै चान्द्रायणं कुर्य्यात्तप्तकृच्छ्रमथापि वा" । अशक्तौ तप्तकृच्छ्रमिति धर्म प्रदीपः। "यदि कश्चित्ततः स्नायात् प्रमादेन द्विजोत्तमः। जपंस्त्रिषवणस्नायी अहोरात्रेण शुद्ध्यति"। अकामतो देवलोक्तम् "क्लिन्नं भिन्नं शवं चैव कूपस्थं यदि दृश्यते। पयः पिबेत् त्रिरात्रेण मानुषे द्विगुणं स्मृतम्"। अङ्गिराः "कूपे विण्मूत्रसंसृष्टे पीत्वा तोये द्विजोत्तमः। त्रिरात्रेण विशुध्येत कृच्छ्रं सान्तपनं स्मृतम्"। स्नाने तु लघु विष्णुः "अपो मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदा। तदा सान्तपनं कृच्छ्रं व्रतं कार्य्यं विशुद्धये"। चाण्डालकूपादि जलपाने आपस्तम्बः "चाण्डालकूपभाण्डस्थं नरः कामात् जलं पिबेत्। प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्द्दिशेत्। चरेत् सान्तपनं विप्रः प्राजापत्यं तु भूमिपः। तदर्द्धं तु चरेत् वैश्यः शूद्रे पादं विनिर्द्दिशेत्। तथा "म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा। जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम्। तत्तोयं यः पिबेद्वै विप्रः कामतोऽकामतोऽपि वा। अकामाच्चक्रभोजी स्यादहोरात्रं तु कामतः"। अत्रैवाभ्यासे प्राजापत्यम् "अन्त्यजैः खानिताः कूपाः तडागं वाप्य एव वा। तेषु स्नात्वा च पीत्वा च प्राजापत्येन शुद्ध्यति" इत्यापस्तम्बस्मरणात्। इदमनापद्विषयम्। यत्तु "अन्त्यजैः खानिताः कूपा तड़ागादि तथैव च। तेषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति"। तदयज्ञावस्नाने वा आपदि तु शातातपः "अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके कृते। तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते"। इदमत्यन्तापद्विषयमिति शूलपाणिः। "ब्राह्मणक्षत्रियो वैश्यः शूद्रश्चैवान्यजातयः। एभिर्य्ये कारिताः कूपाः स्नानं तेषु तु कारयेत्"। अन्यजातयो मूर्द्धाभिषिक्ताद्या अनुलोमाः। अन्यखानितचण्डालपरिगृहीतकूपादिजलपानेऽङ्गिराः "चाण्डालपरिगृहीतं योऽज्ञानादुदकं पिबेत्। तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः"। एतदभ्यासे यत्त्वापस्तम्बेन पञ्चगव्यप्राशनमात्रमुक्तम् "प्रपास्वरण्ये घटके च नीरे द्रोण्यां जलं कोषविनिःसृतं च। श्वपाक चाण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्ध्येदिति" तदयज्ञविषयमापद्विषयं वा" विधा०पा०।

अथ प्रसङ्गात्तडागादिविक्रयप्रायश्चित्तम्। तत्र "देवगृहप्रतिश्रयोद्यानारामसभाप्रपातड़ागपुष्करिणीसेतुविक्रयं कृत्वा तप्तकृच्छ्रं समाचरेदिति" शङ्खवचनमकामतद्विषयम्। यत्तु पैठिनस्युक्तम् "आरामतड़ागोद्यानपुष्करिणीसेतु विक्रीते त्रिषवणस्नाय्यधःशायी चतुर्थकालमश्नीयात्" तदनुत्सृष्टविषयम् उत्सृष्टस्य तु सर्वसत्वोद्देशेन त्यक्तत्वात् तत्साधारण्येन स्वत्वाभावादिक्रयासम्भवात्। सर्वोत्तमतैव कर्त्तुमशक्यत्वात् बाधारणस्वाभिकवस्तुन इवेति दिक्" विधा०पा०।

"तिलकल्कं जलं क्षीरं दधि क्षौद्रं घृतानि च। न त्यजेदर्द्धजग्धानि" विधा०पा० धृतवाक्यम्।

वर्ज्यजलमुक्तं हेमाद्रौ ब्रह्माण्डे "दुर्गन्धि फेनिलं क्षारं पङ्किलं पल्वलोदकम्। न भवेद्यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम्। यच्च सर्वार्थमुत्सृष्टं यच्चाभोज्यनिपानजम्। तद्वर्ज्यं सलिलं तात! सदैव श्राद्धकर्मणि। निपानं जलाशयः। शुद्धितत्त्वे शङ्खः "स्नानमाचमनं दानं देवतापितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः" हेमाद्रावादित्यपुराणे "चिरं पर्युषितं वापि शूद्रस्पृष्टमथापि वा। जाह्नव्याः स्नानदानादौ पुनात्येव सदा पयः"। कात्यायनः "अपो निशि न गृह्णीयान्न पिबेच्च कदाचन। उद्धृत्याग्निमुपर्यग्ने र्घर्मो धार्य्य इतीरयेत्"। रजोदोषे तु प्रागुक्तम् नारदीये "त्यजेत् पर्युषितं पुष्पं त्यजेत् पर्युषितं जलम्। न त्यजेत् जाह्नवीतोयं तुलसी विल्वपङ्कजम्" नि०सि०।

"पानीयं पायसं सर्पिर्दधि क्षीरं घृतानि च। निरस्यशेषमेतेषां न प्रदेयन्तु कस्यचित्" आह्नि०त० महाभारतम् जलपानप्रकारः विधानपारिजाते उक्तो यथा

"जलपात्रं तु निःक्षिप्य मणिवन्धे च दक्षिणे। विप्रो भोजनकाले तु पिबेद्वामेन पाणिना" अन्यकाले तु "धारया नोदकं पेयं पीत्वा दोषमवाप्नुयात्। जलपात्रेण तत् पेयमिति शातातपोऽब्रवीदिति"। आ॰त॰ विशेष उक्तो यथा "करेण च पिबेत्तोयं यावन्मांसं न लेपयेत्। मांसलिप्तकरे तोयं सद्यो गोमांसभक्षणम्" ब्रह्माण्डे मांसलिप्तकरेण जलपाननिषेधयात् मांसलिप्तकरेण आपोशानं न कर्त्तव्यम्" रघु॰ षट्त्रिंशन्मतम् "पिबतो यत् पतेत् तोयं भोजने सुखनिःसृतम्। अभक्ष्यं तत् भवेदन्नं भुक्त्वा चान्द्रायणं चरेत्। वामपार्श्वे स्थिते तोये यो भुङ्क्ते ज्ञानदुर्बलः। तोयं पिबति वक्त्रेण श्वाऽसौ भवति नान्यथा। ग्रासे ग्रासे मलं भुक्त्वा पानीयं रुधिरं पिबेत्। विद्यमाने तु हस्ते तु ब्राह्मणो ज्ञानदुर्बलः। उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः। सुरापानेन तुल्यं तदित्युवाच प्रजापतिः"। "वामहस्तेन केवलवामहस्तेनेति" रघु॰। "अदुष्टा सन्ततधारेति" तु शुद्ध्यर्थं न तु पेयतार्थम् "अभियुःसरसोमधुसम्भृतां कमलिनीमलिनीरपतत्रिणः" माघः

**नीरज** न॰ नीरे जायते जन–ड। १पद्मे २कुष्ठौषधौ मेदि॰। ३मुक्ताफले राजनि॰। ४उद्राख्ये जन्तौ (उद्बिडाल) पुंस्त्री स्त्रियां जातित्वात् ङीष्। ५उशीरेऽपि च राजनि॰। ६जलजातमात्रे त्रि॰ "नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया" भ्रमराष्टकम् निर्गतं रजात् प्रा॰ब॰ रलोपदीर्घौ "सर्वे सान्ताः अदन्ताः स्युः" इत्युक्तेः रजशब्दोऽपि रजःसमानार्थकः। ७रजोगुणकार्यरागशून्ये दमघोषे पु॰। "उद्भित् त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः" भा॰अ॰१७अ॰।

**नीरजस्** त्रि॰ निर्गतं रजो धूलिः परागः स्त्रीरजः रजोगुणो वा यस्य प्रा॰ब॰ वा कप् रलोपे दीर्घः। १निर्धूलिदेशे "नीरजीकारितच्छ्मास्" भट्टिः अभूततद्भावे च्वौ सलोपः। "स्वोत्तरीयैरकुर्वन्ननीरजस्कं महीतलम्" दश॰। २परागशून्ये ३पुष्पादौ रजोगुणकार्यरागादिशून्ये "नीरजस्तमसा सत्त्वशुद्धिनिर्हृताशयः" याज्ञ॰ "नीरजस्के सदानन्दे पदे चाहं निवेशितः" प्रबोध॰। "वेदशैलावतीर्णेन नीरजस्का महीकृता" मार्क॰पु॰ १अ॰। ४गतार्त्तवायां स्त्रियां स्त्री।

**नीरजात** त्रि॰ नीरात् जायते जन–ड ५त॰। १जलजातमात्रे अन्नादौ "इष्टेरन्नं ततः प्रजाः" गीतायाम् "अन्नाद्भवन्ति भूतानि" इति श्रुतौ चान्नस्य जलाज्जातत्वात् तथात्वम्। "अन्नञ्चापि प्रभवति पानीयात् कुरुसत्तम!। नीरजातेन (अन्नेन) रहितं न किञ्चित् सम्प्रवर्त्तते। नीरजातश्च भगवान् सोमो ग्रहगणेश्वरः। अमृतं च सुधा चैव सुधा चैवामृतं तथा। अन्नौषध्यो महाराज! वीरुधश्च जलोद्भवाः" भा॰ अनु॰ ६७अ॰। २कमलादौ न॰।

**नीरद** पु॰ नीरं ददाति–दा–क। १मेघे २मुस्तके च राजनि॰ "धूपायतीव पटलैर्नवनीरदानाम्" माघः "नवीननीरदश्यामं रामं राजीवलोचनम्" रामकवचम्। "आस्वाद्य निरवशेषं विरहिवधूनां मृदूनि मांसानि। करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनीति" उद्भटः।

**निरधि** पु॰ नीराणि धीयन्तेऽत्र धा–कि उप॰स॰। समुद्रे शब्दा॰ नीरनिधिरप्यत्र। "पारे जलं नीरनिधेरपश्यत्" माघः।

**नीरन्ध्र** त्रि॰ निर्गतं रन्ध्रं छिद्रमस्य प्रा॰ब॰ रलोपे दीर्घः। छिद्रशून्ये "नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः" सा॰द॰। "नीरन्ध्रद्रुमशिशिरां भुवं व्रजन्ति" माघः

**नीरप्रिय** पु॰ नीरं प्रियमस्य प्रा॰ब॰। १जलवेतसे वैद्यकप्रकाशिका। २जलप्रियमात्रे त्रि॰।

**नीरस** पु॰ निःसार्य्यो रसो यस्य निर्गतो रसः शृङ्गारादिर्यस्माद्वा प्रा॰ब॰ रलोपे दीर्घः। १दाडिमे हारा॰ °२शृङ्गारादिरसादिशून्ये त्रि॰। "अलब्धफलनीरसं मम विधाय तस्मिन् जने समागममनोरथं भवतु पञ्चबाणः कृती" विक्रमोर्वशी। [हारा॰।

**नीराज** पु॰ नीरमजति अज–अच् अभावः। जलबिडाले

**नीराजन(ना)** निर्–राज–भावे ल्युट् युच् वा रलोपे पूर्वाणो दीर्घः। दीपादिना प्रतिमादेरारात्रिके। युजन्तः स्त्री। "नीराजनां जनयतां निजबान्धवानाम्" नैष॰। तत्प्रकारश्च ति॰ त॰ देवीपु॰ उक्तो यथा "यवप्रिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः। औषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः। नवम्यां पर्वकाले तु यात्राकाले विशेषतः। यः कुर्य्यात् श्रद्धया वीर! देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावतो दिवसान् वीर! देव्या नीराजनं कृतम्। तावत् कल्पसहस्राणि दुर्गालोके महीयते"। "यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोके महीयते"। पर्वकाले उत्सवकाले। देव्या इति स्त्रीत्वमविवक्षितं विष्ण्वादिप्रतिमायां तथाचारात्" रघु॰। पञ्च नीराजनानि यथा "पञ्चनीराजनं कुर्य्यात् प्रथमं

दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा । चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथाविधि” कालोत्तरतन्त्रम् । तस्य वर्त्तिकादिप्रमाणं यथा “कुङ्कुमागुरुकर्पूरघृतचन्दननिर्म्मिताः । वर्त्तिकाः सप्त वा पञ्च कृत्वा वन्दापनीयकम् । कुर्य्यात् सप्तप्रदीपेन शङ्खघण्टादिवाद्यकैः । हरेः पञ्चप्रदीपेन बहुशो भक्तितत्परः” पद्मोत्तरखण्डे १०७ अ० । राज्ञां । २शान्तिभेदे तद्विधानादि अग्निपु० २६७ अ० यथा “नीराजनविधिं वक्ष्ये ऐशान्यां मन्दिरे चरेत् । तोरणत्रितयं तत्र गृहे देवान् यजेत् सदा । चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते । ततः प्रभृति कर्त्तव्यं यावत् स्वातौ रविः स्थितः । ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ । विनायकः कुमारश्च वरुणो धनदो यमः । विश्वे देवा वैश्रवणो गजाश्चाष्टौ च तान् यजेत् । कुमुदैरावणौ पद्मः पुष्पदन्तश्च वामनः । सुप्रतीकोऽञ्जनो नीलः पूजा कार्य्या गृहादिके । पुरोधा जुहुयादग्नौ समित्सिद्धार्थकं तिलाः । कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्च गजोत्तमाः । अश्वाः स्नाप्याः ददेत् पिण्डान् ततो हि प्रथमं गजान् । निष्क्रामयेत्तोरणैस्तु गोपुरादि न लङ्घयेत् । निष्क्रमेयुस्ततः सर्वे राजलिङ्गं गृहे यजेत् । वारुणे वरुणं प्रार्च्य रात्रौ भूतबलिं ददेत् । विशाखायां गते सूर्य्ये आश्रमे निवसेन्नृपः । अलङ्कुर्य्यात् दिने तस्मिन् वाहनन्तु विशेषतः । पूजिता राजलिङ्गाश्च कर्त्तव्या नरहस्तगाः । हस्तिनं तुरगं छत्रं खड्गं चापञ्च दुन्दुभिम् । ध्वजं पताकां धर्म्मज्ञः कालज्ञस्त्वभिमन्त्रयेत् । अभिमन्त्र्य ततः सर्वान् कुर्य्यात् कुञ्जरधूर्गतान् । कुञ्जरोपरिगौ स्यातां सांवत्सर पुरोहितौ । मन्त्रितांश्च समारुह्य तोरणेन विनिर्गमेत् । निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत् । बलिं विभज्य विधिवद्राजा कुञ्जरधूर्गतः । उल्मूकानान्तु निचयमादीपितदिगन्तरम् । राजा प्रदक्षिणं कुर्य्यात्त्रीन् वारान् सुसमाहितः । चतुरङ्गबलोपेतः सर्वसैन्येन नादयन् । एवं कृत्वा गृहं गच्छेद्विसर्जितजनाञ्जलिः । शान्तिर्नीराजनाख्येयं वृद्धये रिपुमर्दनी” ।

अन्योऽपि हेमाद्रिव्रतखण्डे विष्णुधर्मोत्तरोक्तो दृश्यः । “भगवति जलधरपक्ष्मक्षपाकरार्कचक्षे कमलनाभे । उन्मीलयति तुरङ्गमकरिनरनीराजनं कुर्य्यात् । द्वादशाष्टदश्यां कार्त्तिकशुक्लस्य पञ्चदश्यां वा । आश्वयुजे वा कुर्य्यान्नीराजनसञ्ज्ञितां शान्तिम् । नगरोत्तरपूर्वदिक्प्रशस्तभूमौ प्रशस्तदारुमयम् । षोड़शहस्तोच्छ्रायं दशविपुलं तोरणं कार्य्यम् । सर्ज्जोदुम्बरशाखाककुभमयं शान्तिसद्म कुशबहुलम् । वंशविनिर्म्मितमत्स्यध्वजचक्रालङ्कृतद्वारम् । प्रतिसरणे तुरगाणां भल्लातकशालिकुष्ठसिद्धार्थान् । कण्ठेषु निबध्नीयात् पुष्ट्यर्थं शान्तिगृहगानाम् । रविवरुणविश्वदेवप्रजेशपुरुहूतवैष्णवैर्मन्त्रैः । सप्ताहं शान्तिगृहे कुर्य्याच्छान्तिं तुरङ्गाणाम् । अभ्यर्चिता न परुषं वक्तव्या नापि ताड़नीयास्ते । पुण्याहशङ्खतूर्य्यध्वनिगीतरवैर्विमुक्तभयाः । प्राप्तेऽष्टमेऽह्नि कुर्य्यादुदङ्मुखं तोरणस्य दक्षिणतः । कुशचीराद्यतमाश्रममग्निं पुरतोऽस्य वेद्यां च । चन्दनकुष्ठसमङ्गाहरितालमनःशिलाप्रियङ्गुवचाः । दन्त्यमृताञ्जनरजनीसुवर्णपुष्प्याग्निमन्थाश्च । श्वेतामपूर्णकोशां कटम्भरात्रायमाणसहदेवीः । नागकुसुमस्वगुप्तां शतावरीं सोमराजीं च । कलशेष्वेतान् कृत्वा सम्भारानुपहरेद्बलिं सम्यक् । भक्ष्यैर्नानाकारैर्मधुपायसयावकप्रचुरैः । खदिरपलाशोदुम्बरकाश्मर्य्यश्वत्थनिर्म्मिताः समिधः । स्रुक्कनकाद्रजताद्वा कर्त्तव्या भूतिकामेन । पूर्वाभिमुखः श्रीमान् वैयाघ्रे चर्म्मणि स्थितो राजा । तिष्ठेदनलसमीपे तुरगभिषग्दैववित्सहितः । यात्रायां यदभिहितं ग्रहयज्ञविधौ महेन्द्रकेतौ च । वेदीपुरोहितानललक्षणमस्मिंस्तदवधार्य्यम् । लक्षणयुक्तं तुरगं द्विरदवरं चैव दीक्षितं स्नातम् । अहतसिताम्बरगन्धस्रग्धूपाभ्यर्चितं कृत्वा । आश्रमतोरणमूलं समुपनयेत्सान्त्वयञ्छनैर्वाचा । वादित्रशङ्खपुण्याहनिःस्वनापूरितदिगन्तम् । यद्यानीतस्तिष्ठेद् दक्षिणचरणं हयः समुत्क्षिप्य । स जयति तदा नरेन्द्रः शत्रूनचिराद्विना यत्नात् । त्रस्यच्चेष्टो राज्ञः परिशेषं चेष्टितं द्विपहयानाम् । यात्रायां व्याख्यातं तदिह विचिन्त्यं यथायुक्ति । पिण्डमभिमन्त्र्य दद्यात् पुरोहितो वाजिने स यदि जिघ्रेत् । अश्नीयाद्वा जयकृद्विपरीतोऽतोऽन्यथाऽभिहितः । कलशोदकेषु शाखामाप्लाव्योदुम्बरीं स्पृशेत्तुरगान् । शान्तिकपौष्टिकमन्त्रैरेवं सेनां सकुम्भनागाम् । शान्तिं राष्ट्रविवृद्ध्यै कृत्वा भूयोऽभिचारकैर्मन्त्रैः । मृण्मयमरिं विभिन्द्याच्छूलेनोरःस्थले विप्रः । खलिनं हयाय दद्यादभिमन्त्र्य पुरोहितस्ततो राजा । आरुह्योदक्पूर्वां यायान्नीराजितः सबलः । मृदङ्गशङ्खध्वनिहृष्टकुञ्जरस्रवन्मदामोद-

सुगन्धिमारुतः। शिरोमणिव्रातचलत्प्रभाचयैर्व्वलन् विवस्वानिव तोयदात्यये। हंसपङ्क्तिभिरितस्ततोऽद्रिराट् सम्पतद्भिरिव शुक्लचामरैः। सुष्टगन्धपवनानुवाहिभिर्धूयमानरुचिरस्रगम्बरः। नैकवर्णमणियुग्भूषितैर्भूषितो मुकुटकुण्डलाङ्गदैः। भूरिरत्नकिरणौघरञ्जितः शक्रकार्मुकरुचं समुद्वहन्। उत्पतद्भिरिव खं तुरङ्गमैर्दारयद्भिरिव दन्तिभिर्धराम्। निर्जितारिभिरिवामरैर्नरैः शक्रवत्परिवृतो व्रजेन्नृपः। सवनूतनाफलभूषयोऽथ वा सितसुगन्धीविलेपनाम्बरः। छत्रातपत्रो गजपृष्ठमाश्रितो घनोपरीवेन्दुतले भृगोः सुतः। सम्प्रहृष्टनरवाजिकुञ्जरं निर्मलप्रहरणांशुभास्वरम्। निर्विकारमरिपक्षभीषणं यस्य सैन्यमचिरात्स गां जयेत्।" वृ०सं० ४४अ०। "स्नाने धूपे च नैवेद्ये दीपे वस्त्रे च भूषणे। घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च" विधानपारिजातधृतवाक्यम्।

**नीरिन्दु** पु० नि+इंद–किप् तथाविधः सन् इन्दति इन्द–उन्। अक्षयाखोटके वृक्षे (आसशेओडा) शब्दच०।

**नीरुच्** त्रि०निश्चितं रोचते निर्+रुच–किप् रलोपे दीर्घः। नितान्तदीप्तियुक्ते।

**नीरुज्** अव्य० रुजोऽभावः अभावे अव्ययी० रलोपदीर्घौ। १रोगाभावे।२निर्गता रुग् प्रा०त०। आरोग्ये। निर्गता रुग् रोगो यस्य प्रा०ब०। ३रोगशून्ये त्रि० "स्निग्धो मृदुः पाण्डुरनिष्टगन्धोमेदःक्षतो नीरुगथातिकण्डूः" सुश्रुतः। ततः भावे ष्यञ्। नैरुज्य रोगाभावे स्वास्थ्ये न०।

**नीरुज** त्रि० निर्गता रुजा रोगो यस्य यस्मात् वा प्रा०ब० रलोपदीर्घौ। १रोगरहिते "पूतात्मा नीरुजः श्रीमांस्तस्माद्रोगादिमुक्तवान्" साम्बपु० २कुष्ठोषधौ जटा० रोगभेदे (अजगल्लिकारोगे) स्त्री "स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा" सुश्रुतः।

**नीरूप** त्रि० निर्गतं रूपमस्य प्रा०ब०। रूपहीने "नीरूपस्यापि कालस्य षडिन्द्रियवेद्यत्वाभ्युपगमेन" वेदा०परि०।

**नील** पु० नील–अच्। स्वनामख्याते वर्णे १श्यामवर्णे २तद्वति त्रि० अमरः। ३पर्वतभेदे ४वानरभेदे च मेदि०। ५नीलौषधौ ६निधिभेदे ७लाञ्छने च पु० हेमच०। ८मञ्जुघोषे स्त्रिका० ९वटवृक्षे राजनि०। नीलपर्वतस्य रम्यकवर्षस्य सीमापर्वतः यथोक्तं भाग० ५।१६। ८श्लो० "उत्तरोत्तरेणेलावृतं नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायता उभयतः क्षारोदावधयोद्विसहस्रपृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरेण दशांशाधिकांशेन दैर्घ्यं एव ह्रसन्ति"। भारतवर्षदक्षिणस्थे स्वनामख्याते १०गिरौ च ११इन्द्रनीलमणौ शनितुष्ट्यर्थं धार्ये देये च मणिभेदे। तस्योत्पत्त्यादिपरीक्षा गरुडपु० उक्ता यथा "तत्रैव सिंहलवधूकरपल्लवाग्रव्यालूनबालखवलीकुसुमप्रवाले। देशे पपात दितिजस्य नितान्तकान्तं प्रोत्फुल्लनीरजसमद्युति नेत्रयुग्मम्। तत्प्रत्ययादुभयशोभनवीचीभासा विस्तारिणी जलनिधेरुपकच्छभूमिः। प्रोद्भिन्नकेतकवनप्रतिबद्धलेखा सान्द्रेन्द्रनीलमणिरत्नवती विभाति। तत्रासिताब्जहलभृद्वसनासिशृङ्गशाङ्गर्युधाभहरकण्ठकलायपुष्पैः। शुक्लेतरैश्च कुसुमैर्गिरिकर्णिकायास्तस्मिन् भवन्ति मणयः सदृशावभासः। अन्ये प्रसन्नपयसः पयसां निधातुरम्बुत्विषः शिखिगलप्रतिमास्तथान्ये। नीलीरसप्रभवबुद्बुदभाश्च केचित् केचित्तथा समदकोकिलकण्ठभासः। एकप्रकारा विस्पष्टवर्णशोभावभासिनः। जायन्ते मणयस्तस्मिन्निन्द्रनीला महागुणाः। मृत्पाषाणशिलादोषच्छेदकर्कराभाससंयुताः। अभ्रिकापटलच्छाया वर्णदोषैश्च दूषिताः। तत एव हि जायन्ते मणयस्तत्र भूरयः। शास्त्रसम्बोधितधियस्तान् प्रशंसन्ति सूरयः। धार्यमाणस्य ये दृष्टाः पद्मरागमणेर्गुणाः। धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः। यथा च पद्मरागाणां जातु कर्णभयं भवेत्। इन्द्रनीलेष्वपि तथा द्रष्टव्यमविशेषतः। परीक्षाप्रत्ययैर्यैश्च पद्मरागः परीक्ष्यते। तएव प्रत्यया दृष्टा इन्द्रनीलमणेरपि। यावन्तञ्च क्रमेदग्निं पद्मरागः प्रयोगवः। इन्द्रनीलमणिस्तस्मात् क्रमेत सुमहत्तरम्। तथापि न परीक्षार्थं गुणानामतिवृद्धये। मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन। अग्निमात्राऽपरिज्ञाने दाहदोषैश्च दूषितः। सोऽनर्थाय भवेद्भर्तुः कर्तुः कारयितुस्तथा। श्यामोत्पलकरवीरस्फटिकाद्या इह बुधैः सवैदूर्य्याः। कथिता विजातय इमे सदृशा मणिनेन्द्रनीलेन। गुरुभावकठिनभावाश्चैतेषां नित्यमेव विज्ञेयाः। काचादीयावदुत्तरविवर्द्धमाना विशेषेण। इन्द्रनीलो यदा कश्चित् विभर्त्ति ताम्रवर्णताम्। रक्षणीयौ तथा ताम्रौ करवीरोत्पलावुभौ। यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा। तदिन्द्रनीलमित्याहुर्महार्घं भुवि दुर्लभम्। यस्य वर्णस्य भूयस्त्वात् क्षीरे शत

गुणे स्थितः। नीलतां तद्वयेत् सर्वं महानीलः स उच्यते। यत् पद्मरागस्य महागुणस्य मूल्यं भवेन्माष समुन्मितस्य। तदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्यातुलितस्य मूल्यम्” १२नागभेदे पु० “नीलानीलौ तथा नागौ कल्माषशवलौ तथा” भा०आ० ३५अ०। क्रोधवशगणांशजाते द्वापरयुगीये १३नृपभेदे “गणः क्रोधवशो नाम यस्ते राजन्! प्रकीर्त्तितः। ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः” इत्युपक्रमे “क्रथो विचित्रः सुरथः श्रीमान् नीलश्च भूमिपः” भा०आ० ६७० उक्तम्। १४अजमीढस्य नील्यपरनाम्न्यां नीलिन्यां जाते पुत्रभेदे “अजमीढस्य नीलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रोऽभवत्” विष्णुपु० ४अंशे १९अ०। अजमीढस्य १५पत्नीभेदे स्त्री ङीप्। “अजमीढस्य पत्न्यस्तु तिस्रो वै यशसान्विता। नीली च केशिनी चैव धूमिनी च वराङ्गना” हरिवं०२२अ० वानरभेदश्च रामसेनान्तर्गतः “नलनीलाङ्गदक्राथमैन्दद्विविदपालिता। ययौ सुमहती सेना राघवस्यार्थसिद्धये” भा०व० २८२अ०। नील+औषधिजातौ ङीप्। १६नील्योषधौ स्त्री नील्या रक्तम् अन्। नील १७नीलीरक्ते त्रि० १८यमभेदे पु० “वैवस्वताय कालाय नीलाय परमेष्ठिने” यमतर्पणमन्त्रः। १९कालिकाशक्तिभेदे स्त्री “नीला घना बलाका च माला मुद्रा मिता च माम्” कालीकवचम्। २०काचलवणे २१तालीशपत्रे २२विषे शब्दार्थचि०। २३नृत्याङ्गाष्टोत्तरशतकरणान्तर्गतकरणे संगीतदा०। नीलवस्त्रधारणादिनिषेधः मिताक्षरायाम् यथा

“नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति” “रोमकूपे यदा गच्छेद्रसो नील्यास्तु कस्यचित्। त्रिवर्णेषु च सामान्यन्तप्तकृच्छ्रं विशोधनम्। पालनं विक्रयश्चैव तद्वृत्त्या चोपजीवनम्। पातनञ्च भवेद्विप्रे त्रिभिः कृच्छ्रैर्व्यपोहति। नीलीदारु यदा भिन्द्याद्ब्राह्मणस्य शरीरतः। शोणितं दृश्यते यत्र द्विजश्चान्द्रायणञ्चरेत्। स्त्रीणां क्रीडार्थसम्भोगे शयनीये न दुष्यति” स्मृतिः अत्युपायुक्तम् “स्त्रीक्रीडाशयने नीली ब्राह्मणस्य न दुष्यति। नृपस्य वृद्धौ वैश्यस्य पर्ववर्जं विधारणम्” तथा वस्त्रविशेषकृतश्च प्रतिप्रसवः “कम्बले पट्टसूत्रे च नीलीरागो न दुष्यति” इति स्मरणात्। “नीलीरक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत्। तन्तुसन्ततिसंख्याके वसेत् स नरके ध्रुवम्”। स्कान्दे काशीखण्डे “नीलीरक्तं तु यद्वस्त्रं दूरतस्तद्विवर्जयेत्। स्त्रीणां क्रीडार्थसंयोगे शयनीये न दुष्यति। मृते भर्त्तरि या नारी नीलीवस्त्रं तु धारयेत्। भर्त्ता सा नरकं याति सा नारी तदनन्तरम्। कम्बले पट्टसूत्रे च नीलीदोषो न विद्यते”। शूद्रे विशेषः “ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम्। पीतं वैश्यस्य शूद्रस्य नीलं मलवद्दिष्यते। नीलं मलवत् कृष्णमिति” विधा०पा० कतिचित् नीलवस्तूनि कविकल्पलतायां दर्शितानि यथा “शुकः शैवालं दूर्वा वालतृणं बुधग्रहः वंशाङ्कुरः मरकत इन्द्रनीलमणिः। २४मात्रावृत्तभेदे न० “तालपयोधरनायकतोमरवज्रधरम् पाणियुतञ्च विधाय भामिनीवृत्तवरम्। नीलमिदम् फणिनायकपिङ्गलसंलपितम् पण्डितमण्डलिकासुखदं सखि! कर्णगतम्” “परिधीलय नीलनिचोलम्” गीतगो०। “शुक्राङ्गनीलोपलनिर्मितानाम्” माघः “कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम्” कुमा०। नीलश्यामलकालानामीषद्भेदात् एकपर्य्यायता अमरे पर्य्यायतया तेषामुक्तेः। २५दिग्गजभेदे नीराजनशब्दे दृश्यम्।

**नीलक** न० नील+स्वार्थे संज्ञायां कन् वा। १काचलवणे २वर्त्तलौहे ३असनवृक्षे राजनि०। नीलेन वर्णेन कायति कै—क। ४भ्रमरे कीटभेदे पु०। “यथा मधुकरीं ध्यायन् नीलकस्तन्मयो भवेत्” हठ०सं० ७५अ० पाठान्तरम्। बीजगणितोक्ते ५अव्यक्तराशिसंज्ञाभेदे पु० “यावत्तावत् कालको नीलकोऽन्योवर्णः पीतो लोहितश्चैवमाद्याः” बीजग०।

**नीलकण्ठ** पुंस्त्री नीलः कण्ठो यस्य। १मयूरे अमरः। २दात्यूहे कालकण्ठे ३श्यामचटके ४खञ्जने च हेमच० स्त्रियां सर्वत्र ङीष्। ५पीतसारे पु० हेमच० विषेण कालकण्ठे ६शिवे पु० अमरः। “स्कन्धाधिरूढोज्ज्वलनीलकण्ठानुर्वीरुहः श्लिष्टतनूनहीन्द्रैः” “अवाप बाल्योचितनीलकण्ठ!” माघः “क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवाक्” कुमा०। ७मूलके न० राजनि० ८राक्षसभेदे पु० “घण्टाजालावसक्तास्तु नीलकण्ठा विभीषणाः” भा०सौ० ८अ० नानाराक्षसोक्तौ। शिवस्य नीलकण्ठनाननिर्वचनम् हरिवं० १२२अ० अन्यथोक्तं यथा “दत्तः प्रहारः कुलिशेन पूर्वं तवेशान! सुरराजाऽतिवीर्य्यं। कण्ठे नैल्यं तेन ते यत् प्रदत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेति कव्यः” २२२अ०। अन्यथापि तस्य तथात्वमुक्तम्

"ततः प्रथममाप्लुत्य रुद्रं विष्णुः सनातनः। जग्राह कण्ठे भगवान्नीलकण्ठस्ततोऽभवत्" । भागवते ५८अ० "तद्विषं जग्धुमारेभे प्रभावज्ञोऽनुमोदतः। ततः करतलीकृत्य व्यापि हालाहलं विषम्। अभक्षयन् महादेवः कृपया भूतभावनः। तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः। यच्चकार गले नीलं तच्च साधोर्विभूषणम्" । नीलग्रीवादयोऽप्युक्तार्थे "नीलग्रीव! शुभग्रीव! सर्वकामफलप्रद"। "असौ यो ऽवसर्पति नीलग्रीवो विलोहितः" यजु०१६।७ रुद्राध्याये। खञ्जनश्च स्वनामख्यातः पक्षिभेदः खञ्जनशब्दे २४५६पृ० दृश्यम्।

**नीलकण्ठाक्ष** पु० नीलकण्ठप्रियः शिवप्रियोऽक्षो जपमाला यस्य। रुद्राक्षे राजनि०। नीलकण्ठस्य खञ्जनस्याक्षीव अक्षि यस्य षच् समा०। खञ्जनतुल्यनेत्रयुक्ते स्त्रियां षित्त्वात् ङीष्। [षकन्दे च वृक्षे राजनि०।

**नीलकन्द** पु० नीलः कन्दो मूलमस्य। १विषकन्दे २महि-

**नीलकमल** न० नीलं कमलम्। १नीलपद्मे नित्यक०। २नीलोत्पले राजनि "गणेशाय नमो नीलकमलामलकान्तये" लीला०।

**नीलकुन्तला** स्त्री नीलाः कुन्तला यस्याः। दुर्गासखीभेदे "सखी रत्नसखी नाम जगादैवं शुचिस्मिता। तां निवार्य्यापरा प्राह सखी सा नीलकुन्तलाम्" वृहद्धर्मपु०।

**नीलकुरण्टक** पु० कर्म०। नीलझिण्ट्याम् रत्नमाला।

**नीलकुसुमा** स्त्री नीलं कुसुमं यस्याः। नीलझिण्ट्यां राजनि०

**नीलक्रान्ता** स्त्री नीलेन वर्णेन क्रान्ता। कृष्णापराजितायां राजनि०। [जातित्वात् ङीप्।

**नीलक्रौञ्च** पुंस्त्री (कोँचवक) कालवके राजनि० स्त्रियां

**नीलगङ्गा** स्त्री नदीभेदे शिवपु०।

**नीलगणेश** पु० नीलवर्णे गणक्रीडाख्ये गणेशे "कर्णिकायां चतुर्दिक्षु प्रथमं पूजयेदिमान्। गणाधिपं गणेशानं तृतीयं गणनायकम्। गणक्रीडं पीतगौररक्तनीलरुचः क्रमात्" शा०ति०१३पटले "गणेशाय नमो नीलकमलासनकान्तये" लीला०।

**नीलगिरिकर्णिका** स्त्री कर्म०। गिरिकर्णिकाभेदे राजनि०

**नील(ला)ङ्गु** नि+लगि—कु उपसर्गदीर्घः धातोरपि दीर्घ इति केचित् १कृमिजातौ भ्रमरादौ २कुसुमे च उज्ज्वलद०। ३देवभेदे पु० "चित्रपक्षेनाय वर्त्तिका नीलङ्गोः कृमिः" यजु०२४।२०

**नीलचर्म्मन्** न० कर्म०। १नीलवर्णचर्म्मणि। ६ब०। २तद्वर्णचर्मयुक्ते त्रि०।

**नीलज** न० नीलात् पर्वतात् जायते जन—ड ५त०। १वर्त्तलोहे राजनि० २नीलजातमात्रे त्रि०।

**नीलझिण्टी** स्त्री कर्म०। नीलवर्णझिण्ट्यां राजनि०।

**नीलतन्त्र** न० चीनाचारादिप्रकाशके तन्त्रभेदे

**नीलतरु** पु० नित्यकर्म०। १नारिकेले राजनि०। २नीलवर्णवृक्षमात्रे च।

**नीलताल** पु० तलमेव तालं स्वरूपं नीलं तालमस्य। १हिन्ताले २तमालवृक्षे च राजनि०।

**नीलदूर्वा** स्त्री कर्म०। हरिद्वर्णदूर्वायां राजनि०।

**नीलद्रुम** पु० नित्यकर्म०। नीलवर्णे असनवृक्षे राजनि०।

**नीलध्वज** पु० नीलवर्णो ध्वज इव। १तालवृक्षे ६ब०। २नीलध्वजवति त्रि० राजनि० ३नृपभेदे पु० "अर्जुनस्य हयो राजन् पुरीं माहिष्मतीं ययौ। नीलध्वजेन वीरेण रक्षितां दुर्गमाश्रिताम्। नीलध्वजस्य महिषी ज्वालानाम्नी सुमध्यमा। स्वाहां कन्यां प्रसूतां सा सुन्दरीं धर्मतत्परा" जैमिनीभारते आश्वमेधिके १५अ०।

**नीलनिर्गुण्डी** स्त्री कर्म०। नीलसिन्धुवारे राजनि०।

**नीलनिर्यासक** पु० नीलवर्णो निर्यासो यस्य कप्। १नीलवर्णेऽसनवृक्षे राजनि०। ६ब०। २कृष्णवर्णनिर्यासयुक्ते त्रि०।

**नीलपङ्क** पुं०न० नीलं पङ्क इव। अन्धकारे त्रिका०।

**नीलपत्र** न० नीलं पत्रं पर्णं पुष्पदलं वा (पावडि) यस्य। १नीलवर्णे उत्पले। २गुण्डतृणे ३अश्मन्तकवृक्षे ४नीलाम्रवृक्षे ५दाडिमे च राजनि० कर्म०। ६नीलवर्णपर्णे न० ६ब०। ७तद्वति नीलवर्णपत्रयुक्ते त्रि०। ८इन्दीवरे शब्दच०।

**नीलपद्म** न० कर्म०। नीलवर्णे पद्मे शब्दच०।

**नीलपिङ्गल** त्रि० "वर्णो वर्णेन" पा०कर्म०। १नीलवर्णयुक्ते अथ च पिङ्गलवर्णयुक्ते च २गोजातिभेदे पुंस्त्री० "गवां जातीस्तु वक्ष्यामि शृणुष्वैकमना द्विज!। प्रथमा गौरकपिला द्वितीया गौरपिङ्गला। तृतीया रक्तकपिला चतुर्थी नीलपिङ्गला। पञ्चमी शुक्लपिङ्गाक्षी षष्ठी तु शुक्लपिङ्गला। सप्तमी चित्रपिङ्गाक्षी अष्टमी बभ्रुरोहिणी। नवमी श्वेतपिङ्गाक्षी दशमी श्वेतपिङ्गला। तादृशास्तेऽप्यनड्वाहः कपिलास्तु प्रकीर्त्तिताः" वृहद्धर्मपु० १५अ०।

**नीलपिच्छ** पुंस्त्री नीलं पिच्छं यस्य । श्येनखगे राजनि० । स्त्रियां जातित्वात् ङीष् ।

**नीलपिष्टोडी** स्त्री नीलाम्लीवृक्षे (नल्लवलगुड) भाषाप्रसिद्धे क्षुपभेदे राजनि० ।

**नीलपुनर्णवा** स्त्री कर्म० । कृष्णवर्णपुनर्णवाशाकभेदे राजनि० ।

**नीलपुष्प** पु० नीलं पुष्पमस्य । १नीलभृङ्गराजे २नीलाम्लाने च । ३ग्रन्थिपर्णे न० ४कृष्णापराजितायां स्त्री राजनि० ५अतस्यां (मसिना) स्त्री ङीप् । स्वार्थे क तत्रैव ।

**नीलपृष्ठ** पु० नीलं पृष्ठं धूमरूपेणास्य । वह्नौ “त्वा बोधमं नीलपृष्ठम् बृहन्तम्” ऋ०५।४३।१

**नीलपोरक** पु० इक्षुभेदे सुश्रुतः इक्षुशब्दे ९०९पृ० दृश्यम् “सूचीपत्रो नीलपोरो नैपालो दीर्घपत्रकः । वातलाः कफपित्तघ्नाः सकषाया विदाहिनः” सुश्रुते तद्गुणादि ।

**नीलफला** स्त्री नीलं फलं यस्याः । जम्बूवृक्षे राजनि० ।

**नीलभृङ्गराज** पु० कर्म० । नीलवर्णभृङ्गराजे (नीलकेशरिया) राजनि० ।

**नीलमक्षिका** स्त्री कर्म० । नीलवर्णमक्षिकायाम् । “स्वातालुलिप्तं यस्यापि भजन्ते नीलमक्षिकाः । सुगन्धिवीति योऽकस्मात् व्रजन्ति ते गतायुषः” सुश्रुतः ।

**नीलमणि** पु० कर्म० । १इन्द्रनीलमणौ हारा० । नीलशब्दे दृश्यम् । तद्वर्णत्वात् २कृष्णे वासुदेवे च नीलरत्नमप्यत्र

**नीलमल्लिका** स्त्री नित्यकर्म० । विल्वे नैघण्टुप्रकाशिका ।

**नीलमाधव** पु० कर्म० । जगन्नाथदेवे “प्रेषितोऽहं हरिं द्रष्टुं मत्स्यस्थं नीलमाधवम्” स्क०पु० उत्क० ७अ० ।

**नीलमाष** पु० नित्यकर्म० । राजमाषे राजनि० । [शब्दमाला ।

**नीलमीलिक** पु० नीला मीलिका निमीलनं यस्य । खद्योते

**नीलमृत्तिका** स्त्री नीला मृत्तिकेव । १पुष्पकाशीशे राजनि० कर्मधा० । २नीलवर्णमृत्तिकायाम् । नीला मृत्तिका यत्र । ३तद्युक्तदेशादौ त्रि० ।

**नीलमेहिन्** पु० नीलं तद्वर्णं शुक्रं मेहति मिह–णिनि । नीलवर्णमेहयुक्ते “पैत्तिकेषु नीलमेहिनम्” सुश्रुतः ।

**नीलराजि** पु० ६त० । तमस्ततौ “निशा शशाङ्कक्षतनीलराजयः” कुमारसं० ।

**नीललोचन** त्रि० नीलं लोचनं नेत्रं यस्य । नीलवर्णनेत्रयुक्ते “शाकहारी च पुरुषो जायते नीललोचनः” शाता० शाकहरणपापेन तथात्वमस्य जायते” इत्युक्तम् ।

**नीललोहित** पु० “वर्णोवर्णेन” पा० कर्म० । कण्ठेन नीले केशेषु लोहितवर्णयुक्ते १शिवे अमरः । “अंशाढते निषिक्तस्य नीललोहितरेतसः” कुमा० “द्रापे अन्धसस्पते दरिद्र ! नीललोहित !” यजु०१६।४७ “प्रजार्थं वरयामास नीललोहितसंज्ञितम्” भा०आनु० १६अ० । २निश्रितनीललोहितवर्णे ३तद्युते त्रि० । ४भूमिजम्ब्वां स्त्री शब्दच० ।

**नीललोह** न० नित्यक० । वर्त्तलोहे राजनि० ।

**नीलवर्षाभू** पु० वर्षासु भवति भू–क्विप् कर्म० । १कृष्णवर्णपुनर्णवायां २कृष्णभेके च ।

**नीलवल्ली** स्त्री कर्म० । वन्दायाम् (परगाछा) रत्नमाला ।

**नीलवसन** त्रि० नील्या रक्तम् अन् नीलं वसनमस्य । १नीलवस्त्रयुक्ते २शनैश्चरे पु० हारा० । ३बलरामे च पु० कर्म० । ४नीलवर्णे वस्त्रे नीलवस्त्रादयोऽप्यत्रार्थेषु । “स्त्रीक्रीडाशयनीयादौ नीलवस्त्रं न दुष्यति” नीलशब्दे दृश्यम् । “परिमोलय नीलनिचोलम्” गीत०गो० “नीलवासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजः” (बलरामः) भाग० ५।२५।८।

**नीलबीज** पु० नीलं बीजमस्य । १नीलासने राजनि० २नीलवर्णबीजयुक्तमात्रे त्रि० ।

**नीलवुह्ना** स्त्री कर्म० । नीलवर्णे वुह्नाभेदे राजनि० ।

**नीलवृक्ष** पु० कर्म० । अजान्त्यां नीलासने वृक्षभेदे राजनि० ।

**नीलवृन्त(क)** न० नीलं वृन्तमस्य वा कप् । तूले राजनि० ।

**नीलवृष** पु० नित्यकर्म० । विशेषलक्षणाक्रान्ते वृषभेदे तल्लक्षणमुक्तं श०त० मत्स्ये न “लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स वृषो नील उच्यते” “स वृषो नील उच्यते” इत्युक्तेः नीलशब्दस्यैव तत्रार्थे पारिभाषिकत्वं तस्य सामानाधिकरण्यद्योतनायैव वृषशब्दप्रयोगः । अतएव “नीलं वा वृषमुत्सृजेत्” देवीपु० वाक्ये व्यस्तप्रयोगः । नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः” भा०अनु० १६५ अ० वृषार्थकषण्डशब्दप्रयोगश्च । “लोहितो यस्तु वर्णेन शङ्खवर्णखुरो वृषः । लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः” इति वचनेऽपि न समुदाये पारिभाषिकत्वम् किन्तु नीलशब्दस्यैव सामान्याधिकरण्यद्योतनाय वृषशब्दप्रयोगः पूर्वोक्तहेतोः । एवं लोहितवृषशब्देऽपि लोहितशब्दस्यैव पारिभाषिकत्वम् यथोक्तं विष्णुसं० “जीववत्सायाः पयस्विन्याः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा मुखपुच्छपादशृङ्गशुक्लं यूथस्याच्छादकम्” । नीलषण्डादयोऽप्यत्र ।

**नीलत्वचा** स्त्री नीलवर्णं पत्रं पुष्पं फलं च वर्षति प्रसूते वृष-क । यात्रीकीभेदे राजनि० ।

**नीलव्रत** न० व्रतभेदे "यस्तु नीलोत्पलं हैमं शर्करापात्र-संयुतम् । एकान्तरितनक्ताशी समाप्ते वृषभं ददेत् । स वैष्णवपदं याति नीलव्रतमिदं स्मृतम्" मत्स्यपु० ।

**नीलशिखण्ड** त्रि० नीलः शिखण्डोऽस्य । १नीलवर्णशिखण्डयुक्ते २रुद्रभेदे पु० "रुद्र ! जटील ! भेषज ! नीलशिखण्ड ! कर्मकृत् !" अथ० २।२७।६ । [राजनि० ।

**नीलशिग्रु** पु० कर्म० । नीलवर्णपुष्पयुक्ते शोभाञ्जनभेदे

**नीलसन्ध्या** स्त्री नीला सन्ध्येव । कृष्णापराजितायां राजनि०

**नीलसरस्वती** स्त्री द्वितीयविद्यायां तारायाम् "मातर्नीलसरस्वति ! प्रणमतां सौभाग्यसम्पत्प्रदे !" इति तत्स्तोत्रम् । "नीला च वाक्प्रदा चेति तेन नीलसरस्वती" तन्त्रसारे तन्नामनिरुक्तिः । तन्मन्त्रस्तु तत्रैव "ताराद्या पञ्चवर्णेयं श्रीमन्नीलसरस्वती । सर्वभाषामयी शुद्धा सर्वदेवैर्नमस्कृता" ("ओँ ह्रीँ हूँ क फट्") २२८पृ० तारिणीशब्दे दर्शिते तारिणीशब्दे सरस्वतीपदं नीलसरस्वतीपरम् ।

**नीलसार** पु० नीलः सारोऽस्य । तिन्दुकवृक्षे (तँद)राजनि०।

**नीलसिन्धुवार** पु० कर्म० । नीलनिर्गुण्ड्याम् राजनि० ।

**नीलस्कन्धा** स्त्री नीलः स्कन्धोऽस्याः । गोकर्णीलतायाम् नैघण्टुप्रकाशिका ।

**नीला** स्त्री १नीलमक्षिकायाम् अमरः । २नीलपुनर्णवायां ३नील्योषधौ च राजनि० अत्र वा० न ङीप् । ४मल्लारागस्य स्त्रीभेदे हलहलमेपु० । अस्यान्योऽर्थो नीलशब्दे दृश्यः

**नीलाङ्कितदल** पु० नीलाङ्कितं दलमस्य । तैलकन्दे नैघ०प्र०।

**नीलाङ्ग** पुंस्त्री नीलमङ्गं यस्य । १सारसखगे राजनि० स्त्रियां जातित्वात् ङीप् । २नीलवर्णाङ्गयुक्तमात्रे त्रि० स्त्रियां स्वाङ्गत्वात् ङीष् ।

**नीलाञ्जन** न०कर्म० । १सौवीराञ्जने (तुँते)राजनि० "नीलाञ्जनचयप्रख्याम्" तन्त्रसारः । नीलं मेवमञ्जयति अनृजि-णिच्-ल्यु । २विद्युति जटा० करणे ल्युट् ङीप् । ३कालाञ्जनीक्षुपे राजनि० ।

**नीलाञ्जसा** स्त्री नीलमञ्जति अनृजि-णिच् असच् । १अप्सरोभेदे २नदीभेदे ३विद्युति च मेदि० ।

**नीलाद्रिकर्णिका** स्त्री कर्म० । कृष्णापराजितायां राजनि० नीलापराजिताऽप्यत्र ।

**नीलाम्बर** पु० नीलमम्बरं यस्य । १बलदेवे २शनैश्चरे च कर्म० । ३नीलीरक्ते वस्त्रे न० । ४त्व० । ४तद्वति त्रि० । नीलमम्बति अबि-अरच् । ५तालीशपत्रे राजनि० ।

**नीलाम्बुज** न० कर्म० । नीलपद्मे रत्नमाला नीलाम्बुजातादयोऽप्यत्र ।

**नीलाम्बुजन्मन्** न० नीलवर्णमम्बुजन्म । नीलोत्पले अमरः

**नीलाम्ला** पु० ईषत्कालेन म्लायति म्ला+म्ला-क कर्म०। १नीलझिण्टाम् । तस्या हि पुष्पमल्पकालेनैव गलति । २श्यामाम्लत्रां स्त्री गौरा० ङीष् । नीलाम्लानीत्यप्यत्र ।

**नीलालु** पु० कर्म० । श्यामवर्णकन्दे आलुभेदे राजनि०।

**नीलाशी** स्त्री नीलं वर्णमश्नुते व्याप्नोति अश-अण् उप०स० गौरा० ङीष् । नीलनिर्गुण्ड्यां नीलसिन्धुवारे राजनि०।

**नीलाशोक** पु० कर्म० । नीलवर्णे अशोके "सालेन कलमशाली, रक्ताशोकेन रक्ताम्लानी च । पाण्डुकः चौरिकया नीलाशोकेन शूकरकः" इ०सं० २९अ० वनस्पतिभेदकथा शस्यभेदकथनमुक्तौ ।

**नीलाश्मन्** पु० कर्म० । नीलमणौ "नीलाश्मद्युतिमाश्रपाद दशकां सेवे महाकालिकाम्" महाकालीध्यानम् । "नीलाश्मद्युतिभिदुराम्भसोऽपरत्र" माघः ।

**नीलासन** पु० कर्म० । (पियासाल) वृक्षभेदे राजनि० ।

**नीलि** पु० नील-इन् । जलजन्तुभेदे "मद्यं नीलिस्तु लाचाश्च सर्वांश्चैकशफांस्तथा" अविक्रेयेषूक्तौ मनुः । "नीलिर्जलजन्तुः" कुल्लू० ।

**नीलिका** स्त्री नीली इवार्थे क नील-ण्वुल् क कापि अत इत्त्वं वा । १नीलसिन्धुवारे राजनि० २नीलिन्यां ३शेफालिकायां मेदि० । ४नेत्ररोगभेदे "स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः" सुश्रुतः । ५क्षुद्ररोगभेदे "क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । सहसा मुखमागत्य मण्डलं विसृजत्यतः । नीरुजं तनुकं श्यावं तं व्यङ्गमिति निर्दिशेत् । कृष्णमेवंगुणं गात्रे मुखे वा नीलिकां विदुः" माधवकरः । जलस्य दुञ्वरविशेषे "भूमिरुपरा वृक्षस्य कोटरः जलस्य नीलिका" इत्यादि ।

**नीलिन्** त्रि० नीलो भूम्ना प्राशस्त्येन वाऽस्त्यस्य इनि । प्रशस्तनीलवर्णयुक्ते स्त्रियां ङीप् । सा च २अजमीढनृपस्य पत्नीभेदे पु० नीलशब्दे दृश्यम् "अजमीढस्य नीलिन्यां प्रशान्तिरुदपद्यत" हरिवं० ३२अ० । ३नील्योषधौ च ।

**नीलिमन्** पु० नीलस्य भावः इमनिच् । नीलवर्णे "कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम्" गीतगो०

**नीलीराग** पु० "नचातिशोभते यन्नापैति प्रेम मनोगतम्। तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः" सा०द० उक्ते १प्रेमभेदे। सोऽस्यास्ति अच्। २पूर्वोक्तप्रेमयुक्ते पुंसि ३तथाविधस्त्रियां स्त्री हेमच०। नील्यारागं इव। ४नीलवर्णे शब्दच०। स्वार्थे क। नीलिकाऽप्यत्र नेत्ररोगभेदे च "नीलिकाकाचसंज्ञितः" सुश्रुतः।

**नीलीरोग** पु० अक्षिरोगभेदे "ऐर्स्यं हन्यादार्म्यनक्तान्ध्यकाचान् नीलीरोगं तैमिरं चाञ्जनेन" सुश्रुतः।

**नीलीवृत्ताकृति** पु० नीलीवृत्तस्याकृतिरिवाकृतिरस्य। शरपुङ्खे शब्दार्थचि०।

**नीलोत्पल** न०कर्म०। नीलवर्णे उत्पले "विलम्बिनीलोत्पलकर्णपूराः" माघ० "नीलोत्पलं बिभ्रती" ताराध्यानम्। इदञ्च अञ्जनादिगणे सुश्रुते पठित्वा तद्गुण उक्तो यथा "अञ्जनरसाञ्जननामपुष्पप्रियङ्गुनीलोत्पलनलदनलिनकेशराणि मधूकञ्चेति। अञ्जनादिर्गणो ह्येष रक्तपित्तनिबर्हणः"।

**नीलोत्पलाद्यघृत** न० चक्रपाणिदत्तोक्ते घृतभेदे "नीलोत्पलोशीरमधूकयष्टीद्राक्षा विदारीकुशपञ्चमूलैः। साज्जीवनीयैश्च घृतं विपक्वं शतावरीकारसदुग्धमिश्रम्। तच्छर्करापादयुतं प्रशस्तम् असृग्दरे मारुतरक्तपित्ते। क्षीणे बले रेतसि संप्रनष्टे कृच्छ्रे च रक्तप्रभवे च गुल्मे"

**नीलोत्पलिन्** पु० नीलोत्पलं धार्य्यत्वेन तद्वर्णो वास्त्यस्य इनि। मञ्जुघोषे शिवांशभेदे त्रिका०। [च मेदि०।

**नीवर** पु० नी—ष्वरच् नि०। १परिव्राजि २वणिजके ३वास्तव्ये

**नीवाक** पु० नियतं वाको वचनं नि—वच—घञ् दीर्घः। १महार्घहेतोर्धान्यस्य संप्रयोगकारके अमरः। निवृत्तौ अव्ययी०। २वचननिवृत्तौ अव्य०।

**नीवार** पु० नि+वृ—घञ् दीर्घः। तृणधान्यभेदे "नीवारपाकादिकडङ्गरीयैः" "अपत्यैरिव नीवारभागधेयोचितैर्मृगैः" रघुः "नीवारफलमूलाशानृत्पीनस्यति शेरते" भट्टिः। स च कुधान्यं यथोक्तं सुश्रुते "कोरदूषकश्यामाकनीवारशान्ततुवरकोद्दालकप्रियङ्गुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकावरुकतोदपर्णीतुकुन्दकरेणु यवप्रभृतयः कुधान्यविशेषाः। उष्णाः कषायमधुरारूक्षाः कटुविपाकिनः। श्लेष्मघ्ना बद्धनिष्यन्दावातपित्तप्रकोपणाः। कषायमधुरास्तेषां शीतपित्तापहाः स्मृताः। नीवारः शीतलोग्राही पित्तघ्नुत्कफवातकृत्" भावप्र०। स्वार्थे क। तत्रार्थे "नीवारकादयो मुद्गादयश्च क्रमासेन कषायोपगः" सुश्रु०।

**नीवि(वी)** स्त्री निव्ययति निवीयते वा नि+व्ये—इन् यलोपदीर्घौ डिच्च वा ङीप्। १वणिजां मूलधने २स्त्रीकटीवस्त्रबन्धे अमरः "नीविं प्रति प्रणिहिते च करे प्रियेण" सा०द० "नीवीरतिक्रम्य सितेतरस्य" कुमा० "आलोच्य प्रियतमसंयुक्ते विनीवी" माघः "निवीप्रविष्टसनकरः" भा० स्त्री० २४अ०। ३वस्त्रमात्रे "अवनिज्य पूर्ववन्नीविं विश्रस्य नमोव इत्यादि" कात्या० ४।१।१५। ४राजपुत्रादेर्बन्धके सुभूतिः तत्र मूलधने "निजगृहमिवानुप्रविश्य नीविं सारमहतीमादाय निरगाम्" दशकु०।

**नीव्र** न० नीध्रशब्दार्थे पटले अमरे पाठान्तरम्।

**नीवृत्** पुंस्त्री नियतं वर्त्ततेऽत्र नि+वृत—आधारे क्विप् दीर्घः। देशे जनपदे अमरः "गमिकर्म्मीकृतनैकनीवृता" नैष०।

**नीशार** पु० नितरां शीर्य्यते हिमानिलाद्यत्रानेन वा नि+शॄ—करणे आधारे वा घञ् दीर्घः। हिमानिलनिवारणे १प्रावरणे २काण्डपटे च (कानात्) अमरः।

**नीहार** पु० निह्रियते नि+हृ—कर्मणि घञ् दीर्घः। घनीभूते १शिशिरे २हिमे च अमरः "नीहारजालमलिनाः पुनरुक्तसान्द्राः" माघः इ०र०टीकोक्ते त्रयोविंशतिगणात्मके २दण्डकभेदे।

**नु** अव्य० नुदति नौति वा नुद—नु—वा मित० डु। १विकल्पे २अनुनये ३अतीते ४प्रश्ने ५हेतौ ६वितर्के ७अपमाने ८आदेशे ९अनुतापे च मेदि० "चालितं नु गमितं नु वधूनाम्" माघः अयञ्चोत्प्रेक्षाद्योतकः। क्वचित् संशयालङ्कारद्योतकश्च। [अणोपदेशत्वात् न णत्वं प्रनुडति।

**नुड** वधे तु० कु० पर० सक० सेट्। नुडति अनुडीत्। नुनोड

**नुति** स्त्री नु—क्तिन्। १स्तवे २प्रणामे च।

**नुत्त(न्न)** त्रि० नुद—क्त। १प्रेरिते २क्षिप्ते च अमरः "अदस्त्वया नुत्तमनुत्तमं तमः" माघः। पक्षे क्तस्य नः पूर्वदस्य नः। "न नोननुन्नोनुन्नोनोनाना नानानना ननु। नुन्नोऽनुन्नोननुन्ने नोनानेनानुन्ननुन्ननुत्" किरा०।

**नूतन** त्रि० नवएव "नवस्य नूप्तनप्खाश्च" पा० स्वार्थे तनप् नूरादेशश्च। नवीने अमरः "नूतनजलधररुचये" भाषा० "प्रशमस्थितपूर्वपार्थिवम् कुलमभ्युन्नतनूतनेश्वरम्" रघुः।

**नूत्न** त्रि० नव एव नव+नूतनवत् त्नप् नूरादेशश्च। नवीने अमरः "नूत्ना इन्द्र! ते रथमचिती भूमः" ऋ०८।२१।७

**नूद** पु० नुदति पापं क पृषो० दीर्घः। अश्वत्थाकारे ब्रह्मदारुवृक्षे अमरः।

**नूनम्** अव्य० नु+ऊन—णि। १वितर्के २निश्चिते ३स्मरणे

अमरः ४वाक्यारम्भे ५उत्प्रेक्षाद्योतने च मेदि० “त्वद्रे-ऽपि नूनं मरणं प्रपन्ने” “न वेत्सि नूनं यत एवमात्थ माम्” कुमा० “नूनं शङ्के प्रभुं प्रायोन्यूनमित्येवमादयः” सा०द० उत्प्रेक्षाद्योतकोक्तौ ।

**नूपुर** न० नू-क्विप् तुवि पुरति पुर-अग्रगमने क । (नेपुर) पादाङ्गदे अमरः “अप्सरोनूपुररवैः प्रनृत्यद्बर्हिणः” भा०व० १४६ अ० ।

**नृ** नये भ्वा० प० अक० अनिट् । नरति अनारीत् ननार अणोपदेशत्वात् न णत्वं प्रनरति “णोपदेशास्त्वनर्द-नाटिनाथ्नाथ्नन्दनक्कनॄनृतः” । “नर्द शब्दे नट अवस्यन्दने चुरादिः नाटीति दीर्घनिर्देशात् णट नृतावित्ति घटादिर्नेह गृह्यते नाधृ नाथृ याच्ञादौ टु नदि समृद्धौ नक्क नाशने नॄ नये नृती गात्रविक्षेपे एतद्भिन्ना णोपदेशाः” इति मनोरमा । नॄ नये सेट् इत्यन्ये

**नृ** पु०नी-ऋन् डिच्च । १मनुष्ये २पुरुषे च अमरः । ना नरौ नरः नॄन् नृः नृणां नॄणाम् । “नृणामेकोगम्यस्त्वमसि पयसामर्णव इव” पुष्पदन्तस्तोत्रम् । “अन्ये कृतयुगे नॄणां युगह्रासानुरूपतः” मनुः । ३नेतरि त्रि० ४शङ्कौ पु० । मनुष्यजातौ स्त्रियां ङीप् दृशो नारी “नारीणामनुकूलमाचरसि चेज्जानासि” सा०द० । [टिकाप्यत्र स्त्री ।

**नृकपाल** न० ६त० । नरस्य कपाले शीर्षास्थ्नि नृकरो-

**नृकेशरिन्** पु०ना चासौ केशरी च । नरसिंहे विष्णोरवतारभेदे नरसिंहशब्दे दृश्यम् ।

**नृग** पु० औशीनरे १नृपभेदे २तत्पत्न्यां स्त्री । इत्वंशब्दे १४७१ पृ० मूलं दृश्यम् । “राजर्षेस्तस्य च सरिन्नृगस्य भरतर्षभ ! । रम्यतीया बहुजला पयोष्णी द्विजसेविता” भा०व० ८८अ० । स च अज्ञानात् स्वकीयधेनुबुद्ध्या ब्राह्मणधेनुं विप्राय दत्त्वा कृकलासतां प्राप्त इत्येषा कथा भा० अनु० ७०अ० दृश्या ।

**नृगधूम** पु० तीर्थभेदे शब्दार्थ० ।

**नृचक्षस्** पु० नॄन् चष्टे पश्यति भक्ष्यत्वेन चक्ष-असुन् न ख्यादेशः । १राक्षसे हेमच० । २मनुष्यदर्शके च “श्येनो नृचक्षा अग्नेर्द्वा चक्षुषावपश्यामि” ताण्ड्य०ब्रा० । ३देवे च “नृचक्षसां भागोऽसि” यजु० १४।२४ “नॄन् शुभाशुभकर्त्तॄन् चष्टे जानन्ति ये ते नृचक्षसो देवाः” वेददी०

**नृचक्षुस्** पु० कौरवे सुनीथपुत्रे भाविनि नृपभेदे “सुनीथस्य भविता नृचक्षुर्यत्सुखी नलः” भाग० ९।२२।२८श्लो० ।

**नृजल** न० ६त० । १मनुष्यनेत्रजले नृनिःसृतं जलम् शा०त० । २मानवमूत्रे हेमच० ।

**नृत** नर्त्तने दिवा० प० अक० सेट् । नृत्यति अनर्त्तीत् ननर्त्त नर्त्तिष्यति नर्त्स्यति । नृत्तम् नृत्यम् । निनृत्सति नरीनृत्यते । नरीनर्त्ति नर्नर्त्ति नरीनरीति नर्नरीति । अणोपदेशत्वात् सति निमित्ते न णत्वम् । प्रनृत्यति नर्त्तकः नर्त्तकी । “नृत्यति युवतिजनेन समं सखि ! विरहिजनस्य दुरन्ते” गीतगो० “नृत्यन्ति गोक्षर्णशरीरभक्षाः” चौरप० । [त्वम् । नर्त्तने शब्दच० ।

**नृति** स्त्री नृत-गात्रविक्षेपे इन् किच्च अभिधानात् स्त्री-

**नृतु** पु० नृत-कु । नर्त्तके “तेऽपरीतं नृतो शवः” ऋ०८।२४।९ “नृतू जनिमन् यज्ञियानाम्” ऋ०६।६२।५ “नृतू नर्त्तकावश्विनौ” भा० “वज्रेण दाशुषे नृतो !” ऋ०१।१२०।७

**नृतू** त्रि०नृत-कू । १नर्त्तके । नॄन् तूर्वति हिनस्ति तूर्व-क्विप् । २नरहिंसके च “नृतूरिवापोर्णुते” ऋ०१।९२।४

**नृत्त(त्य)** न० नृत-क्त क्यप् वा । तालमानयुक्ते सविलासाङ्गविक्षेपरूपे नर्त्तने “ताण्डवं नटनं नृत्यं लास्यं नृत्यञ्च नर्त्तने” अमरे ईदृशेऽपि पर्यायता । तल्लक्षणादि यथा “देवरुच्या प्रतीतो यस्तालमानरसाश्रयः । सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः । ताण्डवञ्च तथा लास्यं द्विविधं नृत्यमुच्यते । अङ्गविक्षेपबाहुल्यं तथाभिनयशून्यता । यत्र सा पेरणिस्तस्याः संज्ञा देशीति लोकतः । छेदनं भेदनं यत्र बहुरूपा सुखावली । ताण्डवं बहुरूपन्तद्बाहुल्यागलद्भुतम् । छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते । यत्राभिनयाद्यैर्भावैरसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् । मधुरं बद्धलीलाभिर्नर्त्तकीभिर्यत्र नृत्यते । वशीकरणविद्याभं तल्लास्यं यौवतं मतम् । गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्त्तते” सङ्गीतदा० । अपरूपस्य नृत्यं व्यर्थं यथा “नृत्येनालमरूपेण खिन्नोऽस्य रूपतः । चार्धिष्ठानवन्नृत्यं नृत्यमन्यद्विडम्बना” इति मार्क०पु० “रङ्गस्य दर्शयित्वा नर्त्तकी निवर्त्तते यथा नृत्यात्” सा०का० । “गोपाङ्गना नृत्यमनन्दयत्तम्” भट्टिः ।

**नृत्यप्रिय** त्रि० नृत्यं प्रियमस्य । १नर्त्तनप्रिये २ताण्डवप्रिये शिवे पु० ३कुमारानुचरमातृभेदे स्त्री “नृत्यप्रिया च राजेन्द्र ! शतोलूखलमेखला” भा०श० ४७अ० ।

**नृत्यशाला** स्त्री ६त० । (नाचघर) नाट्यगृहे

**नृत्यस्थान** न० ६त०। नृत्याधिकरणे रङ्गस्थाने अमरः।

**नृदुर्ग** न० नृवेष्टितं दुर्गम् शा०त०। मनुष्यरथादिवेष्टिते नृपस्याश्रयणीये दुर्गभेदे (गड) भेदे "नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् नृपः" मनुः "नृदुर्गं चतुर्दिगवस्थायिहस्त्यश्वरथयुक्तबहुपादातरक्षितम्" कुल्लू०।

**नृदेव** पु० ना देव इव। नरदेवे नृपे "अम्लानमालां विपुलां च पत्रैर्देवा नृदेवाश्च भिदां न भेजुः" नैष०।

**नृधर्मन्** पु०नरस्येव धर्मोऽस्य अनिच् समा०। १कुवेरे हेमच० २मनुष्यधर्मयुक्तमात्रे त्रि० स्त्रियां वा ङाप्।

**नृनमन** न०६त०। नृभिर्नम्यते नम—कर्मणि ल्युट् पूर्वपदादिति णत्वे प्राप्ते क्षुभ्ना० न णत्वम्। २मनुष्यनमनीये देवादौ।

**नृप** पु० नॄन् पाति रक्षति पा—क। "चतुर्योजनपर्यन्तेष्वधिकारी नृपो भवेत्" इत्युक्ते १राजविशेषे २राजमात्रे च अमरः। "नृपादिलक्षणं यथा "चतुर्योजनपर्यन्त०मधिकारो नृपस्य च। यो राजा तच्छतगुणः स एव मण्डलेश्वरः। तस्माद्दशगुणो राजा राजेन्द्रः परिकीर्त्तितः" ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ८६अ०। तत्प्रशंसा यथा "अपुत्त्रस्य नृपः पुत्रो निर्धनस्य धनं नृपः। अमातुर्जननी राजा अतातस्य पिता नृपः। अनाथस्य नृपो नाथो ह्यभर्त्तुः पार्थिवः पतिः। अभृत्यस्य नृपो भृत्यो नृप एव नृणां सखा। सर्वदेवमयो राजा तस्मात्त्वामर्थये नृप!" कालिकापु०५०अ०। "व्यवहारान्नृपः पश्येद्विद्वद्भिः ब्राह्मणैः सह" याज्ञ० "नृपेण पाणिग्रहणस्पृहेति" नैष०। २षोडशसंख्यायाम् भारते षोडशानामेव राज्ञां माहात्म्यविशेषकथनात् नृपशब्दस्य तत्सङ्ख्यायाचित्वम् षोडश नृपाश्च भा०द्रो० ५५अध्यायादौ षोडशराजिकपर्वण्युक्ताः तत्रैव दृश्याः। "भुवि नृपमितहस्तेष्वङ्गलग्नं तदग्रम्" लीला०। राज्ये एकनृपकरणस्यावश्यकता तत्र विशेषश्च औशनसनीतिपरिशिष्टे १अ० उक्तो यथा

"सदैकनायकं राज्यं कुर्य्यान्न बहुनायकम्। नानायकं क्वचिदपि कर्त्तुरीप्सितसूतये। राजकुले तु बहवः पुरुषा यदि सन्ति हि। तेषु ज्येष्ठो भवेद्राजा शेषास्तत्कार्यसाधकाः। गरीयांसोवराः सर्वे सहायेभ्यो विवृद्धये। ज्येष्ठोऽपि बधिरः कुष्ठी मूकोऽन्धः षण्ड एव यः। स राज्यार्हो भवेन्नैव भ्राता तत्सुत एव वा। स कनिष्ठोऽपि, ज्येष्ठस्य भ्रातुः पुत्रस्तु राज्यभाक्। दायादानामैकमत्यं राज्ञः श्रेयस्करं परम्। पृथग्भावो विनाशाय राज्यस्य च कुलस्य च। अतः स्वभोगसदृशान् दायादान् कारयेन्नृपः। अव्याहताज्ञः संतुष्येच्छत्रसिंहासनैरपि। राज्यविभजनाच्छ्रेयो न भूपानां भवेत् खलु। अल्पीकृतं विभागेन राज्यं शत्रुर्जिहीर्षति। राज्यतुर्य्यांशदानेन स्थापयेत्तान् समन्ततः। चतुर्दिक्षु च वा देशाधिपान् कुर्य्यात् सदा नृपः। गोगजाश्वोष्ट्रकोषाणामाधिपत्ये नियोजयेत्। सेनाधिकारे संयोज्या बान्धवाः श्यालकादयः। स्वदोषदर्शकाः कार्य्याः गुरवः सुहृदश्च ये। वस्त्रालङ्कारपात्राणां स्त्रियो योज्यास्तु दर्शने। स्वयं सर्वं च विसृशेत् पर्य्यायेण च दुर्नयेत्। मन्त्रयेन्मन्त्रिभिः सार्द्धं भावि कृत्यं तु निर्जने। अन्तर्वेश्मनि रात्रौ वा दिवा वाऽन्यविशोधिते। सुहृद्भिर्भ्रातृभिः सार्द्धं सभायां पुत्रबान्धवैः। राजकृत्यं सैन्यपैश्च सभ्याद्यैश्चिन्तयेन्नृपः"। [राजनि०।

**नृपकन्द** पु० कन्दानां नृपः श्रेष्ठः राजद०। राजपलाण्डौ

**नृपगृह** न० ६त०। राजमन्दिरे तल्लक्षणादि वृ०सं० ५३अ० "उत्तमसष्टाभ्यधिकं हस्तशतं नृपगृहं पृथुत्वेन। अष्टांशोनान्येवं पञ्च सपादानि दैर्घ्येण" औशनसनीतिपरिशिष्टे १अ० तद्विहृतिर्यथा

"राजगृहं सभामध्यं गवाश्वगजशालिकम्। प्रशस्तवापीकूपादिजलयन्त्रैः सुशोभितम्। सर्वतः स्यात् समभुजं दक्षिणोच्चमुदङ्नतम्। शालां विना नैकभुजम् तथा विषमबाहुकम्। प्रायःशाला नैकभुजा चतुःशालं विना शुभा। शस्त्रास्त्रधारिभिर्युक्तप्राकारं सुष्ठुयन्त्रकम्। सन्निकृष्टचतुर्द्वारं चतुर्दिक्षु सुशोभनम्। दिवारात्रौ सशस्त्रास्त्रैः प्रतिकक्षासु गोपितम्। चतुर्भिः पञ्चभिः षड्भिर्यामिकैः परिवर्त्तकैः। नानागृहोपकार्य्याट्टसंयुतं कल्पयेत् सदा। वस्त्रादिमार्जनार्थं च स्नानार्थं यजनार्थकम्। भोजनार्थं च पाकार्थं पूर्वस्यां कल्पयेत् गृहम्। निद्रार्थञ्च विहारार्थं पानार्थं रोदनार्थकम्। धान्यार्थं द्वारपालार्थं दासीदासार्थमेव च। उत्सर्गार्थं गृहान् कुर्य्यात् दक्षिणस्यामनुक्रमात्। गोखगोष्ट्रगजाद्यर्थं गृहान् प्रत्यक् प्रकल्पयेत्। रथवाज्यर्थशस्त्रार्थव्यायामयामिकार्थकम्। वस्त्रार्थकं तद्गरार्थं विद्याभ्यासार्थमेव च। उदक् गृहान् प्रकुर्वीत सुगुप्तान् सुमनोहरान्। यथासुखानि वा कुर्य्याद्गृहाण्येतानि वै नृपः। धर्माधिकरणं शिल्पशालां कुर्य्यादुदग् गृहान्। पञ्चमांशाधिकोच्छ्रायां भित्तिं विस्तरतो गृहे।

कोष्ठविस्तारषष्ठांशस्थूला सा च प्रकीर्त्तिता। एकभूमेरिदं मानमूर्द्ध्वमूर्द्ध्वं समन्ततः। स्तम्भैश्च भित्तिभिर्वापि पृथक् कोष्ठानि संन्यसेत्। त्रिकोष्ठं पञ्चकोष्ठं वा सप्तकोष्ठं गृहं स्मृतम्। द्वारार्थमष्टधा भक्तं द्वारस्यांशौ तु मध्यमौ। द्वौ द्वौ ज्ञेयौ चतुर्दिक्षु धनपुत्रप्रदौ नृणाम्। तत्रैव कल्पयेत् द्वारं नान्यत्र तु कदाचन। वातायनं पृथक् कोष्ठे कुर्य्याद्वाटक् सुखावहम्। अन्यगेहद्वारविद्धं गृहद्वारं न कारयेत्। वृक्षकोणस्तम्भमार्गपीठकूपैश्च वेधितम्। प्रासादमण्डपद्वारे मार्गवेधो न विद्यते। गृहपीठं चतुर्थांशमुच्छ्रायस्य प्रकल्पयेत्। प्रासादानां मण्डपानां चार्द्धांशं चापरे जगुः। परवातायनैर्विद्धं नापि वातायनं स्मृतम्। हीना निम्ना च्छर्दिर्न स्यात्तादृक् कोष्ठस्य विस्तरः। स्वोच्छ्रायस्यार्द्धमूलैकप्राकारः समूलकः। तृतीयांशकमूलो वा हस्वस्यार्द्धप्रविस्तरः। उच्छ्रितस्तु तथा कार्य्यो दस्युभिर्न विलङ्घ्यते। यामिकैरचितो नित्यं नालिकास्त्रैश्च संयुतः। बहुसुदृढगुल्मश्च सुगवाक्षप्रणालिकः। स्वहीनमहाप्राकारो ह्यसमीपमहीधरः। परिखा तत्र कार्य्या च खातात् द्विगुणविस्तरा। नातिसमीपप्राकारा ह्यगाधसलिला शुभा। युद्धसाधनसम्भारैः सुयुक्तगुप्तैर्विना। न श्रेयसे दुर्गवासो राज्ञः स्याद् बन्धनाय वै"।

**नृपञ्जय** पु० अन्यान् नृपान् जयति जि-खश्। पौरवे नृपभेदे "चैद्यात् सुवीरो नृपतिः सुवीरात्तु नृपञ्जयः। नृपञ्जयो बहुरथ इत्येते पौरवाः स्मृताः" हरिवं० २०अ०।

**नृपति** पु० नॄन् पाति पा-डति ६त०। १कुवेरे २नृपाले राजनि च शब्दरत्ना० "जाताभिषङ्गो नृपतिर्निषङ्गात्" रघुः। नृनाथादयोऽपि राजनि। ३क्षत्रिये "नृपतेर्वर्षयोर्द्वयोः" मनुः।

**नृपतिवल्लभ** पु० ६त०। १वटिकात्मके औषधभेदे "जातीफलं लवङ्गाब्दत्वगेलाटङ्करामठम्। जीरकञ्च यवानी च विश्वासैन्धवपत्रकम्। लौहभस्म रसं गन्धं ताम्रं प्रत्येकशः पलम्। मरिचं त्रिपलं दत्त्वा छागीदुग्धेन पेषयेत्। धात्रीरसेन वा पिष्ट्वा वटिकां कुरु यत्नतः। श्रीमद्गगननाथेन विचिन्त्य परिनिर्मितः। सूर्य्यवर्त्ते-अथा चायं रसो नृपतिवल्लभः। अष्टादशवटीं खादेत् पवित्रः सूर्य्यदर्शकः। हन्ति मन्दानलं सर्वमामदोषं विसूचिकाम्। लोहगुल्मोदराष्ठीला यकृत् पाण्डु हलीमकम्। हृच्छूलं कण्ठशूलञ्च चक्षुःशूलञ्च कामलाम्। शिरःशूलं कटीशूलमानाहमोष्ठशूलकम्। कासश्वासामवातञ्च श्लीपदं शोथमर्बुदम्। गलगण्डं गण्डमालामम्लपित्तञ्च गर्दभीम्। क्रिमिकुष्ठानि दद्रूंश्च वातरक्तं भगन्दरम्। उपदंशमतीसारं ग्रहण्यर्शःप्रमेहकम्। अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातमसृग्दरम्। ज्वरं जीर्णज्वरं कण्डूं तन्द्रालस्यं वमिं भ्रमिम्। दाहविद्रधिहिक्काश्च जड़गद्गदमूकताः। बाधिर्य्यं स्वरभेदञ्च शुक्रहानिविसर्पकान्। ऊरुस्तम्भं रक्तपित्तं गुदभ्रंशारुचिं तृषाम्। कर्णनासानुशोथांश्च दन्तरोगञ्च पीनसम्। स्थौल्यञ्च शीतपित्तञ्च स्थावराणि विषाणि च। वातपित्तकफोत्थांश्च द्वन्द्वजान् सान्निपातिकान्। सर्वरोगचयान् हन्ति चण्डांशुरिव पापहा। बलवर्णकरो ह्येष आयुष्यो वीर्य्यवर्द्धनः। परं वाजीकरः श्रेष्ठः पटुतामन्त्रसिद्धिदः। अरोगी दीर्घजीवी स्यात् रोगी रोगं विमुञ्चति। रसस्यास्य प्रसादेन सुबुद्धिर्जायते नरः" भैषज्यरत्नावली। २राज्ञां प्रिये त्रि० ३राजपत्न्यां स्त्री नृपवल्लभादयोऽप्यत्र।

**नृपत्नी** स्त्री नॄणां पतिः पालयित्री "विभाषा सपूर्वस्य" पा० नान्तादेशः नान्तत्वात् स्त्रियां ङीप्। नॄणां पालयित्र्यां स्त्रियां "अभि नो देवीरवसा महः शर्म्मणा नृपत्नीः" ऋ०१।२२।११ "नृपत्नीः मनुष्याणां पालयित्र्यः" भा० छन्दसि जसः स्थाने शस्।

**नृपद्रुम** पु० नृपस्यादनो द्रुमः शा०त०। राजादने आरग्वधे राजनि०। नृपवृक्षादयोऽप्यत्र "खादेद्वाप्यङ्कुरान् भृष्टान् पूतीकनृपवृक्षजान्" सुश्रुतः।

**नृपप्रिय** पु० ६त०। (वेडुयाश) १वंशभेदे तस्य दुर्गवेष्टनकारित्वात्तत्प्रियत्वम्। २राजपलाण्डौ ३शालिधान्ये ४आम्रे च शब्दच०। ५राजवल्लभे त्रि० ६केतक्यां ७राजखर्ज्जूर्य्यांश्च स्त्री राजनि०।

**नृपप्रियफला** स्त्री नृपप्रियं फलं यस्याः। वार्त्ताक्यां [राजनि०।

**नृपबदर** पु० बदराणां नृपः राजदन्ता० पूर्वनि०। राजबदरे राजनि०।

**नृपमन्दिर** न० ६त०। राजगृहे सौधे हेमच०।

**नृपमाङ्गल्यक** न० नृपस्य माङ्गल्यं यस्मात् कप्। आढल्यवृक्षे राजनि०।

**नृपमान** न० नृपस्य तद्भोजनस्य मानमावेदकं वाद्यम्। नृपस्य भोजनकालावेदके वाद्यभेदे त्रिका०।

**नृपलक्ष्मन्** न० ६त०। नृपचिह्ने छत्रे चामरादौ च नृपलिङ्गादयोऽप्यत्र "निजपादोजसा वीरः कलिं दिग्विजये क्वचित्। नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा" भाग०

**नृपवल्लभ** न० चक्रपाणिदत्तोक्ते पक्वे १तैलभेदे २घृतभेदे च। "गर्भां शक्तकाथविपक्वमुत्तमं हितञ्च तैलं तिमिरेषु नस्यतः। घृतं हितं केवलमेव पैत्तिके तथानुतैलं पवनात्मगुल्मयोः। जीवकर्षभकौ मेदाद्राक्षांशुमती निदिग्धिका वृहती। मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना। नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम्। पिप्पल्यः सर्वेषां भागैरक्षांशिकैः पिष्टैः। तैलं वा यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम्। तिमिरं पटलं काचं नक्तान्ध्यं चार्बुदमथार्मञ्च। श्वेतञ्च लिङ्गनाशं नाशयति नीलिकासंज्ञम्। मुखनासादौर्गन्ध्यं खलितञ्चाकालजं हनुस्तम्भम्। कासं श्वासं शोषं हिक्कां स्तम्भं तथा व्यथां नेत्रे। मुखजैह्म्यमर्दभेदं रोगं वाङ्ग्रहं शिरस्तम्भम्। रोगानथोर्द्ध्वजत्रोः सर्वान्निचिरेण नाशयति। नस्यार्थं कुडवं तैलं पक्तव्यं नृपवल्लभे। अक्षांशैः शाणिकैः कल्कैरन्ये त्वङ्गादितैलवत्"।

**नृपशासन** न० ६त०। राजशासने तत्प्रकारः औशनसनीतिपरिशिष्टे १अ० उक्तो यथा "शासनं कीदृशं कार्यं राज्ञा नित्यं प्रजासु च। दासे भृत्येषु भार्य्यायां पुत्रे शिष्येऽपि वा क्वचित्। वाग्दण्डं परुषं नैव कार्यं तद्देशसंस्थिते। तुलाशासनमानानां नाशकस्यापि वा क्वचित्। निर्य्यासानां च धातूनां सज्जीनां घृतस्य च। मधुदुग्धवसातैलपिष्टादीनाञ्च सर्वदा। कूटं नैव तु कार्यं स्यात् बलाच्च निर्भितं जनैः। उत्कोचग्रहणं नैव स्वामिकार्यविलोपनम्। दुर्वृत्तकारिणं चोरं जारं सद्द्वेषिणं द्विषम्। नरक्षन्नप्रकाशं हि तथाख्यानपकारकान्। मातॄणां पितॄणां चैव पूज्यानां विदुषामपि। नावमानं नोपहासं न कुर्युः पितृपुत्रयोः। वापीकूपारामसीमाधर्मशालासुरालयान्। मार्गांश्चैव प्रबाधेयुर्दीनान्धविकलाङ्गकान्। द्यूतञ्च मद्यपानञ्च मृगयां शस्त्रधारणम्। गोगजाश्वोष्ट्रमहिषीनॄणां च स्थावरस्य च। रजतस्वर्णरत्नानां मादकस्य विषस्य च। क्रयं वा विक्रयं वापि मद्यसन्धानमेव च। क्रयपत्रं दानपत्रमृणनिर्णयपत्रकम्। राजाज्ञया विना नैव जनैः कार्यं चिकित्सितम्। महापापाभिशंसनं निधिग्रहणमेव च। न वा समाजनियमं निर्णयं जातिदूषणम्। अस्वामिनाष्टिकधनसंग्रहं मन्त्रभेदतः। नृपतेर्गुणलोपञ्च नैव कुर्युः कदाचन। स्वधर्महानिमनृतं परदाराभिमर्शनम्। कूटसाक्ष्यं कूटलेख्यमप्रकाशप्रतिग्रहम्। निर्द्धारितकराधिक्यं स्तेयं साहसमेव च। मनसापि न कुर्वन्तु स्वामिद्रोहं तथैव च। भृत्या शुल्केन भागेन वृद्ध्या दर्पात् बलात् छलात्। आधर्षणं न कुर्वन्तु यस्य कस्यापि सर्वदा। परिमाणोन्मानमानं धार्यं नृपविमुद्रितम्। गुणसाधनसंदक्षा भवन्तु निखिला जनाः। साहसाधिकृतो न स्युर्विना चैवाततायिनम्। उत्सृष्टा वृषभाद्या यैस्तैस्ते धार्याः सुयन्त्रिताः। इति मच्छासनं श्रुत्वा येऽन्यथा वर्त्तयन्ति तान्। नाशयिष्यामि दण्डेन महता पापकारकान्। इति प्रबोधयेन्नित्यं प्रजाशासनडिण्डिमैः। लिखित्वा शासनं राजा धारयेच्च चतुष्पथे। तथा चोद्यतदण्डः स्याद्दस्युषु च शत्रुषु"।

**नृपशु** पु० ना पशुरिव ना चासौ पशुश्चेति वा। १मूर्खे २पुरुषपशौ च "याश्च स्त्रियो नृपशून् खादन्ति" भाग० ५।२६।२९ श्लो०।

**नृपसभ(भा)** न०स्त्री नृपाणां सभा "राजामनुष्यपूर्व्वेति" पा० राजपर्य्यायग्रहणात् क्लीबत्वम्। बहूनां नृपाणां सभायाम्। एकस्य सभायां तु स्त्री। तत्सभाप्रकारश्च औशनसनीतिपरिशिष्टे १अ० उक्तो यथा "राज्ञा राजसभा कार्य्या सुगुप्ता च मनोरमा। त्रिकोष्ठैः पञ्चकोष्ठैर्वा सप्तकोष्ठैः सुविस्तृता। दक्षिणोदक् तथा दीर्घा प्राक्प्रत्यग् द्विगुणाऽथ वा। त्रिगुणा वा यथाकाममेकभूमिर्द्विभूमिका। त्रिभूमिका वा कर्त्तव्या सोपकार्य्याशिरोगृहा। परितः परिकोष्ठेषु वातायनविराजिता। पार्श्वकोष्ठात्तु द्विगुणा मध्यकोष्ठेषु विस्तृता। पञ्चमांशाधिकं त्वौच्च्यं मध्यकोष्ठस्य विस्तरात्। विस्तारेण समं त्वौच्च्यं पञ्चमांशाधिकं तु वा। कोष्ठकानां च भूमिं च यदि वा तत्र कारयेत्। द्विभूमिके पार्श्वकोष्ठे मध्यमं त्वेकभूमिकम्। पृथक्स्तम्भा तु सर्व्वकोष्ठा चतुर्मार्गागमा शुभा। जलोद्धारादियन्त्रैश्च युता सुस्वरयन्त्रकैः। वातप्रेरकयन्त्रैश्च यन्त्रैः कालप्रबोधकैः। प्रतिष्ठिता च सादर्शैस्तथा च प्रतिरूपकैः। एवंविधा राजसभा यन्त्रार्थी कार्यदर्शने। तथाविधामात्यलेखकसभ्याधिकृतशालिकाः। कर्त्तव्याः प्रागुदक्चितास्तदर्थाश्च पृथक् पृथक्। शतहस्तमिता भूमिं

त्यक्ता राजगृहात् सदा । उदक् द्विपतृष्णा प्राक् सेना सन्निवेशनार्थिका । आराद्राजगृहस्यैव प्रजानां निलयानि च । सर्वानिम्नेष्टिकानानुक्रमतस्य सदा ततः । समन्ताच्च चतुर्दिक्षु विन्यसेच्च ततःपरम् । प्रकृत्यनुप्रकृतयो ह्यधिकारिगणास्ततः । सेनाधिपपदातीनां गणः स्वादि गणास्ततः । साश्वाश्च सगजस्यापि गजपालगणास्ततः । छद्मचालिकयन्त्राणि ततः खलरगोगणः । ततः खगोलमिकगणो ह्यारण्यकगणास्ततः । क्रमादेषां गृहाणि स्युः शोभनानि परे सदा । पान्थशाला ततः कार्य्या सुगुप्ता सजलाशया । सजातीयगृहाणां च समुदायेन पङ्क्तितः । निवेशने पुरे ग्रामे प्रागुदक् सुखमेधते । सजातिपण्यनिवहैरापणे पण्यवेशनम् । धनिकादिक्रमेणैव राजमार्गस्य पार्श्वतः । एवं हि पत्तनं कुर्यात् ग्रामं चैव नराधिपः" । तदधिवेशनप्रकारः तत्रैव "सभायां मत्यगर्भस्य मध्ये राजासनं भवेत् । दक्षसंस्था वामसंस्थाः विशेयुः पार्श्वपृष्ठगाः । पुत्राः पौत्राः भ्रातरश्च भागिनेयाश्च पृष्ठतः । दौहित्रा दक्षभागास्तु वामसंस्थाः क्रमादिमे । पितृव्याः स्वकुलश्रेष्ठाः सभ्याः सेनाधिपास्तथा । स्वाग्रे दक्षिणभागे तु प्राक्संस्थाः पृथगासनाः । मातामहकुलश्रेष्ठा मन्त्रिणो बान्धवास्तथा । श्वशुराश्चैव श्यालाश्च वामाग्रे चाधिकारिणः । वामदक्षिणपार्श्वस्थो जामाता भगिनीपतिः । स्वसदृशसमीपे या स्वार्द्धासनगतः सुहृत् । दौहित्रभागिनेयानां स्थाने स्युर्दत्तकादयः । भागिनेयाश्च दौहित्राः पुत्रादिस्थानसंस्थिताः । यथा पिता तथाचार्य्यो समः श्रेष्ठासने स्थितः । पार्श्वयोरग्रतः सर्वे सेवका मन्त्रिणस्तथा । परिवारगणाः सर्वैः सर्वेभ्यः पृष्ठसंस्थिताः । स्वर्णदण्डधरौ स्यातां प्रवेशननिवेदकौ । विशिष्टचिह्नपृक् राजा स्वासने प्रवसेत् स्वके । सुभूषणः सुवसनः कवची समुकुटान्वितः । स्निग्धास्त्रसन्नशस्त्रस्तु सावधानः मनाः सदा" ।

**नृपसुता** स्त्री ६त० । १राजकन्यायां २छुछुन्दर्य्यां स्त्री हे० सं०८८श्लो० "छुछुन्दरी नृपसुता वालेयोगर्दभः प्रोक्तः" ।

**नपांश** ६त० । १नृपाय देये करे षष्ठांशादौ २राजपुत्रे पु० ।

**नृपाकृष्ट** ३त० । चतुरङ्गशब्दे २८६४ पृ० दर्शिते क्रीडार्थराजाकृष्टे राजनि । "नृपाकृष्टो यदा राजा गमिष्यति युधिष्ठिर ! । तदा राजा हि राजानं घातेऽपि तं हनिष्यति" ।

**नृपात्मज** पु० ६त० । १राजपुत्रे २राजकन्यायां स्त्री "स्वयंवरं भीमनृपात्मजायाः" नैष० । नृपस्यात्मजेव । ३कटुतुम्ब्यां स्त्री रत्नमाला ।

**नृपाध्वर** पु० नृपमात्रकर्त्तव्योऽध्वरः शाक०त० । राजमात्रकर्त्तव्ये राजसूययज्ञे "राजा राजसूयेन यजेत" श्रुत्या राजमात्रस्यैव तत्राधिकारस्य विधानात्तस्य तथात्वम् ।

**नृपान्न** न०नृपप्रियमन्नम् । १राजान्ननामके धान्यभेदे राजनि० ६त० । २राज्ञोऽन्ने च ।

**नृपाभीर** न० नृपं तद्भोजनकालमभीरयति अभि+ईर–अच् उप०स० । राज्ञो भोजनकालावेदके नृपमानाख्ये वाद्यभेदे त्रिका० ।

**नृपामय** पु० आमयानां नृपः राजदन्ता० पूर्वनि० । १राजयक्ष्मरोगे राजनि० ६त० । २राज्ञोरोगे च ।

**नृपाल** पु० नॄन् पालयति पालि–अण् उप०स० । १नृपतौ राजनि । "अस्मै नृपालाः किलतत्र तत्र बलिं हरिष्यन्ति सलोकपालाः" भाग०४।१६।२०नरपालादयोऽप्यत्र

**नृपावर्त्त** न० नृप इवावर्त्तते आ–वृत–अच् । राजावर्त्ते मणिभेदे राजनि० । [आसनभेदे अमरः ।

**नृपासन** न० । राज्ञो भद्रासने सिंहासने मण्यादिरचिते

**नृपाह्वय** पु० नृपमाह्वयति गन्धेन आ+ह्वे–श । राजपलाण्डौ राजनि० ।

**नृपीट** न० उदके निघण्टुः नृपीटमित्यत्र पाठान्तरम् ।

**नृपीति** स्त्री पा–रक्षणे भावे क्तिन् आत ईत्त्वम् ६त० । १मनुष्यरक्षणे । "अनाष्टष्टो नृपीतये" ऋ० ७।१५।१४। कर्त्तरि क्तिच् । २मनुष्यरक्षके त्रि० "वह्वये आप्तो नृपीतौ" ७।२०।८ "नृपीतौ नृणां रक्षके" भा०।

**नृपोचित** पु० नृपेषु उचितः । १राजमाषे २राजयोग्ये त्रि० राजनि० ।

**नृभोजा** त्रि० नभसि जायते जन–विट् डा । आकाशजाते "नभोजाः पृष्ठं हर्य्यतस्य दर्शि" ऋ० १०।१२३।२ नभोजस् शब्दकल्पनं प्रामादिकम् ।

**नृमणस्** त्रि० नृषु यजमानेषु मनो यस्य "छन्दस्युदवग्रहात्" पा० णत्वम् । रक्षितव्ययजमानेषु अनुग्राहक बुद्धियुक्ते इन्द्रादौ देवे "त्वं पिप्रोर्नृमणः प्रारुजः पुरः" ऋ०१।५१।५ नृणां मनोयत्र णत्वम् । २धने नृम्ण शब्दे दृश्यम् । ३प्लक्षद्वीपस्थे महानदीभेदे स्त्री आवन्तः"अरुणा नृमणाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः" भाग० ५।२०।६

**नृमिथुन** न० ६त०। मनुष्यस्य स्त्रीपुरुषयुग्मे। "मनुष्यौ घटी नृमिथुनं सगदं सवीणम्" इत्युक्ते० मिथुनराशिस्वरूपोक्तौ। नृयुग्मादयोऽप्यत्र। "उच्चं नृयुग्मं घटभं त्रिकोणम्" ज्योति०त०।

**नमेध** पु० ना मिध्यतेऽत्र मिध–आधारे घञ्। पुरुषमेधे १यज्ञभेदे। तद्विधिः यजु० ३०अ० दृश्यः। २ऋषिभेदे "नृमेधं प्रजयासृजतृषभम्" ऋ० १०।८०।१२ "नृमेधमेतन्नामानमृषिम्" भा०।

**नृम्ण** न० नृभिर्म्नायतेऽभ्यस्यते उपार्जयितुम् म्ना–घञर्थे–क "छन्दस्युदवग्रहात्" पा० णत्वम्। धने निघण्टुः। "अश्यामं नृम्णमाभराश्यां नृम्णयस्ते" ऋ० ५।३८।४। नृम्णं धनम्। नृम्णयसे धनमिच्छसि" भा० नृम्णयसु+क्यच्।

**नृयज्ञ** पु० नुर्नरायौ यज्ञः। प्रत्यहं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते अतिथिपूजनरूपे यज्ञे "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्। पञ्चैतान् यो महायज्ञान् न हापयति शक्तितः" "ऋषियज्ञं देवयज्ञं भूतयज्ञञ्च सर्वदा। नृयज्ञं पितृयज्ञञ्च यथाशक्ति न हापयेत्" इति च मनुः।

**नृवत्** त्रि० ना–परिचारकादिरस्त्यस्य मतुप् वेदे मस्य वः लोके तु न वः नृमदित्येव। परिचारकनरयुक्ते "भरद्वाजे नृवत इन्द्र! सूरीन् दिवि" ऋ० ६।१७।१४

**नृवराह** पु०ना चासौ वराहश्च। अंशाभ्यां मनुष्यवराहाकृतौ भगवदवतारभेदे "दैत्यस्ततोऽसौ नृवराहमाहवे निपातयामास यथा ज्वलन्तीम्। शक्तिं यथा विद्युतमाशु कुञ्जे प्रवर्षमाणोऽपि गिरिं समेघः। स हन्यमानो गदयाऽप्रमेयः प्रोवाच दैत्यं नृवराहमूर्त्तिः। प्रजापतेः सेतुमिमं निहत्य प्रजेश्वरः स्वस्ति यथा सुरेन्द्र!" वह्निपु०। "नृवराहस्य वसतिर्महर्लोके प्रतिष्ठिता। नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः"। सएव वलेर्द्वारी यथा "शौकरं रूपमास्थाय द्वार्यस्य च दुरात्मनः। भविष्यामि न सन्देहो व्रज शक्र! त्वरान्वितः" पाद्मे सृष्टिखण्डे २८अ०।

**नृवाहन** पु० ना वाहनमस्य। १नरवाहने कुवेरे नुर्नेतृणां वाहनम् "छन्दस्युदवग्रहात्" पा० वेदे णत्वम्। २नेतृवाहने "अर्वाञ्चमद्य यय्यं नृवाहणम्" ऋ० २।३७।५

**नृवाहस्** पु० नॄन् वहति वह–वेदे असुन् णिच्च। मनुष्यवाहके "योषा इष्णू नृवाहसा" ऋ०१।६।२

**नृशंस** त्रि० नॄन् शंसति शन्सु–हिंसायाम् अण्। १घातुके क्रूरे अमरः २परद्रोहिणि च "भगो नृशंस! उर्वन्तरिक्षम्" ऋ० ०।५।१५ "इतरेषु (विवाहेषु) तु शिष्टेषु नृशंसानृतवादिनम्" मनुः।

**नृशृङ्ग** न० नुः शृङ्गम्। अलीकपदार्थे नरस्य शृङ्गाभावात् अयोग्यत्वेऽपि अलीकत्वविवक्षायामस्य साधुत्वम् "नासदुत्पादो नृशृङ्गवत्" सां०सू० "नरशृङ्गतुल्यस्यासत उत्पादो न सम्भवतीति" प्र०भा०।

**नृषद्** पु० नरि पुरुषे अन्तर्यामितया सीदति षद–क्विप् वेदे षत्वम्। १परमात्मनि २कण्वर्षेः पितरि ऋषिभेदे "उत कण्वं नृषदः पुत्रमाहुः" ऋ०१०।३१।११ ३मनुष्यस्थायिनि च "ध्रुवसदं त्वा नृषदं मनःसदम्" यजु०९।२।

**नृषद्मन्** न० नरः नेतारः ऋत्विजः तेषाम् सदनम् वेदे षत्वम्। यज्ञगृहे "समतौ रथा नरो नृषदने" ऋ० ५।७।२ "नृषदने यागगृहे" भा०।

**नृसिंह** पु० ना चासौ सिंहश्च। अंशाभ्यां मनुष्यसिंहाकृतियुक्ते १भगवतोऽवतारभेदे "सिंहस्य कृत्वा वदनं सुरारिः सदा करालञ्च सुरक्तनेत्रम्। अर्द्धं वपुर्वै मनुजस्य कृत्वा ययौ सभां दैत्यपतेः पुरस्तात्" वह्निपु०। २रतिबन्धभेदे तस्य लक्षणं यथा "पादौ संपीड्य योनौ च हठाल्लिङ्गप्रवेशनम्। हस्तयोर्वेष्टयेद्गुल्फं बन्धो नृसिंहसंज्ञकः" रतिम०। ना सिंह इव उपमितसमासः। ३पुरुषश्रेष्ठे च

**नृसिंहचतुर्दशी** स्त्री नृसिंहस्याविर्भावदिनं चतुर्दशी शा० त०। वैशाखशुक्लचतुर्दश्याम्। आगमे "वैशाखे शुक्लपक्षे च चतुर्दश्यां महातिथौ। सायं भक्तादधिकारमसहिष्णुः परो हरिः। सद्यः कटकटाशब्दविद्रावितसभाजनः। लीलया स्तम्भगर्भान्तादुद्भूतः शब्दभीषणः। नृहरेरवतारार्त्तां यत्नतः समुपोषयेत्। महापुण्यतमायाञ्च सायं विष्णुं प्रपूजयेत्"। बृहन्नारसिंहे "वैशाखशुक्लपक्षस्य चतुर्दश्यां समाचरेत्। मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम्" किञ्च "स्वातीनक्षत्रयोगे तु शनिवारे हि मद्व्रतम्। सिद्धियोगस्य योगे च लभ्यते दैवयोगतः। सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम्। केवलञ्च प्रकर्त्तव्यं मद्दिने फलकाङ्क्षिभिः। वैष्णवैर्न तु कर्त्तव्या शरविद्धा चतुर्दशी"। तत्र व्रतनित्यत्वादि इहन्नरसिंहपुराणे "वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारणम्। महागुह्यमिदं श्रेष्ठं मानवैर्भवभीरुभिः" किञ्च "विज्ञाय मद्दिनं यस्तु लङ्घयेत् स तु पापभाक्। एवं ज्ञात्वा प्रक-

तत्त्वं महिने व्रतमुत्तमम् । अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ" तत्राधिकारिनिर्णयः तत्रैव "सर्वेषामेव लोकानामधिकारोऽस्ति मद्व्रते । मद्भक्तैस्तु विशेषेण प्रणेयं मत्परायणैः" ।

**नृसिंहपुराण** न० उपपुराणभेदे उपपुराणशब्दे दृश्यम् ।

**नृसिंहवन** न० ह०सं० १४अ० कूर्मविभागे उक्ते पश्चिमोत्तरदिक्स्थिते देशभेदे कूर्मविभागशब्दे दृश्यम् ।

**नृसेन(ना)** न०स्त्री नृणां सेना "विभाषा सेनेत्यादि" पा० वा क्लीवता । बहुमनुष्ययुक्तसेनायाम् ।

**नृसोम** पु० ना सोम इव । १मनुजश्रेष्ठे "स्त्रीमोऽभ्रवायाः सरितो नृसोमः" रघुः ।

**नृहरि** पु० ना चासौ हरिश्च । नरसिंहे भगवदवतारभेदे "नृहरिवामनजामदग्न्यः" मुग्धबो० ।

**नॄ** नीतौ क्र्यादि० प्वादि० पर० सक० सेट् । नृणाति अनारीत् अयोपदेशत्वाच्च णत्वम् कविकल्पद्रुमः पाणिनिमते नॄ नये इति कुशाख्य पाठः । तन्मते अोपदेश पर्युदासता । [णिच् नरयति । न णत्वम् ।

**नॄ** नये भ्वा० पर० सक० सेट् । नरति अनारीत् । घटा०

**नेउ(ड)ली** स्त्री हठयोगभेदे तत्प्रकारस्तु रुद्रयामले "धौतीयोगानन्तरं हि ने(उ)डुलीकर्म समाचरेत् । ने(उ)डुलीयोगमात्रेण चालने ने(उ)डुलीपमः । नेउ(डु)लीसाधनादेव चिरजीवी निरामयः । तत्कारणं प्रवक्ष्यामि सावधानावधारय । मुक्त्वा सदासनपकाश्च वारैकं प्रतिचालयेत् । प्रतिचालयेत् स्वोदरश्च कठिनाशयविवर्जितः । पुनःपुनश्चालनञ्च कुर्यात् सोदरमध्यकम् । कुलालचक्रवत् कुर्यात् भ्रमणञ्चोदरस्य च । सर्वाङ्गचालनादेव कुण्डलीशक्तिचालनम् । चालनात् कुण्डलीदेव्याश्चेतना सा भवेत् प्रभो ! । एतस्मानन्तरं देव ! चालनं परिकीर्त्तितम् । नाडीनां चालनादेव सर्वविद्यानिधिर्भवेत् । वायुसिद्धिर्भवेत्तस्य पञ्चभूतसुसिद्धिभाक् । सुखासनं हि सर्वत्र सर्वदा कारयेद्बुधः । बद्धपद्मासनं कृत्वा अधोहस्ते जपं चरेत् । तदा त्रिदिनमाकर्त्तुं समर्थो सुखिडकासनम् । तदा हि सर्वनाडीश्च वशीभूता न संशयः । नाडीचालनयोगेन सिद्धिमाप्नोति साधकः । नेडु(उ)लीं यो न जानाति स कथं कर्त्तुमुद्यतः । स धीरो मानसचरोमतिमान् स जितेन्द्रियः । यो नेउ(डु)लीयोगसारं कर्त्तुमुद्यमपारगः । स चावश्यं चालनञ्च कुर्यान्नाडयादिसाधनम् । नेउ(डु)लीयोगमार्गेण नाडीचालनतत्परः । भवत्येव महाकाल ! राजराजेश्वरो यथा । केवलं प्राणवायोश्च धारणात् चालनं भवेत् । विना चालनयोगेन देहशुद्धिर्न जायते । चालनं नाडिकादीनां कफपित्तादिनाशनम् । करोति यत्नतो योगी सुखासनानिलाशनात् । वायुग्रहणमेवं हि नेडु(उ)लीयमकालके । न कुर्यात् केवलं नाथ ! अन्यकाले सदाचरेत् । यावन्ने उ(डु)लीं न जानाति तावद्वायुं न संपिबेत् । बहुतरं न संपाद्य वायोरोगमलादिकम् । केवलं श्वासगमनं यावन्नेउ(डु)ली न सिध्यति । पञ्चारामसाधनाच्च पञ्चवायुवशो भवेत्" ।

**नेजक** पु० निज—शुद्धौ ण्वुल् । १रजके "शाल्मलीफलके श्लक्ष्णे नेनिज्यात् नेजकः शनैः । न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्" मनुना तत्कृत्यमुक्तम् । २शोधकमात्रे त्रि० ।

**नेजन** न० निज्यतेऽत्र निज—आधारे ल्युट् । १नेजकालये "राशयः प्रत्यहश्रान्त वाससां नेजनेष्विव" भा०द्रो० १८८अ० । भावे ल्युट् । २शोधने

**नेत्(द)** अव्य० नी—क्विप् वा० तुक् नेद—क्विप् वा चादि० १शङ्कायां २प्रतिषेधे ३समुच्चये च मनोरमा । न इव । ४नैवेत्यर्थे । "अन्यो नेत् सूरिरोहते" ऋ० ८।५।८। "देवत्वदपत्नीतयातै" यजु० २।१७

**नेतीयोग** पु० हठयोगभेदे स च रुद्रयामले उत्तरखण्डे उक्तो यथा "नेतीयोगविधानानि शृणुष्व वीरपूजित ! । येन सर्वमस्तकस्थकफानां दाहनं भवेत् । सूक्ष्मसूत्रं दृढतरं प्रदद्याच्चाधिकाबिले । सुखरन्ध्रे समानीय सन्धानेन समात्रयेत् । पुनःपुनः सदा योगी यातायातेन घर्षयेत् । क्रमेण वर्द्धनं कुर्यात् सूत्रस्य परमेश्वर ! । नेतीयोगेन नासाया रन्ध्रं निर्म्मलकं भवेत् । वायोर्गमनकाले तु महायुस्तानिति प्रभो !" ।

**नेतृ** त्रि० नी—तृच् । १प्रभौ अमरः २निर्वाहके ३नायके ४प्रवर्त्तके ५प्रापके च स्त्रियां ङीप् । ६निम्बवृक्षे पु० राजनि० "इतो नेता हि तव त्वं शापानुमोक्ष्यसि मत्कृतात्" भा०व०६६अ० "स नेता शासिता च नः" मनुः । ७विष्णौ पु० "न्यायो नेता समीरणः" विष्णुस० "जगद्यन्त्रनिर्वाहकोनेता" भाष्य० अधिकरणवाचकात् परस्तेतव्यात् नक्ष० अण्सना० । मृगनेता मृगाः मृगनेता रात्रिः । यस्यां रात्रौ आरम्भावधिशेषपर्यन्तं मृगशीर्षनक्षत्रं दृश्यं नक्षत्राणामेकस्य नेतृत्वात् तथात्वम् ।

**नेत्र** न० नयति नीयते वाऽनेन ष्ट्रन् । १मन्थनदामनि २वस्त्रभेदे ३वृक्षमूले ४रथे ५जटायाम् ६नाड्याम् मेदि० । ७चक्षुषि अमरः । ८प्रापयितरि ९नयनसाधने १०प्रवर्त्तके च त्रि० । ११वस्तिशलाकायां राजनि० । १२चक्षुर्गोलकावस्थिते वह्निदैवतके तैजसे इन्द्रियभेदे न० "विजित्य नेत्रप्रतिघातिनीं प्रभाम्" कुमा० तत्र अग्निमन्थनदाम्नि "व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः" कर्मप्रदीपे कात्या० "मन्थानं मन्दरं कृत्वा तथा नेत्रञ्च वासुकिम्" भा०आ० १८अ० । चक्षुषि "नेत्रे दूरमनञ्जने प्रकाशिता तन्वी तवेयं तनुः" सा०द० । १३हैहयनृपपुत्रभेदे पु० "धर्मस्तु हैहयसुतो नेत्रः कुन्तिपिता ततः" भाग०९।२३।६६ । १४द्वित्वसंख्यायां न० "मुनिषड्यमनेत्राणि (२२६७) सू० सि० ज्यार्द्धपिण्डोक्तौ । वस्तिशलाकामानादि सुश्रुते उक्तं यथा "अथातो नेत्रवस्तिप्रमाणप्रविभागचिकित्सितं व्याख्यास्यामः" इत्युपक्रमे समयस्युक्त्वा नेत्रप्रमाणादि उक्तं यथा "षड्विंशतेर्वर्षं द्वादशाङ्गुलं मूलेऽङ्गुष्ठोदरपरीणाहमग्रे कनिष्ठिकोदरपरीणाहमग्रे त्र्यङ्गुलसन्निविष्टकर्णिकं गृध्रपत्रनाडीतुल्यप्रवेशं कोलास्थिमात्रं छिद्रं क्लिन्नकलायमात्रं छिद्रमित्येके । सर्वाणि मूले वस्तिनिबन्धनार्थं द्विकर्णिकानि । आस्थापनद्रव्यप्रमाणं तु विहिता द्वादशप्रसृतयः । सप्ततेरूर्द्ध्वं नेत्रप्रमाणमेतदेव द्रव्यप्रमाणन्तु द्विरष्टवर्षवत् । तत्र नेत्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयाणि श्लक्ष्णानि दृढानि गोपुच्छाकृतीन्यृजूनि गुटिकामुखानि । वस्तयश्चाष्टकानां मृदवो नातिबहुला दृढाः प्रमाणवन्तो गोमहिषवराहाजोरभ्राणाम्" । "नेत्रालाभे हिता नाडी नलवंशास्थिसम्भवा । वस्त्यलाभे हितं चर्म सूक्ष्मं वा तान्तवं घनम्" । वस्तिशलाकारूपं च उत्तरवस्तिशब्दे १०९८० पृ० सुश्रुतोक्तं दृश्यम् । "चतुर्दशाङ्गुलं नेत्रमातुराङ्गुलमानतः" इत्यादिनोक्तं दृश्यम् । "कृत्वा स्वल्पेन नेत्रेण चक्रतैलेन तर्पयेत्" सुश्रुतः ।

**नेत्रकोष** पु० ६त० । नेत्रपटले

**नेत्रच्छद** पु० नेत्रे छाद्येते अनेन छद+णिच्–क ह्रस्वः । नेत्रपिधायके चर्ममये नेत्रपुटे (चकेरपाता) अमरः ।

**नेत्रपर्य्यन्त** पु० नेत्रयोः पर्यन्तः कोणसीमा । १अपाङ्गे राजनि० । २नेत्रावधिके त्रि० ।

**नेत्रपाक** पु० नेत्ररोगभेदे तल्लक्षणं सुश्रुते उक्तं यथा "कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः । दाहसंहर्षताम्रत्वशोफनिस्तोदगौरवैः । जुष्टो मुहुः स्रवेदास्रमुष्णशीताम्बु पिच्छिलम् । संरम्भी पच्यते यश्च नेत्रपाकः स शोफजः । शोफहीनानि लिङ्गानि नेत्रपाके त्वशोफजे । अन्तःशिरायां श्वसनः स्थितो दृष्टिं प्रतिक्षिपन् । हताधिमन्थं जनयेत्तमसाध्यं विदुर्बुधाः" ।

**नेत्रपिण्ड** पुंस्त्री नेत्रं पिण्ड इव यस्य । विडाले हारा० स्त्रियां जातित्वात् ङीष् । ६त० । नेत्रगोलके न० ।

**नेत्रपुष्कर** न० नेत्रस्य पुष्करं जलं यस्याः ५ब० । रुद्रजटायां राजनि० । तत्सेवने हि नेत्रात् जलं स्रवतीति तस्यास्तथात्वम् ।

**नेत्रप्रबन्ध** पु० नेत्रे प्रबध्यते अनेन प्र+बन्ध–करणे ल्युट् । नेत्रपुटे "कर्णश्रोत्रः सुकुमारकं च नेत्रप्रबन्धमयम्", सु०सं० ५८अ० ।

**नेत्रबन्ध** पु० ६त० । पृष्ठतोऽवचितेनागत्य करतलाभ्यां नेत्रयोः पिधानरूपे बालानां क्रीडाभेदे "अदृश्यनेत्रबन्धाद्यैः कश्चिन्मृगखगेहया" भा० १०।१८।८ रामकृष्णयोर्बालक्रीडावर्णने ।

**नेत्रमल** न० ६त० । चक्षुर्मले दूषिकायाम् (पिँचुटि) अमरः ।

**नेत्रमीला(ना)** स्त्री नेत्रयोः मीला मुद्रणं यस्याः ५ब० पृषो० वा लस्य नः, लान्तपाठः साधुः । यवतिक्तायां राजनि० । तत्सेवने हि नेत्रयोर्मीलनं जायते इति तस्यास्तथात्वम् ।

**नेत्रमुष्** त्रि० नेत्रं तत्प्रचारं मुष्णाति मुष–क्विप् । दृष्टेरुपघातके दृष्टिप्रचारनाशके "वहन्ति ये नेत्रमुषं दिव्यं मायामयं रथम्" भा०व० ४२अ० ।

**नेत्रयोनि** पु० नेत्राणि योनय इवास्य । १इन्द्रे शब्दमाला । नेत्रमत्रिनेत्रं योनिरुत्पत्तिस्थानं यस्य । २चन्द्रे च

**नेत्ररञ्जन** न० नेत्रे रञ्ज्यते अनेन रन्ज–करणे ल्युट् । कज्जले "एष वा कथितो धूपः शृणुतं नेत्ररञ्जनम्" कालिकापु० ६१अ० ।

**नेत्ररुज्** स्त्री ६त० । नेत्ररोगे

**नेत्ररोग** पु० ६त० । नयनस्य रोगभेदे तन्निदानादि माधवकरेणोक्तं यथा "उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात् स्वप्नविपर्ययाच्च । स्वेदाद्रजोधूमनिषेवणाच्च छर्द्देर्विघाताद्वमनातियोगात् । द्रवात्तथान्नान्निशि सेविताच्च विण्मूत्रवातक्रमनिग्रहाच्च । प्रसक्तसंरोदनशोककोपाच्छिरोऽभिघातादतिमद्यपानात् । तथा ऋतूनाञ्च विपर्ययेण

क्षेपाभिघातादतिमैथुनाच्च । वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च नेत्रे विकारान् जनयन्ति दोषाः । वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्वनेत्रामयाकरः" । तस्य सम्प्राप्तिर्यथा "निस्तोदनस्तम्भनरोमहर्षसंघर्षपारुष्यशिरोऽभितापाः । विशुष्कभावः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति । दाहप्रपाकौ शिशिराभिवाञ्छा धूमायनं वाष्पसमुच्छ्रयश्च । उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति । उष्णाभिवाञ्छा गुरुताक्षिशोथः कण्डूपदेहावतिशीतता च । स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति । ताम्राश्रुता लोहितनेत्रता च वाह्यः समन्तादतिलोहितश्च । पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति" ।

नेत्ररोगहेतुदोष उक्तो वैद्यके

"नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथाऽरुणम् । कोटरान्तप्रविष्टञ्च तथास्तम्भविलोकनम् । हरिद्राखण्डवर्णञ्च रक्तं वा हरितं तथा । दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः । चक्षुर्बलासबाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम् । तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम् । नेत्रं द्विदोषबाहुल्यात् स्याद् दोषद्वयलक्षणम् । त्रिदोषलिङ्गं सर्व्वेयं तन्मारयति रोगिणम् । त्रिदोषदूषितं नेत्रमन्तर्मग्नं भयं भवेत् । त्रिलिङ्गं सलिलस्रावि प्रायेणोन्मीलयत्यपि" । नेत्ररोगभेदाश्च सुश्रुते उत्तरतन्त्रे षड्भिरध्यायैः सलक्षणहेतुकास्तत्रैव दृश्याः । "त्रपुहारी च पुरुषो जायते नेत्ररोगवान्" । "मधुहारी च पुरुषो जायते नेत्ररोगवान्" शाता० त्रपुमधुहरणेन तद्रोगवान् जायते" इत्युक्तम् ।

**नेत्ररोगहन्** पु० नेत्ररोगं हन्ति हन–क्विप् । वृश्चिकालीवृक्षे राजनि०तस्य हि नेत्ररोगनाशकत्वं वैद्यके प्रसिद्धम्

**नेत्ररोमन्** न० ६त० । नेत्रपक्ष्मणि हेम० ।

**नेत्रवस्त्र** न० नेत्रयोर्वस्त्रमिवाच्छादकम् । (चक्षेरपाता) नेत्रच्छदे ।

**नेत्रविष्** स्त्री ६त० । नेत्रमले (पिंचुटि) "नेत्रविट् चक्षुषः स्नेहो धातूनां क्रमशो मलाः" सुश्रुतः ।

**नेत्रविष** पुंस्त्री नेत्रे विषं यस्य । दिव्ये सर्पभेदे "दृष्टिनिश्वासविषा दिव्याः सर्पाः" सुश्रुतः । "आशीविषान् नेत्रविषान् कोपयेन्न च पण्डितः" भा०स० ६२अ० ।

**नेत्रस्तम्भ** पु० ६त० । नेत्रयोः स्तम्भे नयनोन्मीलनादिव्यापाररहित्ये "नेत्रस्तम्भं निमेषञ्च तृष्णां कासं प्रजागरम् । लभते दन्तचालञ्च तांस्तानन्यानुपद्रवान्" सुश्रुतः ।

**नेत्रान्त** पु० ६त० । अपाङ्गदेशे "नेत्रान्तपादकरतालुधरोष्ठजिह्वाः रक्ता नखाश्च खलु सप्त सुखावहानि" वृ०सं०६८अ०

**नेत्राभि(स्य)ष्यन्द** पु० ६त० । नेत्रस्य रोगभेदे अभिष्यन्दशब्दे ३०४ पृ० दृश्यम् । "नेत्राभिष्यन्दपक्ष्मद्वयोमज्ज दोषजाः" सुश्रुतः । स च संक्रामिरोगः यथाह सुश्रुते "प्रसङ्गाद्गात्रसंस्पर्शात् निःश्वासात् सह भोजनात् । सह शय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् । कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च । औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम्" ।

**नेत्रामय** पु० ६त० । नयनरोगे "वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्वनेत्रामयाकरः" माधवनि० ।

**नेत्राम्बु** न० ६त० । चक्षुर्जले अश्रुणि अमरः ।

**नेत्रारि** पु० ६त० । सेहुण्डवृक्षे राजनि० ।

**नेत्री** स्त्री नी–तृन् ङीप् । १लक्ष्म्यां २नाड्यां च शब्दर० ३नद्यां मेदि० । नी–तृन् स्त्रियां ङीप् । ४प्रापयित्र्यां स्त्रियां स्त्री ।

**नेत्रोपमफल** पु० नेत्रे उपमा यस्य तादृशं फलमस्य । (बादाम) वृक्षभेदे भावप्र० । [मात्रे च

**नेत्रौषध** न० ६त० । १पुष्पकासीसे राजनि० २नेत्रयोरौषध-

**नेत्रौष(धि)धी** स्त्री ६त० वा ङीप् । अजशृङ्ग्याम् (गाड़रशिङ्गा) रत्नमाला ।

**नेद** मतौ भ्वा० प० सक० सेट् । गतिकर्मसु निघण्टुः । नेदति अनेदीत् । निनेद "या क्षुता उज्ज्वलन्ति या क्षुता अतिनेदन्ते" ऋ०उप० ।

**नेदिष्ठ** त्रि० अतिशयेनान्तिकः ईयसुन् नेदादेशः । १अतिशयनिकटस्थे "नेदिष्ठे अस्मिन्नहन्यधि वोचा नु सुन्वते" ऋ० १।१२२।१। २निपुणे त्रि० राजनि० । ३अङ्कोटवृक्षे पु० जटाध० ।

**नेदिष्ठिन्** पु० नेदिष्ठं जन्मतः सन्निकृष्टस्थानं विद्यतेऽस्य इनि । सोदरभ्रातरि "म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वाऽस्थीन्युपनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन्" कात्या०श्रौ० २५।१४।२८। "मृतं यजमानं निर्मन्थ्येन शामित्रेण वा दग्ध्वाऽस्थीन्युपनह्य तस्य यो नेदिष्ठी सोदरभ्राता स्यात् तं दीक्षयित्वा तेन सह यजेरन्" कर्कः ।

**नेदीयस्** त्रि॰ अतिशयेनान्तिकः ईयसुन् नेदादेशः। अत्यन्तसमीपस्थे स्त्रियां ङीप्।

**नेप** पु॰ नी—प। १पुरोहिते उज्ज्वल॰। २उदके निघण्टुः

**नेपथ्य** न॰ नी—विच् नेः नेता तस्य पथ्यम्। १भूषणे अमरः २वेशे ३वेशस्थाने नाटकादेरभिनयार्थसज्जाभूमौ च मेदि॰ "न पथ्यं नेपथ्यं बहुतरमनङ्गोत्सवविधौ" सा॰द॰ "उदारनेपथ्यभृतां स मध्ये" रघुः "नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा" सा॰द॰।

**नेपाल** पु॰ देशभेदे "नेपालभर्त्तृमध्यकच्छसुराष्ट्रमद्रान्" वृ॰सं॰ ४अ॰ "नेपालादागतोऽयं नवकम्बलवत्त्वात्" छलोदाहरणे विश्वनाथः "जटेश्वरं समारभ्य योगेशान्तं महेश्वरि!। नेपालदेशो देवेशि! साधकानां सुसिद्धिदः" शक्तिसङ्गमत॰। "नेपाले माहिषं मांसम्" अनाचारोक्तौ

**नेपालजा** स्त्री नेपाले देशे जायते जन—ड ७त॰। नेपालजातायां मनःशिलायाम् "नेपालजामरिचशङ्करसाञ्जनानि" सुश्रुतः। जन—कर्त्तरि क्त ७त॰। नेपालजाताप्यत्र। "मरिचं च शुक्लं नेपालजाता च समप्रमाणा" सुश्रुतः।

**नेपालकम्बल** पु॰ ६त॰। कुथाख्ये चित्रकम्बले शब्दार्थचि॰।

**नेपालनिम्ब** पु॰ ६त॰। ज्वरान्तके तृणनिम्बे नेपालजाते निम्बभेदे राजनि॰।

**नेपालमूलक** न॰ हस्तिकन्दसदृशे मूलभेदे राजनि॰।

**नेपालिका** स्त्री नेपाल उत्पत्तिस्थानत्वेनास्त्यस्याः ठन्। मनःशिलायां राजनि॰।

**नेम** पु॰ नी—मन्। १काले २अवधौ ३खण्डे ४प्राकारे ५कैतवे च मेदि॰। ६अर्द्धे ७गर्त्ते च हेमच॰। ८नाश्यादौ अन्यार्थे च शब्दरत्ना॰। ९सायंकाले १०मूले च ११जर्द्धे च सुभूतिः। अर्द्धार्थेऽस्य सर्वनामता। नेमस्मै नेमस्मिन् इत्यादि। जसि वा, नेमे नेमाः। १२अन्ने १३दिश उत्तरवर्त्तिनि च निघण्टुः। "हितं जनिम नेमसुद्यतम्" ऋ॰ ८।६८।५ "नेममर्द्धम्" भा॰ "आयन् पचाति नेमो नहि पचदर्धः" ऋ॰ १०२७।१८

**नेमधित** त्रि॰ नेमं हितः नेम+धा—क्त "सुधितनेमधितेत्यादिना" पा॰ निपा॰। अर्द्धहिते "स्वर्षाता यद्ध्वयामसि त्वा युध्यन्तो नेमधिता पृतसु श्रूर!" ऋ॰६।३३।४ भावे क्तिन्। नेमधिति। अर्द्धधाने स्त्री। नेमं धीयतेऽत्र धा—क्तिन् निपा॰। संग्रामे निघण्टुः।

**नेमन्** त्रि॰ नी—वा॰मनिन्। प्रापके "तं गूर्त्तयो नेमन्निषः" ऋ॰१।५६।२ "इष गतौ वा॰ क्विप् नेमानः प्रापका इषो येषाम्" भा॰। छान्दसो नलोपाभावः।

**नेमि** पु॰ नी—मि। १तिनिशवृक्षे। २कूपसमीपे रज्जुधारणार्थे त्रिकाष्ठयन्त्रे ३चक्रान्ते च (रथचक्रस्य भूमिस्पर्शनयोग्ये भागे) ४कूपान्तिकस्थे-समानस्थलभागे स्त्री अमरः वा ङीप्। ५जिनभेदे पु॰ हेमच॰। ६वज्रे पु॰ निघण्टुः "नियन्तुर्नेमिवृत्तयः" रघुः "ध्याने मिमग्नैः शितिकण्ठपक्षः" "अपतन् द्रुतभ्रमितनेमिवृत्तयः" माघः

**नेमिचक्र** पु॰ परीक्षितन्वयस्य वंश्ये भाविन्टपभेदे "अधीनकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः। गजाह्वये हृते नद्या कौशाम्ब्यां स निवत्स्यति" भाग॰ ९।२२।२७

**नेमिन्** पु॰ नी—या॰ मिनि। तिनिशवृक्षे भरतः।

**नेयार्थता** स्त्री नेयः रूढिप्रयोजनाभावादशक्त्याकृतो लक्ष्यार्थो यत्र तस्य भावः। काव्यदोषभेदे "ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थता" सा॰द॰ "कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्"। अत्र चरणाघातेन निर्जितत्वं लक्ष्यते" सा॰द॰। तत्र रूढिप्रयोजनयोरभावात् तथात्वम्।

**ने(नै)मिश** न॰ नेमिः शीर्य्यतेऽत्र शृ—वा॰ आधारे ड। नैमिशारण्ये ततः स्वार्थे अण्। नैमिशतत्रार्थे वायुपु॰ यथा "एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते। यत्रास्य शीर्य्यते नेमिः सदेशस्तपसः शुभः। इत्युक्त्वा सूर्यसङ्काशं चक्रं सृष्ट्वा मनोमयम्। प्रणिपत्य महादेवं विससर्ज पितामहः। तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम्। प्रययुस्तस्य चक्रस्य यत्र नेमिर्विशीर्य्यते। तद्वनं तेन विख्यातं नैमिशं भुवि पूजितम्"।

**नेष्ट** त्रि॰ न इष्टम् नञर्थनशब्देन "सह सुपा" पा॰स॰। १अनिष्टे २तत्साधने निषिद्धे च। "अतिककुदाः कृशदेहा नेष्टाः हीनाधिकाङ्गश्च" वृ॰सं॰ ६१अ॰।

**नेष्टु** पु॰ निश—तुन्। लोष्टे शब्दाम्बुधिः। "यथा महार्णवे क्षिप्तः क्षिप्रं नेष्टुर्विनश्यति" भा॰अनु॰ १२अ॰ "नेष्टुः पांशुपिण्डः" नीलकण्ठः।

**नेष्टृ** पु॰ नी—तृन् नि॰ षुक्। ऋत्विग्भेदे उज्ज्वलद॰। "ग्नावो नेष्टः! पिब ऋतुना" ऋ॰ १।१५।२ "समान्तरान् ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानाम्" कात्या॰८।६।२१।

**नेष्ट्र** त्रि॰ नेष्टुरिदम् वा॰ अन्। नेष्टृसम्बन्धिनि "नेष्ट्रादृतुभिरिष्यते" ऋ॰ १।१५।९ [अपत्ये न॰।

**नैःस्व** न॰ निः स्वस्य भावः अण्। निर्द्धनत्वे ष्यञ् नैःस्व्य

**नैक** त्रि॰ न एकः नञर्थनशब्देन "सह सुपा" पा॰स॰।

अनेके १एकभिन्ने २विष्णौ पु० "एकोऽनैकः सवः कः किम्" विष्णुस०"मायया बहुरूपत्वान्नैकः "इन्द्रोमायाभिः पुरुरूप ईयते इति श्रुतेः" भा० ।

**नैकचर** त्रि० नैकः संघीभूय चरति चर—ट । संघीभूयचारिणि शूकरादौ "अपि न वृकः शालावृकोऽन्यतमोनैकचरोह वा भक्षयति" भाग० ५।८।२०

**नैकज** पु० नैकधा—जायते जन—ड पृषो० धालोपः । धर्मगुप्तये अनेकधा जायमाने परमेश्वरे "सुखदो नैकजोऽग्रजः" विष्णुस०। "धर्मसंरक्षणार्थाय संभवामि युगे युगे" भगवदुक्तेः भा० ।

**नैकटिक** त्रि० प्रयोजनाय निकटे वसति ठक् । भिक्षादिलाभहेतोः ग्रामादिनिकटवासिनि भिक्षुकादौ । भिक्षुणा हि ग्रामात् निकटे स्थातव्यमिति शास्त्रात् तथात्वम् "अाट नैकटिकाश्रमान्" भट्टिः ।

**नैकती** स्त्री नैकं तायते ताय—ड गौरा० ङीष् । गौर्य्यां तत्र भवः पलद्या० अण् नैकत तत्रार्थे त्रि० ।

**नैकधा** अव्य० नैक+प्रकारे धाच् । अनेकप्रकारे "शीर्षयोः पतिता वृक्षाविभिदुर्नैकधा तयोः" भा०व० ११अ० ।

**नैकभेद** त्रि० नैकोभेदोऽस्य । उच्चावचे अनेकप्रकारे अमरः

**नैकमाय** त्रि० नैका माया यस्य । १अनेककपटे २परमेश्वरे पु० "नैकमायो महाशनः" विष्णुस० "इन्द्रोमायाभिः पुरुरूप ईयते" श्रुतेस्तस्यानेकमायत्वात्तथात्वम् ।

**नैकरूप** त्रि० नैकं रूपं यस्य । १नानारूपे २परमेश्वरे पु० "नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः" विष्णुस० । "इन्द्रो मायाभिः पुरुरूप ईयते"श्रुतेस्तस्य तथात्वम् । कर्म०। ३अनेकेषु रूपेषु "नैकरूपधरोऽव्ययः" विष्णुस्तुतिः ।

**नैकशृङ्ग** पु० नैकानि चत्वारि शृङ्गाण्यस्य । परमेश्वरे "नैकशृङ्गो गदाग्रजः" विष्णुस०। "चत्वारि शृङ्गास्त्रयो अस्य पादाः" इति मन्त्रवर्णात् तस्य तथात्वम् स्त्रियां ङीष् ।

**नैकषेय** पुंस्त्री निकषाया अपत्यम् ढक् । राक्षसे हला०

**नैकसानु** पु० नैके सानवोऽस्य । पर्वतभेदे तत्र चरतीति चर—ट । नैकसानुचर शिवे "नैकसानुचरश्चरः" भा०आनु० १७अ० ।

**नैकात्मन्** पु० नैक आत्मा स्वरूपमस्य । परमेश्वरे "नैकात्मा नैककर्मकृत्"विष्णुस०। "तदैक्षत बहु स्यामिति"श्रुतेस्तस्य तथात्वम् ।

**नैकृतिक** त्रि० निकृत्या परापकारेण जीवति निकृत्या निकृष्टतया चरति वा निकृति+ठक् । स्वार्थानुपकारित्वमनस्त्वाद्य परवृत्तिच्छेदनेन १स्वार्थपरे २शाठ्येन चारिणि च "अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः" मनुः "न नास्तिको नैकृतिकोऽथ वापि" हरिवं० १५४अ० ।

**नैगम** पु० निगम एव स्वार्थे—अण् । ब्रह्मप्रतिपादके उपनिषद्रूपे १वेदभागे २नये नीतौ हेमच० । निगमे भवः अण् । ३वणिग्जने अमरः । ४नागरे मेदि० तस्येदम् अण् । ५निगमसम्बन्धिनि त्रि० "तेषां प्रतिविधानार्थं प्रवक्ष्याम्यथ नैगमम् । काम्यानां सर्वसिद्ध्यर्थं तानुपायान् निबोध मे" भा०शा० १००अ० तत्र वणिजि "श्रेणीनैगमपाषण्डिगणानामप्ययं विधिः" याज्ञ० "मार्गे च महति निगमे नैगमानाम्" दशकुमा० ६निघण्टुग्रन्थांशभेदे "आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा" निघण्टु भाष्यम् । "जहाद्युल्वल्पर्य्यन्तं नैगमं संप्रचक्षते" इति च तद्भाष्यम् ।

**नैगमिक** त्रि० निगमे भवः तस्य व्याख्यानो वा ऋगयना० ठक् । १निगमभवे २तद्व्याख्यानग्रन्थे ३तस्याध्याये च ।

**नैगमेय(ष)** पु० १कुमारानुचरभेदे "तस्य (कार्त्तिकेयस्य) शाखो विशाखश्च नैगमेयश्च पृष्ठजः" भा०आ० २६अ० सुश्रुतोक्ते २बालग्रहभेदे "स्कन्दग्रहस्तु प्रथम" इत्युपक्रमे "नवमो नैगमेयश्च यः पितृग्रहसंज्ञितः" इत्युक्त्वा "यः फेनं वमति विनश्यते च मध्ये सोद्वेगं विलपति चोर्द्ध्वमीक्षमाणः । ज्वर्य्येत प्रततमथोवसासगन्धिर्निःसज्ञो भवति हि नैगमेयजुष्टः" इति लक्षितः । अत्र नैगमेष इत्यपपाठः ।

**नैघण्टुक** न० निघण्टुः पर्य्यायशब्दमधिकृत्य प्रवृत्तम् ठक् । "गौराद्यपारेपर्य्यन्तमाद्यं नैघण्टुकं मतम्" भाष्योक्ते प्रथमाध्यायत्रयात्मके निघण्टुग्रन्थस्य प्रथमकाण्डे "नैघण्टुकमिदं देवतानामप्राधान्येनेदमिति तद्यदन्यदैवते मन्त्रे निपतति नैघण्टुकं ततः" निरुक्तकारः १।२०।

**नैचाशाख** न० नीचासु शूद्रयोनिषु शाखा पुत्रपौत्रादिपरम्परा यस्य नीचाशाखः पतितः "शूद्रावेदी पतत्यत्रेः" मनुस्मरणात् तस्येदमण् । शूद्रावेदिसम्बन्धिधने "नैचाशाखं मघवन् ! रन्धया नः" ऋ०३।५३।१४ तद्भाष्ये च उक्तैव व्युत्पत्तिर्दर्शिता ।

**नैचिक** न० नीचा—भवतीति ठक् । गोःशिरोभागे हेमच० ।

**नैचिकी** स्त्री नीचैश्चरति ठक् अव्ययस्य टिलोपः । प्रशस्ता निचिः गोकर्णशिरोदेशः । प्राशस्त्ये क निचिकास्त्यस्याः

ज्योतॄस्त्ना० णः वा। २उत्तमायां स्त्रीगव्याम् अमरः।

**नैचित्य** त्रि० निचिते भवः नादित्वात् ण्यः। निचितदेशभवे

**नैचुल** न० निचुलस्येदमण् फलस्य पृथक्प्रयोगे अणो न लुप्। १निचुलसम्बन्धिनि इज्जलफलादौ "पिप्पली सर्षपांश्चैव नागरं नैचुलं फलम्" सुश्रुतः। निचुलशब्दस्यैव फलपरत्वे तु लुप् निचुलमित्येव न०।

**नैतोश** पुंस्त्री नितोशयतीति नितोशतिर्वधकर्मा निघण्टुः। ततः अच् नितोशः हिंसकः तस्यापत्यम् अण्। हन्तुरपत्ये "नैतोशेव तुर्फरी पर्फरीका" ऋ०१०।१०६।६

**नैत्य** त्रि० नित्ये दीयते नित्य+व्युष्टा० अण्। १नित्ये दीयमाने। नित्यं विहितः अण् स्वार्थे अण् वा। नित्यविहिते कर्मणि। २नित्ये कर्मणि च। ततः स्वार्थे क। नैत्यक तत्रार्थे "अपां समीपे नियतो नैत्यकं विधिमास्थितः" "वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके" "नैत्यके नास्त्यनध्यायः" इति च मनुः।

**नैत्यशब्दिक** त्रि० नित्यं शब्दमाह माशब्दा०ठक्। नित्यशब्दवादिनि शब्दं नित्यतया यो वदति मीमांसकस्तस्मिन्।

**नैत्यिक** त्रि०नित्यं विहितः ठक्। नित्यविहिते "सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म च" मनुः।

**नैदाघ** त्रि० निदाघस्येदम् वेदे ग्रैष्मिकोऽण्। निदाघसम्बन्धिनि "जघन्ये नैदाघे समिवैव कोपयति" शत० ब्रा०१।४।१।१६ लोके तु निदाघस्यर्त्तुवाचित्वेन "कालाट् ठञ्" पा० ठञ्। नैदाघिक ग्रीष्मर्त्तुसम्बन्धिनि त्रि०।

**नैदान** त्रि०निदानं कारणं वेत्ति अण्। कारणवेत्तरि "स्थाल्यासन्नासंयोगेनेति नैदानाः" निरु० ६।९

**नैदानिक** त्रि० निदानं रोगकारणं वेत्ति तत्प्रतिपादकं ग्रन्थमधीते वा ठक्। १रोगनिदानाभिज्ञे २तत्प्रतिपादकग्रन्थाध्येतरि च "यथाहुर्नैदानिकाः" मल्लिनाथः।

**नैदेशिक** त्रि० निदेशं करोति ठक्। १किङ्करे दासे "नैदेशिकैर्यस्य वशे जनोऽयम्" भाग० ६।८३।२

**नैधन** न० निधनमेव स्वार्थे अण्। १निधने मरणे २लग्नापेक्षया अष्टमस्थाने च "शुद्धैर्दाशकेन्द्रनैधनगृहैः पापैस्त्रिषष्ठायगैः" वृ०सं०९८८अ०।

**नैधान** त्रि०निधानेन निर्वृत्तं सङ्कला० अञ्। निधानसाध्ये

**नैधेय** पु०त्रि० निधेरपत्यादि० वाह्वा०ठक्। १निधेरपत्ये तस्येदं ढक्। २तत्सम्बन्धिनि त्रि०।

**नैध्रुव** पु० निध्रुवगोत्रप्रवरर्षिभेदे "निध्रुवाणां काश्यपावत्सार नैध्रुवेति" आश्व० श्रौ० ३।१४।६

**नैध्रुवि** पु०समस्तयजुर्वेदाध्यापकपरम्परास्थे काश्यपे ऋषिभेदे "काश्यपान्नैध्रुवेः काश्यपो नैध्रुविः" शत०ब्रा०१४।९।४।३३

**नैप** त्रि० नीपस्य विकारः रजतादि० अञ्। नीपविकारे

**नैपात्य** न० निपातस्य भावः ब्राह्मणा० ष्यञ्। निपातस्य भावे

**नैपाल** पु० नेपाले भवः तस्येदम् वा अण्। १नेपालभवे निम्बे राजनि०। २नवमल्लिकायां स्त्री टाप्। ३मनःशिलायां ४शेफालिकायां स्त्री मेदि० ५नील्यां स्त्री ङीप् शब्दर०६नेपालदेशभवे ७तत्सम्बन्धिनि च त्रि०स्त्रियां ङीप्

**नैपालिक** न० नेपाले भवः बा० ठक्। ताम्रे राजनि०।

**नैपुण** न० निपुणस्य भावः युवा० अण्। निपुणत्वे "अधमसमवरिष्ठान्यर्ककेन्द्रादिसंस्थे शशिनि विनयवित्तज्ञानधीनैपुणानाम्" ज्योति०त०। "प्रकटान्यपि नैपुणं महत् परवाच्यानि चिराय गोपितुम्" माघः।

**नैपुण्य** न० निपुणस्य भावः कर्म वा ब्राह्मणा० ष्यञ्। १निपुणत्वे २निपुणकर्मणि च। "धर्मनैपुण्यकामानां पूतिगन्धे च सर्वदा" मनुः। [समीपादौ।

**नैवद्धक** त्रि० निवद्धस्यादूरदेशादि वराहा० कक्। निवद्ध-

**नैभृत्य** न० निभृतस्य भावः ब्राह्मणा० ष्यञ्। निभृतत्वे अचाञ्चल्ये "धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः। अन्वशंसो वदान्यश्च ह्रीमान् सत्यपराक्रमः" भा०उ० ५२अ०। [स्यादूरदेशादौ।

**नैमग्नक** त्रि० निमग्न+चतुरर्थ्यां वराहा० कक्। निमग्न-

**नैमित्त** त्रि० निमित्ते भवः निमित्तस्य शकुनशास्त्रस्य व्याख्यानो ग्रन्थो वा ऋगयनादि० अण्। १निमित्तभवे २शकुनरूपनिमित्तसूचकग्रन्थव्याख्याने च।

**नैमित्तिक** त्रि० निमित्तं वेत्ति तत्प्रतिपादकग्रन्थमधीते वा उक्था० ठक्। १निमित्ताभिज्ञे २निमित्तरूपशकुनशास्त्राध्येतरि च। निमित्तादागतः ठक्। ३निमित्तमात्रमाश्रित्य कर्त्तव्ये कर्मणि तत्र पुत्रजन्माश्रित्य विहितं जातेष्ट्यादि ग्रहणादिनिमित्तमाश्रित्य स्नानादि च "नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते" ति०त० "नैमित्तिकत्वं तु निमित्तनिश्चयवदधिकारिकर्त्तव्यत्वम्" स्मार्त्तः। "यत्तु पापोपशान्त्यै च दीयते विदुषां करे। नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम्" इति गरुड़पु० "निमित्तमात्रमाश्रित्य यो धर्मः सम्प्रवर्त्तते। नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा"। चण्डालशवपूयादि स्पृष्ट्वाऽस्नातां रजस्वलाम्। स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं तु तत्"। "नैमित्तिकानि काम्यानि निपतन्ति

यथा यथा” मनु०त० ५निमित्ताधीने च “गुरुणो द्वे रथवती ह्ययोर्नैमित्तिकोद्भवः” “सांसिद्धिकं द्रवत्वं स्यात् नैमित्तिकमथापरम्। नैमित्तिकं वह्नियोगात् तपनीयघृतादिषु” भाषा० “पुरुषार्थहेतुकमिदं निमित्त नैमित्तिकप्रसङ्गेन” सा०का०।

**नैमित्तिकलय** पु० “चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः” इत्युक्ते प्रलयभेदे “चतुर्दशगुणो ह्येष कालो ब्राह्ममहः स्मृतम्। तस्यान्ते प्रलयः प्रोक्तो ब्रह्मन्! नैमित्तिको बुधैः” मार्कण्डेयपु०।

**नैमिश** न० निमिशमेव स्वार्थे अण्। निमिशारण्ये तीर्थभेदे निमिषशब्दे दृश्यम्। “पृथिव्यां नैमिशं क्षेत्रमन्तरीक्षे च पुष्करम्। त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते” भा०व० ७५ अ० श्लो०। नैमिशारण्यमप्यत्र।

**नैमिश्रि** पु० निमिश्रस्यापत्यम् इञ्। नितरां मिश्रस्यापत्ये ततः यूनि फक्। तस्य तौल्वल्या० न लुक्। नैमिश्रायण यूनि तदपत्ये

**नैमिष** न० अरण्यरूपे तीर्थभेदे यत्रारण्ये निमिषेण दानवबलं विष्णुना निहतमिति तस्य तथात्वं तन्निर्वचनं यथा वराहपु० “तेन चक्रेण तत् सैन्यमासुरं दुर्जयं क्षणात्। निमिषान्तरमात्रेण भस्मवद्बहुधा कृतम्। एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा। उवाच निमिषेणेदं निहतं दानवं बलम्। अरण्येऽस्मिंस्ततस्त्वेन नैमिषारण्यसंज्ञितम्। भविष्यति यथार्थं वै ब्राह्मणानां विशेषतः”। “नैमिषे तु महास्थाने देवी सा लिङ्गधारिणी” इति देवीगीता। तस्येदम् “वृद्धाच्छः” पा० छ। नैमिषीय तत्सम्बन्धिनि “स ह नैमिषीयाणामुद्गाता बभूव” छा०उ०।

**नैमिषकुञ्ज** न० तीर्थभेदे नैमेषेयशब्दे दृश्यम्।

**नैमिषि** पुंस्त्री निमिषति नि+मिष—क निमिषस्तस्यापत्यम् इञ्। निमेषयुक्तस्यापत्ये ततः यूनि फक्। तस्य तौल्वल्या० न लुक्। नैमिषायण तदीये यून्यपत्ये पुंस्त्री०।

**नैमिषेय** त्रि० निमिषे भवः निमिषस्येदं वा वा० ढक्। १निमिषारण्यस्थे २नैमिषसम्बन्धिनि च “ततः नैमिषकुञ्जञ्च समासाद्य कुरूद्वह!। ऋषयः किल राजेन्द्र! नैमिषेयास्तपस्विनः” भा०व० ८३अ०।

**नैमेय** पु० नि+मि—यत् स्वार्थेऽण्। विनिमये परीवर्त्ते अमरः

**नैयग्रोध** न० न्यग्रोधस्य विकारः प्लक्षा० अण् तस्य न लुक् पदान्तयात् पूर्वमैच्। वटफलादौ अमरः। “नैयग्रोधं भवति स्वधामेवावरुन्धे” शत०ब्रा०१२।७।२।१४

**नैयङ्कव** त्रि० न्यङ्कोरिदम् अण् यात्पूर्वमैच्। न्यङ्कुमृगस्य च-[र्मादौ।

**नैयमिक** त्रि० नियमादागतः ठक्। नियमविधिप्राप्ते कर्मणि ऋतुभार्य्यागमनादौ।

**नैयाय** त्रि० न्यायस्य व्याख्यानो ग्रन्थः ऋगयनादि० अण्। [न्यायव्याख्याने ग्रन्थे।

**नैयायिक** त्रि० न्यायं वेत्त्यधीते वा उक्था० ठक्। न्यायज्ञे “नैयायिकानान्तु नये द्व्यणुकादावपीष्यते” भाषा०।

**नैयासिक** त्रि० न्यासं वेत्ति अधीते उक्था० ठक्। १हरदत्तकृतपदमञ्जर्य्यपरनामकन्यासग्रन्थाभिज्ञे २मातृकादिन्यासवेत्तरि च।

**नैरन्तर्य्य** न० निरन्तरस्य भावः ष्यञ्। अविच्छेदे “स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः” पात० सू० “नैरन्तर्य्यात्तु संक्रान्तेर्ज्ञेयं विष्णुपदीद्वयम्” सू०सि०

**नैरपेक्ष्य** न० निरपेक्षस्य भावः ष्यञ्। अपेक्षाशून्यत्वे “नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम्” सां०सू०

**नैरयिक** त्रि० निरये वसति ठक्। नरकवासिनि “पञ्चेन्द्रिया एव देवा नरा नैरयिका अपि” हेमच०।

**नैराश्य** न० निराशस्य निष्कामस्य भावः ष्यञ्। आशाशून्यत्वे “आशा हि परमं दुःखं नैराश्यं परमं सुखम्। यथा संत्यज्य कान्ताशां सुखं सुष्वाप पिङ्गला” सां०प्र०भाष्यधृत वाक्यम् नैराश्यस्य सुखरूपत्वं तत्र समर्थितं यथा “निराशः सुखी पिङ्गलावत्” सां०सू० “नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात् सुखं तु कुतः साधनाभावनादिति” उच्यते। चित्तस्य सत्वप्राधान्येन स्वाभाविकं यत् सुखमाशया पिहितं तिष्ठति तदेवाशाविगमे लब्धवृत्तिकं भवति तेजःप्रतिबद्धजलशैत्यवदिति न तत्र साधनापेक्षा” सां०प्र०भा०।

**नैरुक्त** त्रि० निरुक्तस्य व्याख्यानो ग्रन्थः तत्र भवो वा ऋगयनादि०अण्। १निरुक्तव्याख्याने ग्रन्थे तत्र २भवे(आसक्ते) च “त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः” मनुः।

**नैरुक्तिक** त्रि० निरुक्तं निर्वचनं वेत्ति तद्ग्रन्थं वाऽधीते उक्था०ठक्। १निर्वचनाभिज्ञे २निरुक्तग्रन्थाध्येतरि च।

**नैरूहिक** पु० निरूहः प्रयोजनमस्य ठक्। सुश्रुतोक्ते वस्तिभेदे निरूहशब्दे ४०८८ पृ० दृश्यम्।

**नैर्ऋत** पुंस्त्री निर्ऋतेरपत्यम् अण्। १राक्षसे अमरः स्त्रियां ङीप्। “तस्यापि (अधर्मस्य) निर्ऋतिर्भार्य्या नैर्ऋता येन राक्षसाः” भा०आ० ६६अ०। निर्ऋतिशब्दे इयं मृत्योर्भार्य्येत्युक्तं कल्पभेदादविरोधः। “भयमप्र-

**परिवापित** त्रि० परिवापे नियुक्तः । परिवापने नियोजिते अमरः । परि+वप--णिच्--क्त । २मुण्डिते त्रि० ।

**परि(री)वार** पु० परिव्रियतेऽसौ अनेन वा परि+वृ-घञ् वा दीर्घः । १परिजने कुटुम्बादौ रघुः ६।१० २खड्गकोषे (खाप) मेदि० भावे घञ् । परिवरणे च ।

**परिवासन** न० परिवास्यतेऽनेन । यज्ञियवेदाच्छादनकुशविशेषे "शुल्वात् प्रादेशे परिवास्य वेदपरिवासनानि निदधाति" आपस्तम्बसूत्रम् । तानि च वेदाग्राणि कार्य्याणीति सूत्रस्वामी ।

**परि(री)वाह** पु० परि+वह-घञ् वा दीर्घः । जलोच्छ्वासे अमरः । परितः समन्ताज्जलानामुच्छलनात् पात्रवर्जनेन वा वहनात्तथात्वम् रघुः ८।७४ उदा० ।

**परिवित्त** पु० परि+विद्--क्त न दस्य नः । अकृतदाराग्न्याधाने पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि यजु० ३०।९

**परिवित्ति** पु० परि+विद्-क्तिच् । अकृतविवाहाग्न्याधाने पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि परिवेत्तृशब्दे दृश्यम् । हेमच० ।

**परिविद्ध** त्रि० परि+व्यध-क्त । १परितो विद्धे २कुवेरे पु० ।

**परिविन्दत्** पु० परित्यज्य अतिक्रम्य ज्येष्ठं विन्दति भार्य्यामग्न्याधानं वा विद्--लाभे शतृ । अकृतदाराग्न्याधानस्य ज्येष्ठस्य पूर्वं कृतदाराग्न्याधाने कनिष्ठे भ्रातरि अत्र परिवेदने दोषः परिवेत्तृशब्दे हारीतोक्तो दृश्यः । तत्र प्रतिप्रसवादिकं उद्वा० निर्णीतं यथा

छन्दोगपरिशिष्टम् "देशान्तरस्थक्लीवैकवृषणानसहोदरान् । वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः । जडमूकान्धबधिरकुब्जकुष्ठकवामनान् । अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च । धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा । कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति" । धनवार्धुषिकं राजसेवकं कर्षकं तथा प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् । प्रोषितं यद्यशृण्वानमब्दादतिसमाचरेत्" । जडो विकलान्तःकरणः हिताहितावधारणाक्षम इति यावदिति मिताक्षरा । कुण्ठः सर्वक्रियालसः "कुण्ठो मन्दः क्रियासु यः" इत्यमरोक्तेः अभार्य्यान् शास्त्रनिषिद्धभार्य्यासम्बन्धान् नैष्ठिकब्रह्मचारिवानप्रस्थभिक्षुरूपान् । नृपस्य चेति चकारेण अन्यानित्यनुकृष्यते । कामतः कारिणः श्रौतस्मार्त्तनिरपेक्षस्वच्छन्दव्यवहारिणः । कुलटः कुलान्यटतीति परकुलाटनशील इति नारायणमहामहोपाध्यायाः नैगमसमाश्रयः कुलं परकुलम् अटति गच्छति प्राप्नोति यो दत्तकः स कुलटः इति । चौरानित्यत्र पौरानिति पाठे पुरजनप्रेष्यान् । धनवार्धुषिकादित्रयं देशान्तरस्थितश्च ज्येष्ठं त्वरन्नपि वर्षत्रयं प्रतीक्षेत । ततश्च पूर्ववचने एतान् परिविन्दन्न दुष्यति इत्युक्तम् अत्र परेर्लक्षणार्थत्वाद्द्वितीया । तत्र देशान्तरस्थकृषिसक्तनृपसक्तधनवृद्धिप्रसक्तान् प्रति वर्षत्रयादूर्द्ध्वमिति बोद्धव्यम् । अत्रापि प्रोषिते यत् त्र्यब्दप्रतीक्षणं तद्विद्याधर्मधनेतरार्थप्रोषितपरं वक्ष्यमाणवशिष्ठगोतमवचनात् अशृण्वानं प्रत्ययव्यत्ययेन अश्रूयमाणमिति परिशिष्टप्रकाशकारः । अशृण्वन् च इति पाठस्तु रत्नाकरे प्रोषितस्य कन्याग्न्यादात्तोऽमशृण्वन् वर्षं प्रतीक्ष्य परिणयनं करोति । तत्र समागते ज्येष्ठे कनिष्ठः परिवेदनशुद्धये परिवेदनप्रायश्चित्तस्य कृच्छ्रपादं चरेत् एवमन्यत्रापि प्रायश्चित्तसङ्कलनाऽन्वेष्या । वशिष्ठः "अष्टौ दश द्वादश वर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति तत्र श्लोकौ "द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः । न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनःपुनः । उन्मत्तः किल्विषी कुष्ठी पतितः क्लीव एव वा । राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्" । गोतमश्च "द्वादश वर्षाणि प्रतीक्षणं ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्युपयमेषु षडित्येके" इति विद्यार्थं प्रोषितस्य ब्राह्मणस्य दारा अपत्योत्पादनार्थं तदभिगमने द्वादशवर्षाणि प्रतीक्षेरन्नित्युक्त्वा भ्रातरि चैवमित्यनेन सर्वमतिदिष्टम् एतेनैतदवसीयते विद्याधनधर्मार्थं गतानां ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रमशो द्वादशदशाष्टषड्वर्षाणां प्रतीक्षणमिति प्रायश्चित्तविवेकः । रत्नाकरकृत्तु श्रूयमाणेऽभिक्षुगमनं प्रव्रजिते गमनस्य निवृत्तिप्रसङ्गादित्यधिकं गौतमीयं विलिख्य प्रोषिते भ्रातरि ज्येष्ठे विवाहाग्न्याधाने तं कारयितुमभिक्षुगमनं यवीयसा कर्त्तव्यं कृतसन्न्यासे च ततो निवृत्तिरिति व्याख्यातम् । शातातपः "क्लीवे देशान्तरगते पतिते भिक्षुकेऽपि वा" । योगशास्त्राभियुक्ते विषयात्यन्तविरक्ते इति रत्नाकरः । अत एव दक्षः "वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते" । तेन विषयासक्तमनसा जीवपरमात्मनोरभेदचिन्तनविशेषो योग इति । छन्दोगपरिशिष्टम् "नाग्नयः परि-

विन्दन्ति न यज्ञा न तपांसि च। न च श्राद्धं कनिष्ठस्य या च कन्या विदूषिका"। "विकला या च कन्यकेति" पाठः शातातपीये। नाग्नयः परिविन्दन्तीति ज्येष्ठाननुमत्या यथाह उशनाः "ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा"। वशिष्ठः "अग्रजोऽस्य यदानग्निरधिकार्य्यनुजः कथम्। अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि"। एतेन विवाहस्त्वनुमत्यापि दोषायेति प्रायश्चित्तविवेकः"।

**परिविन्न** पु० परि+विद-क्त तस्य दस्य च नः। नकारेण व्यवहारात् न णत्वम् मूर्द्धन्यपाठः प्रामादिकः "कृत्यचः" पा० अचः परत्वाभावात् नकारेण व्यवधानाच्च अप्राप्ते निर्विण्णस्योपसंख्यानात् णत्वम्। विपरस्य तु उपसर्गस्थनिमित्तत्वाभावात् नास्य प्रवृत्तिः। पूर्वं कृतविवाहाग्न्याधानस्य कनिष्ठस्य ज्येष्ठे भ्रातरि परिवेत्तृशब्दे दृश्यम्। २तादृशस्त्रियां स्त्री परिवेदनदोषकर्मत्वात् तयोः परिवेदनकर्मत्वम्।

**परिविष्टि** स्त्री परि+विश-विष-वा क्तिच्। १परिचर्य्यायां २व्याप्तौ च ऋ०४।२२।२भा०।

**परिवी** स्त्री परि+व्ये-क्विप् संप्रसारणे दीर्घः। १परिवारिते २परितः स्यूते च यजु० ६।४

**परिवीत** त्रि० परि+व्येञ्-क्त सम्प्र० दीर्घः। परिवेष्टिते ऋ० १०५।४१ [१२।१०८

**परिवृंहण** न० परि+वृन्ह-णिच्-ल्यु। बहुलीकरणे मनुः

**परिवृंहित** त्रि० परितो वृंहितम्। १सर्वतोभावेन वर्द्धिते २बहुलीकृते च। भावे क्त। ३करिध्वनिभेदे न०। [छा०उ०

**परिवृक्ण** त्रि० परि+व्रश्च-क्त। १छिन्ने २छिन्नहस्तपादे च

**परिवृक्त** त्रि० परि+वृज-क्त। परित्यक्ते ऋ० १०।१०२भा०

**परिवृढ** त्रि०परि+वृन्ह-क्त नि०। १अधिपे प्रभौ। ततः भावे दृढा० इमनिच् ऋतोरः। परिव्रढिमन् आधिपत्ये पु० पक्षे ष्यञ्। पारिव्राढ्य तदर्थे न०।

**परिवृत** त्रि० परितो वृतः। परितो वेष्टिते "सभ्यैः परिवृतोऽन्वहम्" कात्या० स्मृतिः।

**परिवृत्त** त्रि०परि+वृत-क्त। परितोवृत्ते। ततः चतुरर्थ्यां कुमुदा० ऋश्यादि०च क। परिवृत्तक तददूरदेशादौ त्रि०

**परिवृत्ति** स्त्री परि+वृत-क्तिन्। १परिवर्त्ते २अर्थालङ्कारभेदे अर्थालङ्कारशब्दे ३८८ पृ० दृश्यम्।

**परिवृत्तिसह** त्रि० परिवृत्तिं परावृत्तिं सहते सह-अच्। यौगिके शब्दभेदे स च पूर्वोत्तरपदयोः परावृत्त्या योगलभ्यार्थं बोधयतीति तस्य तथात्वम्। तत्र केचित् पूर्वपदपरावृत्त्यायोगलभ्यार्थबोधकाः केचिदुत्तरपदपरावृत्त्या। केचित्तु नोभयपदपरावृत्तिसहा यथाह हेमच०

"स्वस्वामित्वादिसम्बन्धं तत्राहुर्नामतद्वताम्। स्वात् पालधनभुग्नेतृपतिमत्वर्थकादयः। भूपालो भूधनो भूभुग्भूनेता भूपतिस्तथा। भूमांश्चेतिकवेरूह्या ज्ञेयोदाहरणावली। जन्यात् कृतृकर्त्तृसृट्स्रष्टृविधातृकरसूसमाः। जनकाद्योनिजरुहजन्मभूसूत्यणादयः। धार्य्याद्ध्वजास्त्रपाण्यङ्कमौलिभूषणभृन्निभाः। शालिशेखरमत्वर्थभागिभर्तृधरा अपि। भोज्याद्भुगन्धोव्रतलिट्पायिप्राशाशनादयः। पत्युःकान्तप्रियतमावधूप्रणयिनीनिभाः। कलत्राद्दररमणप्रणयीशप्रियादयः। सख्युः सखिसमा बाह्याह्वानियानासनादयः। जनेः स्वसृदुहितात्मजाप्रजावरजादयः। आश्रयात्सद्मपर्य्यायशयवासिसदादयः। वध्याद्विड्द्वेषिजिद्घातिभिद्रिपुध्वंसिशासनाः। अप्यन्तकारिदमनदर्पच्छिन्मथनादयः। विवक्षितो हि सम्बन्ध एकतोऽपि पदात्ततः। प्राक्प्रदर्शितसम्बन्धिशब्दा योज्या यथोचितम्। दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहनः। स्वत्वे पुनर्वृषपतिर्द्धार्य्यत्वे वृषलाञ्छनः। अंशोर्द्धार्य्यत्वेऽंशुमाली स्वत्वेऽंशुपतिरंशुमान्। वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुगपि। चिह्नैर्व्यक्तैर्भवेद्यत्र जातिशब्दोऽपि वाचकः। तथा अगस्तिपूता दिग्दक्षिणाशा निगद्यते। अयुग्विषमशब्दौ त्रिपञ्चसप्तादिवाचकौ। त्रिनेत्रपञ्चेषुसप्तपलाशादिषु योजयेत्। गुणशब्दो विरोध्यर्थं नञादिरितरोत्तरः। अभिधत्ते यथाकृष्णः स्यादसितः सितेतरः। वाड्वादिषु पदे पूर्वे वाड्वाग्न्यादिषूत्तरे। द्वयेऽपि भूभृदादौषु पर्य्यायपरिवर्त्तनम्। एवं परावृत्तिसहायोगाः स्युरिति यौगिकाः। मिश्राः पुनः परावृत्त्यसहागीर्वाणसन्निभाः"।

**परिवेत्तृ** पु० परि+विद-तृच्। अकृतदाराग्न्याधानस्य ज्येष्ठस्य पूर्वं कृतदाराग्न्याधाने कनिष्ठे "ज्येष्ठे अनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता भवति परिविन्नो ज्येष्ठः परिवेदनीया कन्या परिदायी दाता परिकर्त्ता याजकः ते सर्वे पतिताः" उद्वा०त० हारीतः।

**परिवेदन** न० परि+विद-लाभे ल्युट्। अकृतदाराग्न्याधाने ज्येष्ठे कनिष्ठस्य पूर्वं १विवाहे २अग्न्याधाने च परिवेत्तृशब्दे दृश्यम्। विद-ज्ञाने विद-सत्तायां भावे

ल्युट्। ३सर्वतो स्थाने ४सर्वतो वृत्तौ सर्वत्र स्थितौ च।

**परिवेदनीया** स्त्री परि+विद-कर्म्मणि अनीयर्। परिवेत्तुभार्य्यायां परिवेत्तृशब्दे दृश्यम्।

**परिवेदिनी** स्त्री परिवेदः अस्त्यस्याम् इनि ङीप्। परिवेत्तुभार्य्यायां परिवेदनीयायां स्त्रियाम् हेमच०।

**परिवेश(ष)** पु० परि+विश-(ष-)घञ्। १परिधौ २वेष्टने सूर्य्यचन्द्रमण्डलयोर्वेष्टनाकारे ३उपसूर्य्यकमण्डले तल्लक्षणादिकं वृ०सं० उक्तं यथा

"सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः। नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः। ते रक्तनीलपाण्डुरकापोताभ्राभशवलहरितशुक्लाः। इन्द्रयमवरुणनिरृतिश्वसनधनेशपितामहाग्निकृताः। धनदः करोति मेचकमन्योऽन्यगुणाश्रयेण चाप्यन्यः। प्रविलीयते मुहुर्मुहुरल्पफलः सोऽपि वायुकृतः। चापशिखिरजततैलक्षीरजलाभः स्वकालसम्भूतः। अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः। सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः। असकलशकटशरासनशृङ्गाटकवत् स्थितः पापः। शिखिगलसमेऽतिवर्षं बहुवर्णे नृपवधो, भयं धूम्रे। हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि। वर्णेनैकेन यदा बहुलः स्निग्धः क्षुराभ्रकाकीर्णः। स्वर्त्तौ सद्योवर्षं करोति पीतश्च दीप्तार्कः। दीप्तविहङ्गमृगरुतः कलुषः सन्ध्यात्रयोत्थितोऽतिमहान्। भयकृत्तड़िदुल्काद्यैर्हतो नृपं हन्ति शस्त्रेण। प्रतिदिनमर्कहिमांश्वोरहर्निशं रक्तयोर्नरेन्द्रवधः। परिविष्टयोरभीक्ष्णं लग्नास्तनभःस्थयोस्तद्वत्। सेनापतेर्भयकरो द्विमण्डलो नातिशस्त्रकोपकरः। त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम्। वृष्टिस्त्र्यहेण मासेन विग्रहो वा ग्रहेन्दुभनिरोधे। होराजन्माधिपयोर्जन्मर्क्षे वाऽशुभो राज्ञः। परिवेषमण्डलगतो रवितनयः क्षुद्रधान्यनाशकरः। जनयति च वातवृष्टिं स्थावरकृषिकृन्निहन्ता च। भौमे कुमारबलपतिसैन्यानां विद्रवोऽग्निशस्त्रभयम्। जीवे परिवेषगते पुरोहितामात्यनृपपीड़ा। मन्त्रिस्थावरलेखकपरिवृद्धिश्चन्द्रजे सुवृष्टिश्च। शुक्रे यायिक्षत्रियराज्ञां पीड़ाऽप्रियं प्राज्ञम्। क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ। परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च। युद्धानि विजानीयात् परिवेषाभ्यन्तरे द्वयोर्ग्रहयोः। दिवसकृतः शशिनो वा क्षुद्वृष्टिभयं त्रिषु प्रोक्तम्। याति चतुर्षु नरेन्द्रः सामात्यपुरोहितो वशं मृत्योः। प्रलयमिव विद्धि जगतः पञ्चादिषु मण्डलेषु। ताराग्रहस्य कुर्य्यात् पृथगेव समुत्थितो नरेन्द्रवधम्। नक्षत्राणामथ वा यदि केतोर्नोदयो भवति। विप्रक्षत्रियविट्शूद्रहा भवेत् प्रतिपदादिषु क्रमशः। श्रेणीपुरकोशानां पञ्चम्यादिष्वशुभकारी। युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोषकरः। पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम्। नरपतिपत्नीपीड़ां परिवेषोऽभ्युत्थितश्चतुर्दश्याम्। कुर्य्यात् तु पञ्चदश्यां पीड़ां मनुजाधिपस्यैव। नागरकाणामभ्यन्तरस्थिता यायिनां च बाह्यस्था। परिवेषमध्यरेखा विज्ञेयाक्रन्दसाराणाम्। रक्तः श्यामो रूक्षश्च भवति येषां पराजयस्तेषाम्। स्निग्धः श्वेतो द्युतिमान् येषां भागो जयस्तेषाम्।"

**परिवेषण** न० परि+विष-ल्युट्। १परितो वेष्टने विष-ल्युट्। २भोजनार्थं परितो भक्ष्यादेरर्पणे च। तत्र श्राद्धे परिवेषणप्रकारादि श्रा०त० उक्तं यथा

मनुः "पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम्। विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिःक्षिपेत्"। अन्नस्येति षष्ठी तृतीयार्थे वर्द्धितं पूरितं पात्रमिति शेषः। उपनिःक्षिपेत् परिवेषणार्थं समीपे धारयेत् तथा च पाकस्थाल्या आकृष्य प्रथमं भोजनपात्रे न देयं किन्तु स्थाल्यादिकं पाणिभ्यां पात्रसमीपे भूमौ संस्थाप्य पश्चादुभाभ्यां पाणिभ्यां पात्रान्तरिताभ्यां श्राद्धे परिवेषणं कुर्य्यात्। "उभाभ्यामपि पाणिभ्यामाहृत्य परिवेषयेत्" इति मत्स्यपुराणात्। यत्तु श्राद्धे परिवेषणस्य दक्षिणपाणिमात्रेणैवान्यानभिधानादिति मैथिलोक्तं तन्न "एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्" इत्यादिपुराणीयेनैकपाणिदत्तशूद्रदत्तभक्षणनिषेधेन तन्मात्रपरिवेषणस्यापि निषिद्धत्वात्। पाणिभ्यामपि पात्रान्तरितं कृत्वा देयम्। "हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्विषम्। तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा। प्रदद्यात् न तु हस्तेन नायसेन कदाचन" इति वशिष्ठेन सामान्यतोऽभिधानात् पितृभक्तितरङ्गिण्यामप्येवम्। मनुः "गुणांश्च सूपशाकाद्यान् पयोदधि घृतं मधु। विन्यसेत् यत्नतः सम्यक् भूमावेव समाहितः। भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च। हृद्यानि

चैव मांसानि पानानि सुरभीणि च । उपनीय तु तत् सर्वं शनकैः सुसमाहितः । आमिषं पानपातञ्च भोक्तुर्दक्षिणतो न्यसेत् । परिवेषयेच्च प्रयतो गुणान् सर्वान् प्रचोदयन्" । गुणान् उपकरणानि । भूमावेव न तु व्यञ्जनादिपात्राद्यन्नपात्रोपरि निःक्षिपेत् पात्रासत्त्वे भोजनपात्रेऽपि" ।

**परिव्याध** परि+व्यध-कर्त्तरि ण । १अम्बुवेतसे २द्रुमोत्पले च मेदि० ३परितो वेधनकारके त्रि० ।

**परिव्रज्या** स्त्री परि+व्रज-भावे क्यप् । तपस्यायां हेमच० ।

**परिव्राज्** पु० परित्यज्य पुत्रादिकं व्रजति परि+व्रज-क्विप् दीर्घः । पुत्रदारादिकं सर्वकर्माणि च परित्यज्य चाश्रमान्तरगामिनि भिक्षौ यतौ अमरः । तल्लक्षणं यथा "सर्वारम्भपरित्यागो भैक्ष्याशं वृक्षमूलता । निष्परिग्रहताऽद्रोहः समता सर्वजन्तुषु । प्रियाप्रियपरिष्वङ्गे सुखदुःखाविकारिता । सबाह्याभ्यन्तरं शौचं सुखदुःखाविकारिता । सर्वेन्द्रियसमाहारो धारणाध्याननित्यता । भावसंशुद्धिरित्येष परिव्राड्धर्म्म उच्यते" ।

**परिव्राज** पु० परित्यज्य पुत्रादीन् व्रजति परि+व्रज—संज्ञायां कर्त्तरि घञ् । परिव्राजि भिक्षौ

**परिव्राजक** पु० परित्यज्य पुत्रादीन् सर्वकर्माणि च व्रजति व्रज—घञ् स्वार्थे क ण्वुल् वा । चतुर्थाश्रमिणि यतौ ।

**परिव्राजि** स्त्री परि+व्रज—णिच्-इन् । श्रावण्यां (मुलकुडि) क्षुपे राजनि० ।

**परिशिष्ट** त्रि० परि+शिष-क्त । १अवशेषे । ततः स्वार्थे अच् । २तत्प्रकाशकग्रन्थभेदे न० हेमच० यथा गृह्यपरिशिष्टं छन्दोगपरिशिष्टम् इत्यादि ।

**परिशुष्क** त्रि० परि+शुष-क्त तस्य कः । १परितः शोषयुते २नीरसे "मांसं बहुघृतैर्भृष्टं सिक्तञ्चेदम्बुना मुहुः । जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते" भाव्प्र० उक्ते ३परिपक्वमांसभेदे न० ।

**परिशेष** पु० परि+शिष-घञ् । अवशेषे

**परिशोध** पु० परि+भावे घञ् । १ऋणादेः शोधने । णिच् अच् । २परितः शुद्धिसम्पादने च । ल्युट् । परिशोधन तत्रार्थे न० ।

**परिश्रम** पु० परि+श्रम—घञ् न वृद्धिः । १व्यायामे क्लेशकारके आयासे हेमच० । आर्षे तु क्वचित् वृद्धिः । परिश्राम तत्रार्थे भाग० २।६।२० [च मेदि० ।

**परिश्रय** पु० परि+श्रि-आधारे अच् । १आश्रये २सभायां

**परिश्रित्** स्त्री परिश्रयत्यनया परि+श्रि-करणे क्विप् । १यज्ञपाषाणे शत०ब्रा० ७।१।१२ भाष्यम् । २यज्ञियेष्टकासमसंख्यके पाषाणखण्डे च कात्या०श्रौ०१८।६।१२

**परिश्रित** त्रि० परि+श्रि+क्त । १समाश्रिते भावे क्त । २आश्रये न० । ३परितोवेष्टने ४दस्य्वादिपरिहारके तिरस्करण्यादिभिर्वेष्टने शत०ब्रा० ३।१।२।८ भा० । आश्व० श्रौ० २।४।१ नारा० ।

**परिषद्** स्त्री परिषीदत्यस्यां परि+सद—आधारे क्विप् । सभायां धर्मनिर्णयार्थं विद्वद्भिर्युक्तायां२ सभायाञ्च यथोक्तं मनुना "अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशंसयः"

प्रायश्चित्तनिर्णयार्थं परिषदुपस्थानप्रकारः परिषद्विशेषव्यवस्थादिकं प्रा०वि० उक्तं यथा

"अथ प्रायश्चित्तिनः परिषदुपस्थानम् । तत्राङ्गिराः "कृते निःसंशये पापे न भुञ्जीतानुपस्थितः । भुञ्जानो वर्द्धयेत् पापमस्त्यं संसदि ब्रुवन् । सचेलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः । उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं गतः । गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत्" । उपस्थानञ्च वस्त्रादिना ब्राह्मणान् तोषयित्वा कार्य्यम् "तोषयित्वा द्विजोत्तमानिति" देवलवचनात् । महत्सु पापेषु राज्ञाप्युपस्थितिः कार्य्येत्याह देवलः "स्वयं वा ब्राह्मणैः सम्यक्महत्दोषे विधीयते । राज्ञा च ब्राह्मणैश्चैव महत्सु परिचक्षते" । परिषद्माह अङ्गिराः "एकविंशतिसंख्यातैर्मीमांसान्यायन्यायपारगैः । वेदाङ्गकुशलैश्चैव परिषत्त्वं प्रकल्पयेत् । चातुर्वैद्यः प्रकल्पी च अङ्गविद्धर्मपाठकः । त्रयश्चाश्रमिणो वृद्धाः परिषत् स्याद्दशावरा" । परिशब्दोऽत्र सभार्थपरः । चातुर्वैद्यः चतुर्वेदपारगः । विकल्पी सर्वधर्मप्रलापज्ञः धर्मपाठकः धर्मशास्त्रज्ञः । मनुः "त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा" । अङ्गिराः "एषा तु लघुकार्य्येषु मध्यमेषु तु मध्यमाः । महापातकशोध्येषु शतशो भूय एव वा" प्रदर्शनार्थमिदं यावद्भिरेव निरूपणं भवति तावद्भिरेव परिषत् दृष्टार्थत्वादस्याः । तथाच यमः "एको द्वौ वा त्रयो वापि यद्ब्रूयुर्धर्मपाठकाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रशः । यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः । तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति" । इत्युपाता-

तपः "अबुद्धा धर्मशास्त्राणि प्रायश्चित्तं वदन्ति ये । प्रायश्चित्ती भवेत् पूतस्तत् पापं तेषु गच्छति"। अङ्गिराः "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः । अनर्च्चितैरनाहूतैरपृष्टैश्चैव संसदि । प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः"। तथा "न्यायतो मार्गमाणस्य क्षत्रियादेः प्रणामिनः । अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्" । [द्विरूपकोषः ।

**परिषद्** त्रि॰ परितः सीदति परि+सद–अच् । अनुचरे

**परिषद्य** त्रि॰ परिषदमर्हति यत् । सभार्हे द्विरूप॰। स्तोत्रं समेतानामृत्विजां सभायोग्ये पवमाने अग्निभेदे यजु॰ ५।३२ वेददीपः ।

**परिषद्वल** त्रि॰ परिषद्+अस्त्यर्थे वलच् । सभासदे तत्र आश्रयत्वेन परिषदः सत्त्वात् तथात्वम् ।

**परिषीवण** न॰ परि+सिव–भावे ल्युट् षत्वं वा दीर्घः नि॰। ग्रन्थिकरणे (गाँटदेओया) माघः ८।६।१२ पक्षे परिषेवणमप्यत्र ।

**परिषूति** स्त्री परि+षू–प्रेरणे भावे क्तिन् । १प्रेरणे । कर्त्तरि क्तिच् । २प्रेरके त्रि॰ ऋ॰ १।१८।६

**परिषेचक** परि+सिच–ण्वुल् । परितः सेचके अकान्तत्वेऽपि याजका॰ समर्थषष्ठ्या समासः । अन्तोदात्तता चास्य ।

**परिष्कण्ण** त्रि॰ परि+स्कन्द–क्त तस्य दस्य च न वा षत्वे षत्वम् । परपुष्टे षत्वाभावे णत्वाभावात् परिस्कन्न तत्रार्थे ।

**परिष्क(स्क)न्द** त्रि॰ परिस्कद्यते पूर्य्यते परि+स्कन्द घञ् वा षत्वम् । १परपुष्टे अमरः २परितः स्थायिनि रथगोपके भा॰स॰ ४३अ॰ ।

**परिष्कर** पु॰ परि+कृ–भावे वा॰ अप् सुट् षत्वम् । रथस्य रथादौ भा॰क॰ ३४अ॰ "सप्तर्षिमण्डलं ज्ञेयं रथस्यासीत् परिष्करः" ।

**परिष्कार** पु॰ परि+कृ–घञ् सुट् षत्वम् । १भूषणे विद्यमानवस्तुनो गुणान्तरस्य २आधानादौ ३संस्कारे च अमरः ४शुद्धौ ।

**परिष्कृत** त्रि॰ परि+कृ–क्त सुट् षत्वम् । १भूषिते २चेष्टिते ३कृतमार्जनादिसंस्कारे च अमरः यज्ञार्थं पशुबन्धनाय यज्ञपालासदनाय च कृतसंस्कारायां ४भूमौ स्त्री अमरः ।

**परिष्टि** स्त्री परि+इष–क्तिन् वेदे शक॰। अन्वेषणे ऋ॰ १। ६५। लोके तु परीष्टिरित्येव

**परिष्टुभ्** त्रि॰ परि+स्तुभ–क्विप् षत्वम् । १परितः निरर्थकशब्दरूपस्तोभयुक्ते ऋ॰ १।१६६।११ भा॰। २परितः स्तोतव्ये ऋ॰ ८।६९।२४ भा॰ ।

**परि(ष्टो)स्तोम** पु॰परितः स्तूयते उत्तमवर्णयुक्तत्वात् षत्वम् । परिगतः स्तोमम् प्रा॰स॰ तत्र परेः स्तौति प्रत्यनुपसर्गत्वात् न षत्वमिति भेदः इति स्वामी । गजपृष्ठास्तरणकम्बले (झुल) अमरः । [षत्वम् । परितः स्थले ।

**परिष्ठल** न॰परितः स्थलम् "विकुशमिपरिभ्यः स्थलम्" पा॰

**परिष्ठा** त्रि॰ परि+स्था–क्विप् षत्वम् । पराहन्त्याम् ऋ॰६।

**परि(ष्य)स्यन्द** त्रि॰ परि+स्यन्द–घञ् । "परिस्यन्दः प्राच्यभरतेषु" पा॰ प्राच्याद्यर्थे न षत्वम् अन्यत्र वा षत्वम् । १परितः स्यन्दनयुक्ते २कुसुमादेः पत्रावल्यादिरचनायाम् अमरः । ३परिष्कारे ४परिवारे च हेमच॰ ।

**परिष्वङ्ग** पु॰ परि+स्वन्ज–घञ् । आलिङ्गने अमरः

**परिसंवत्सर** अव्य॰ऊर्द्ध्वं संवत्सरात् अव्ययी॰। वत्सरादूर्द्ध्वे "परिसंवत्सरात् पुनः" मनु॰प्रभृत्या अलुक् । २परिवत्सरे पु॰

**परिसंख्या** स्त्री परि+सम्–ख्या–भावे अङ् । १परिगणिते २विधिभेदे नियमशब्दे ४०७८ पृ॰ ऋतुकालशब्दे च १४ ३७पृ॰ दृश्यम् ।

**परिसंख्यात** त्रि॰ परि+सम्–ख्या–कर्मणि क्त । परिगणिते

**परिसञ्चर** पु॰ सृष्टिकालादूर्द्ध्वं सञ्चरति परि+सम्–चर–अच् । प्रतिसञ्चरकाले सृष्टिप्रलयकाले "त्रिविधः सर्वभूतानां कीर्त्त्यते परिसञ्चरः । अनावृष्टिर्भास्कराश्च घोरः संवर्त्तकोऽनलः । मेघो ह्येकार्णवो वायुस्तथा रात्रिर्महात्मनः" वराहपु॰ ।

**परिसमूहन** परि+सम्–ऊह भावे ल्युट् । यज्ञादौ अनलोपरि १तृणैः समिदाधाने परितः पतिततृणादेः प्रक्षिप्य अग्निमध्ये २प्रक्षेपरूपव्यापारभेदे च कात्या॰श्रौ॰४।१२।१८। ३अग्नेः समन्तात् मार्जने च ।

**परिसर** पु॰ परि+सृ–अप् । १नदीनगरपर्वतादेः पर्य्यन्तभूमौ अमरः २मृत्यौ ३विधाने मेदि॰ ।

**परिसर्प** पु॰ परि+सृप–भावे घञ् । १परितो जलादिना वेष्टने २समन्तात् गमने च हेम॰। ३सारस्वतयागभेदे न॰ आश्व॰ १२।६।२२

**परिसर्य्या** स्त्री परि+सृ–भावे क्यप् । सर्वतो गमने अमरः ।

**परिसारक** त्रि॰ परि+सृ–ण्वुल् । १परितो गन्तरि । ततः मत्वर्थे अण् । पारिसारक तच्छब्दयुक्ते अध्याये अनुवाके च पु॰।

**परिस्य(ष्य)न्द** पु० परि+स्यन्द–भावे घञ् अप्राणिकर्तृकत्वे वा षत्वम्। एतादृः क्षरणे प्राणिकर्तृके हस्त्यादेर्मदक्षरणे तु न षत्वम्।

**परिस्रव** परि+स्रु–भावे अप्। परितः क्षरणे

**परिस्राव** पु० परि+स्रु–णिच्–अच्। सुश्रुतोक्ते परिस्रवजनके १उपद्रवभेदे "क्रूरकोष्ठस्यातिप्रभूतदोषस्याल्पदोषघ्नमवचारितं सदुत्क्लिश्य दोषान्निःशेषानपहरति ततस्ते दोषाः परिस्रावमापादयन्ति तत्र दौर्बल्योदरविष्टम्भारुचिगात्रसदनानि भवन्ति सवेदनौ चास्य पित्तश्लेष्माणौ परिस्रवतस्तं परिस्रावमित्याचक्षते। परि+स्रु भावे बा० घञ्। २परिक्षरणे च

**परिस्राविन्** त्रि० परि+स्रु–णिनि। १क्षरणयुक्ते सुश्रुतोक्ते पञ्चविधभगन्दरमध्ये २तद्भेदे च "श्लेष्मा तु प्रकुपितः समीरणेनाधःप्रेरितः पूर्ववदवस्थितः शुक्लावभासां स्थिरां कण्डूमतीं पिडकां जनयति सास्य कण्ड्वादीन्वेदनाविशेषाञ्जनयत्यप्रतिक्रियमाणा च पाकमुपैति व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवत्युपेक्षितश्च यातमूत्रपुरीषरेतांसि विसृजति तं भगन्दरं परिस्राविणमित्याचक्षते" तत्र तल्लक्षणमुक्तम्।

**परिस्रुत्** स्त्री परि+स्रु–क्विप्। १सुरायाम् अमरः। २परितः क्षरणयुक्ते त्रि० "अन्नात् परिस्रुतो रसम्" यजु० १९।७५। भावे सम्प० क्विप्। ३क्षरणे स्त्री।

**परिस्रुत** त्रि० परि+स्रु–क्त। १पुष्पादिभ्यो निःसृतसारूपे पदार्थे "ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्" यजु० २।३४ "परिस्रुतं वहन्तीः पुष्पेभ्यो निःसृतं सारं वहन्त्यः। तच्च सारं त्रिविधम् ऊर्जशब्देन घृतशब्देन पयःशब्देन चाभिधेयम्। तत्रोर्जशब्दोऽन्नगतं स्वादुत्वमभिधत्ते। घृतपयसी प्रसिद्धे" वेददी०। २मदिरायां स्त्री मेदि०।

**परिहनु** अव्य० हन्वोरुपरि अव्ययी०। हन्वोरुपरि ततः परिमुखा० भवार्थे ण्य। पारिहनव्य तत्र भवे त्रि०

**परिहस्त** अव्य० परिवर्जने अव्ययी०। हस्तस्य वर्जने तस्य निरुदकादित्वात् अन्तोदात्तता।

**परि(री)हार** पु० परि+हृ–घञ् वा दीर्घः। १अवज्ञायां अनादरे शब्दरत्ना०। २दोषाद्युद्धारणे च

**परिहार्य्य** त्रि० परि+हृ–कर्मणि ण्यत्। १परिहर्त्तव्ये २त्यक्तव्ये हिरूपकोषः। ३उद्धार्ये च

**परि(री)हास** पु० परि+हस–घञ् वा दीर्घः। नर्मणि त्रिका०

**परिहृत्** त्रि० परि+हृ–क्विप्। परिहृत्य गन्तरि ऋ०६।४।५

**परीक्षक** त्रि० परि+ईक्ष–ण्वुल्। १तर्कैण प्रमाणैर्निर्द्धार्यनिर्द्धारणाय शास्त्रपरिशीलनेन प्राप्तबुद्धिप्रकर्षे दृष्टान्तशब्दे ३६७२ पृ० दृश्यम्। २व्यवहारादौ दिव्यभेदपरीक्षाकारके च।

**परीक्षण** न० परि+ईक्ष–भावे ल्युट्। राज्ञा अमात्यादेः चारादेश्च १दुष्टादुष्टत्वनिरूपणे तर्कप्रमाणाभ्यां २वस्तुतत्त्वावधारणे च "भेदोपजापावुपधाधर्माद्यैर्यत् परीक्षणम्" अमरः।

**परीक्षा** स्त्री परि+ईक्ष–भावे अ। दिव्यशब्दे ३५८८ पृ० ष्ठादौ दर्शिते १दिव्यशब्दार्थे तर्कप्रमाणादिना २वस्तुतत्त्वावधारणे च। [द्यवधारके।

**परीक्षिन्** त्रि० परि+ईक्ष–णिनि। युक्तिप्रमाणैर्वस्तुस्वरूपा-

**परीणस्** त्रि० परि+नस–कौटिल्ये धातूनामनेकार्थत्वात् व्याप्तौ क्विप् दीर्घः। १व्यापके ऋ०५।१०।१ भा०। परि+नह बा० डसुन् दीर्घः। २परितोनद्धे च ऋ०१।१२९।९

**परीणसा** अव्य० परि+नस–व्याप्तौ बा० आत् दीर्घः। बहुपदार्थे निघण्टुः ऋ०६।९७।९ उदा०।

**परीणह्** त्रि० परितः नह्यते बध्यते नह्–क्विप् दीर्घः। १परितो बन्धने २तत्कर्मणि च। झलि पदान्ते हस्य घः।

**परीत** त्रि० परि+इ–क्त। परितो गते [भा०व० ११०अ०

**परीप्सा** स्त्री परि+आप्–सन्–भावे अ। प्राप्तुमिच्छायाम्

**परीर** न० पूर्य्यतेऽनेन पृ–करणे ईरन्। फले उज्ज्वल०।

**परीरण** पु० परि+रण–अच् दीर्घः। १कमठे २दण्डे ३पट्टशाटके च मेदि०।

**परीरम्भ** पु० परि+रम्भ–घञ् वा दीर्घः। आलिङ्गने अमरः

**परीष्टि** स्त्री परि+इष–क्तिन्। १अन्वेषणायाम् २परिचर्य्यायाञ्च हेमच०।

**परीसार** पु० परि+सृ–घञ् दीर्घः। सर्वतोगमने हेमच०।

**परु** पु० पॄ–उन्। १समुद्रे २स्वर्गे ३ग्रन्थौ ४पर्वते च संक्षिप्त०

**परुच्छेप** पु० परूंषि शेफोऽस्य पृषो०। ऋषिभेदे निरु०१०।४२

**परुत्** अव्य० परस्मिन् वर्षे नि०। परवर्षे इत्यर्थे अमरः। तत्र भवः त्न। परुत्न परवर्षभवे त्रि०।

**परुद्वार** स्त्री परुः समुद्रो पर्वतो वा द्वारमस्य। घोटके शब्दमाला स्त्रियां जातित्वात् ङीष्।

**परुष** न० पॄ–उषन्। १निष्ठुरवचने २नीलझिण्ट्याम् अमरः ३फलभेदे परूषके भावप्र०। [चके त्रि०।

**परुषोक्ति** स्त्री कर्म०। १निष्ठुरोक्तौ। वङ्ग०। २कटुवाक्य-

**परुस्** न० पॄ–उसि। पर्व्वणि (गाँट) पर्ग्रन्थि अमरः।

**परूषक** न० पॄ–ऊषन्। फलभेदे (फलसा) "परूषकं कषायाम्लमामं पित्तकरं लघु। तत् पक्वं मधुरं पाके शीतं विष्टम्भि बृंहणम्। हृद्यं वट्पित्तदाहास्रज्वरक्षयसमीरहृत्" भावप्र०।

**परेत** त्रि० परा+इ–क्त। मृते अमरः।

**परेतराज्(ज)** पु० ६त० टच्समा० परेतेषु राजते राज–क्विप् वा। यमे अमरः।

**परेतवास** पु० ६त०। श्मशाने।

**परेद्यवि** अव्य० परस्मिन् अह्नि नि०। परदिने इत्यर्थे

**परेद्युस्** अव्य० परस्मिन् अह्नि पर+एद्युस्। परदिने इत्यर्थे

**परेष्टुका** स्त्री परैरिष्यते इष–तु स्वार्थे क। बहुप्रसवायां गवि अमरः।

**परैधित** त्रि० परैरेधितः एध+णिच्–क्त ३त०। अन्यपालिते कोकिलादौ अन्येनापरवर्द्धिते अमरः।

**परोक्ष** अव्य० अक्ष्णः परम् अव्ययी० सुट् नि० पूर्वनिपातः। १अप्रत्यक्षज्ञाने "परोक्षज्ञानमनाहार्य्यं निश्चयश्चेति सिद्धान्तः" इत्युक्तेस्तज्ज्ञानस्यानाहार्य्यत्वम् निश्चयरूपत्वञ्च बोध्यम्। अर्श आद्यच्। २तद्विषये त्रि०। ३तपस्विनि शब्दमाला। [स्त्रियाम्।

**परोढा** स्त्री परेणोढा ३त०। परेण कृतविवाहायां

**परोपकार** पु० ६त०। परस्य हितादिसम्पादनव्यापारे

**परोबाहु** पु० परोबाहुर्बन्धोऽस्य नि० सुट्। परसम्बन्धयुक्ते शत०ब्रा०६।५।२।१० [शत०ब्रा० १४।८।१५।१

**परोरजस्** त्रि० रजसः परः सुट् नि०। १रागाभावे २विरक्ते

**परोलक्ष** न० लक्षात् परः सुट् नि०। १लक्षसंख्यातोऽधिकसंख्यायाम् २तदन्विते च।

**परोवरीण** त्रि० "परांश्चापरांश्चानुभवति ख अवरस्योत्त्वं निपात्यते। श्रेष्ठाश्रेष्ठयुक्ते।

**परोवरीयस्** परश्च वरीयांश्च नि० पूर्वपदे सुट्। अत्यन्तश्रेष्ठे परमात्मनि "परोवरीयसोह लोकान् जयति" छा०उ०।

**परोष्णी** स्त्री परा+उष्णा–कर्म० गौरा० ङीष्। तैलपायिकायाम् अमरः। [मुष्टचर्म्मे अमरः।

**पर्कटि(टी)** स्त्री पृच–अटि न्यङ्क्वा० कुत्वम्। (पाकुड़)

**पर्कटिन्** पु० पृच–अटिनि न्यङ्क्वा० कुत्वम्। मुष्टचर्म्मे (पाकुड़) "पर्कटी कटुकः प्रोक्तः शिशिरश्च कषायकः। रक्तदोषहरो मूर्च्छाप्रलापभ्रमनाशनः" राजनि० तद्गुणा उक्ताः।

**पर्जनी** स्त्री पृज–करणे ल्युट् ङीप्। दारुहरिद्रायाम् अमरः।

**पर्जन्य** पु० पृषु–सेचने अन्य जान्तादेशः। १इन्द्रे २मेघे मेदि० "यज्ञाद्भवति पर्जन्यः" इति मनुः। ३मेघशब्दे विश्वः पर्जन्य इव सर्वान् कामानभिवर्षति। ४विष्णौ पु०। "कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः" विष्णुस० ५दारुहरिद्रायां स्त्री राजनि०।

**पर्जन्यपत्नी** स्त्री पर्जन्यः पतिरस्याः सपूर्वकत्वात् पत्युर्न ङीप्। वशायां "वशा पर्जन्यपत्नी देवा अप्येति ब्राह्मणा अधस्ते भद्रे! पर्जन्यो विद्युतस्ते स्तना वशे!" अथ० १०।१०।६। ६त०। २इन्द्रपत्न्यां शच्याञ्च।

**पर्ण** हरितीकरणे अ०चु० उभ०सक०सेट्। पर्णयति-ते अपपर्णत्-त। वसन्तः पर्णयति चम्पकम्।

**पर्ण** न० पॄ–न, पर्ण–अच् वा। १पत्रे २पक्षे च "सुपर्णो गरुडो मतः" इति। ३पलाशवृक्षे पु० ४ताम्बूले न० ५पत्रयुक्ते त्रि० अमरः। "पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः। जीर्णं पर्णं हरेदायुः शिरा बुद्धिप्रणाशिनी" आह्नि० त०। तन्मूलादिसेवननिषेधः। "अनिधाय मुखे पर्णं पूगं खादयते परम्। मतिभ्रंशात् दरिद्रः स्यादन्ते न स्मरते हरिम्" | अत्र परमित्युक्तेः धन्याकादियोगे न दोषः। पर्णस्येदम् शिवा० अण्। पार्णं तत्सम्बन्धिनि त्रि०। अस्त्यर्थे नडा० छ कुक् च। पर्णकीय तद्युक्तदेशे त्रि०। तस्यादूरनगरादि वराहा० अण् पार्ण तस्यादूरदेशादौ त्रि०। बहुत्वे तस्य लुक् पर्णाः इत्येव। तत्र भवः "कृकणपर्णात् भरद्वाजे" पा० भवादौ छ। पर्णीय भरद्वाजदेशभवे अन्यत्र अणेव पार्ण तत्रार्थे त्रि०। क्षुद्रं पर्णम् ङीप्। १क्षुद्रपर्णे स्त्री पर्णं पण्यं अपरादि० ठन्। पर्णिक तद्विक्रेतरि स्त्रियां षित्त्वात् ङीप्।

**पर्णक** पु० ऋषिभेदे तस्य गोत्रापत्यम् इञ् पार्णकि तस्यो-त्रापत्ये बहुत्वे तु उपका० तस्य वा लुक्।

**पर्णकार** पुंस्त्री० पर्णं करोति उत्पादयति अण् उप०स०। (बारुइ) ख्याते जातिभेदे ताम्बूलजीविनि स्त्रियां जातित्वात् ङीष्। [रचिते क्षुद्रगृहे (पातेरकुँड़े)।

**पर्णकुटी** स्त्री पर्णं निर्मिता कुटी शा०त०। पत्रमात्रेण

**पर्णकूर्च्च** पु० पर्णकृच्छोक्तद्रव्याणां त्रिरात्रोपवासान्ते विशेषतो भोजननिष्पादितव्रतभेदे यथाह मिता०। "यदा तु पर्णादीनामेकीकृतानां क्वाथस्त्रिरात्रान्ते पीयते तदा

पर्णकूर्चः यथाह यमः "एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः । क्वाथयित्वा पिबेदद्भिः पर्णकूर्चोऽभिधीयते" इति । एतानि पर्णकृच्छ्रोक्तद्रव्याणि ।

**पर्णकृच्छ्र** पु॰ पञ्चाहसाध्ये व्रतभेदे "पर्णोदुम्बरराजीवविल्वपत्रकुशोदकैः । प्रत्येकं प्रत्यहं पीतैः पर्णकृच्छ्र उदाहृतः" याज्ञ॰ 'पलाशोदुम्बरारविन्दश्रीवृक्षपर्णानामेकैकेन क्वाथितमुदकं प्रत्यहं पिबेत् । कुशोदकञ्चैकस्मिन्नहनीति पञ्चाहसाध्यः पर्णकृच्छ्रः" मिता॰।

**पर्णखण्ड** पु॰ पर्णमेव खण्डः खण्ड्यते यस्य पुष्पहीनत्वात् । १पुष्पहीने वनस्पतौ वृक्षे शब्दच॰ । समूहे खण्डच् । २पर्णसमूहे न॰ ।

**पर्णचोरपट** पु॰ महादेवे भा॰शा॰ २८६अ॰ ।

**पर्णचोरक** पु॰ पर्णं चोरयति चुर–ण्वुल् । चोरनामगन्धद्रव्ये राजनि॰ ।

**पर्णनर** पु॰ पर्णनिर्मितः नर इव । अस्थ्यलाभे मृतस्य दाहार्थं पर्णनिर्मिते नराकृतौ पुत्तलिकाभेदे तद्विधानं शु॰त॰ उक्तं यथा

"अथास्थ्यलाभे पर्णनरदाहः । तत्राश्वलायनगृह्यपरिशिष्टम् "अस्थिलाभे पलाशानां त्रीणि षष्टिशतानि च । पुरुषप्रतिकृतिं कृत्वा दहेत मन्त्रपूर्वकम् । अशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत् । उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा । बाहुभ्याञ्च शतं दद्यात् दद्यादङ्गुलिभिर्दश । द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च । ऊरुभ्याञ्च शतं दद्यात्त्रिंशतं जानुजङ्घयोः । पादाङ्गुलिषु च दश एतत् प्रेतस्य लक्षणम् । ऊर्णासूत्रेण संवेष्ट्य यवपिष्टेन लेपयेत्" । आदिपुराणम् "तदलाभे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि । शतैस्त्रिभिस्तथा षष्ट्या शरपत्रैर्विधानतः" । तदलाभेऽस्थ्यलाभे । अत्र पलाशपत्रशरपत्रयोस्तुल्यत्वेनोपादानात् आश्वलायनगृह्येऽपि प्रतिकृतौ शरपत्रस्य लाभः । अत्राचाराद्योग्यत्वाच्च शरपत्रैः पुत्तलकं कृत्वा शिरःप्रभृतिषु पलाशपत्राणि देयानि ततो वेष्टनमूर्णासूत्रेण, लेपनं यवपिष्टेनेति । अत्राशौचाभ्यन्तरे दाहे शेषाहेन शुद्धिः तदुत्तरपर्णनरदाहे तु त्रिरात्रम् । "एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इत्यादिपुराणात् । यज्ञपार्श्वः "पुनश्चेदुपलभ्येरन् तदस्थीनि कदाचन । तदलाभे पलाशस्य सम्भवे हि पुनःक्रिया" । हि यस्मात्तदलाभेऽस्थ्यसंप्राप्तौ पलाशस्य तत्कृतपुत्तलकस्य दाहक्रिया पुनरपि सम्भवे लाभेऽस्थिदाहक्रिया विहिता तस्माद्यदि पुनरस्थीनि प्राप्यन्ते तदा पुनर्दाहे त्रिरात्राशौचे कर्त्तव्ये न पुनः पिण्डादिदानं वक्ष्यमाणयुक्तेः । "अशौचानन्तरं चेत् स्याद्दाहः पर्णनरस्य च । त्र्यहाच्छुद्ध्यन्ति च तथा सन्निकृष्टाः सगोत्रजाः । दर्शं दहेत् "पर्णनरं दहेन्नैव विना दर्शं कथञ्चन । अस्थ्यलाभे तु दर्शेऽपि ततः पर्णनरं दहेत्" इति दीपकलिकायां सुमन्तुवचनात् । दर्शं इत्यत्राष्टम्यामिति क्वचित् पाठः । अष्टमी कृष्णा सन्देहे पितृकर्म्मणि कृष्णपक्षप्राधान्येनोक्तेः । "नरं पर्णं दहेन्नैव प्राक् त्रिपक्षात् कथञ्चन । त्रिपक्षे तु न वै दद्यात् दर्शं प्राप्य ह्यनग्निकः" । इत्यशौचव्यपगमे बोध्यम् । यथाह शुद्धिरत्नाकरे यमः "अशौचमध्ये यत्नेन दाहयेदुक्तया दृता । कृष्णपक्षे पञ्चदश्यामष्टम्यां वा समाहितः । एकादश्यां विशेषेण ततः प्रभृति सूतकम् । त्रिरात्रं सर्ववर्णानामेव धर्मो व्यवस्थितः ।" कृष्णपक्ष इत्यत्राशौचव्यपगमे बोध्यम् । वायुपुराणे "पर्णनरं दहेन्नैव प्राक् त्रिपक्षात् कथञ्चन । पितृहा मातृहा स्याच्चैव दर्शं दहेत् यदि ।" विष्णुपु॰ "त्रिपक्षे तु गते पर्णनरं दद्यादनग्निकः । त्रिपक्षाभ्यन्तरे राजन् ! नैव पर्णनरं दहेत् । तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः ।" दहेदिति शेषः । "अशौचाभ्यन्तरे यदि दाहं न कुर्य्यात् तदा मरणदिनावधि त्रिपक्षानन्तरं दाहः कार्य्य इत्यर्थः" इति हरिदासतर्काचार्य्याः । "पर्णं नरं दहेन्नैव विना दर्शं कदाचन । अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत्" इति दीपकलिकायां सुमन्तुवचनाद्दर्शे दाहः । अत्राष्टमीति क्वचित् पाठः । यमः "त्रिपक्षाभ्यन्तरे राजन् ! नैव पर्णनरं दहेत् । तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः" । अष्टमीत्यत्र कृष्णाष्टमीत्यर्थः । पितृकर्म्मणि कृष्णपक्षप्राधान्येनोक्तेः इति हरिदासतर्काचार्य्यलिखनात् । एतच्चाशौचव्यतिरिक्तविषयम्" । अत्र नक्षत्रादिकालभेदः शु॰चि॰ पी॰ उक्तो यथा

"शुक्रारार्किषु दर्शभूतमदने नन्दा सतीक्ष्णोग्रभे पौष्णे वारुणभे त्रिपुष्करदिने न्यूनाधिमासेऽयने । याम्येऽब्दात् परतश्च पातपरिघे दैवेज्यशुक्रास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो न पक्षे सिते । जन्मप्रत्यरितारयोर्मृतिदुखान्त्येऽज्ञे च कर्त्तुर्न सन् मध्यो मैत्रमघादितिध्रुवविशाखाहर्य्यर्क्षे द्वेऽपि च । श्रेष्ठो-

ऽर्कैज्यविधोर्दिने श्रुतिकरस्वात्यश्विपुष्ये तथा त्वाशौचात्परतो विचार्य्यमखिलं मध्ये यथासम्भवम्” सु०चि० । “एवंविधे दिने शवस्य मृतस्य प्रतिकृतिः शरपत्रादिना सावयवत्वकल्पनं तस्य दाहो न कार्य्यः कुतः यतो द्विविधः प्रेतसंस्कारः प्रत्यक्षशरीरस्यैकः प्रतिकृतेरन्यः तत्र प्रत्यक्षशरीरसंस्कृतौ शुभाशुभदिनविचाराभावः यदाह गार्ग्यः “प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेदिति” प्रतिकृतिसंस्कारस्य हि कालत्रयम् अशौचमध्ये वर्षमध्ये वर्षानन्तरं चेति अत्राशौचमध्ये यदि प्रतिकृतिसंस्कारश्चिकीर्षितस्तदा यथासम्भवं दिनशुद्धिर्विचार्य्या वर्षमध्ये वर्षानन्तरं वा प्रतिकृतिसंस्कारे अवश्यं कालशुद्धिर्विचार्य्या एतदप्याह गार्ग्य एव “आशौचमध्ये क्रियते पुनःसंस्कारकर्म्म चेत् । शोधनीयं दिनं तत्र यथासम्भवमेवमेव तु । आशौचविनिवृत्तौ चेत् पुनः संस्क्रियते मृतः । संशोध्यैव दिनं पाश्चमूर्द्ध्वं संवत्सराद्यदि” । प्रेतकार्य्याणि कुर्वीतेति शेषः अतएवोक्तम् “आशौचात्परतो विचार्य्यमखिलं मध्ये यथासम्भवमिति” । एतद्वाक्यमत्रैव स्पष्टं व्याख्यास्यते तत्र दिनशुद्धिरुच्यते शुक्रारेत्यादिना शुक्रः प्रसिद्धः आरो मङ्गलः आर्किः शनिः एषां वारे प्रतिकृतेर्दाहो नेति प्रत्येकं सम्बन्धः । तथा दर्शोऽमावस्या भूतश्चतुर्दशी मदनस्त्रयोदशी नन्दाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु दाहो न कार्य्यः यदाह मरीचिः “नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे । पितृश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् । एकादश्यां तु नन्दायां सिनीवाल्यां भृगोर्दिने । नभस्ये च चतुर्दश्यां कृत्तिकासु त्रिपुष्करे” । द्वितीयवाक्यमतिदुष्टताकथनार्थं सिनीवाल्याममावास्यायां भृगोर्दिने शुक्रवारे इति सम्बन्धो व्याख्येयः अत्र श्राद्धं न कुर्वीतेत्यनुषङ्गः श्राद्धशब्देनात्र प्रेतक्रिया विवक्षिता । तथा तीक्ष्णोग्रभे मूलज्येष्ठार्द्राश्लेषास्तीक्ष्णानि उग्राणि पूर्वात्रयभरणीमघाः पौष्णे रेवत्यां वारुणे शतभे त्रिपुष्करदिने भद्रातिथयः सूर्य्यभौमशनिवाराः कृत्तिकापुनर्वसूत्तराफाल्गुनी विशाखोत्तराषाढ़ापूर्वभाद्रपदाः एतत्त्रितयसंहतिरूपे दिने प्रतिकृतेर्दाहो न कार्य्य इति केचिद्व्याकुर्वते तत्र पूर्वपद्येनैव निषेधसत्त्वात् ननु प्रत्यक्षमृतौ स निषेधो न तु प्रतिकृतिदाहे एवं तर्हि सम्मतिवाक्याभावाच्चायमर्थ इति ब्रूमः । यदुक्तं ज्योतिःपराशरेण “साधारणध्रुवोग्रे मैत्रे नो शस्यते मनुष्याणाम् । प्रेतक्रिया कथञ्चित् त्रिपुष्करे यमलधिष्ण्ये वेति” अत्र त्रिपुष्करशब्देन विशिष्टयोगो विवक्षित इति चेत् अत्र ब्रूमः त्रिचरणनक्षत्राण्येव त्रिपुष्करपदेनोच्यन्तेऽतो हेमाद्रिणापि कृत्तिकादीन्येव त्रिचरणानि भानि त्रिपुष्करशब्देन व्याख्यातानि अतएवाह कश्यपः “भरण्यार्द्रा मघा श्लेषा मूलं त्रिचरणानि च । प्रेतक्रियासु दुष्टानि धनिष्ठाद्यं च पञ्चकम्” इति पराशरवाक्ये बहूनि प्रेतकृत्ये सामान्यतो निषिद्धानि कश्यपवाक्येऽन्यान्यतिदुष्टान्युक्तानि इदमेवाभिप्रेत्य ग्रन्थकृतोक्तानि तत्र धनिष्ठाया अपहरणं मध्यमेषु वक्ष्यमाणत्वात् । अथ न्यूनाधिमासे क्षयमासे अधिमासे च शवप्रतिकृतिदाहो न कार्य्यः । उक्तञ्च ज्योतिर्निबन्धे गरुड़पुराणे “न कुर्य्यात् गुरुशुक्रास्ते पौषे चापे मलिम्लुचे । विलम्बितं प्रेतकार्य्यं गयां गोदावरीं विनेति” मेधातिथिः “अस्तं गते गुरौ शुक्रे पौषाषाढाधिमासके । प्रेतकार्य्यं न कुर्वीत गयां गोदावरीं विनेति” अधिमासस्योपलक्षणत्वात् क्षयमासेऽपि न कार्य्यं प्रेतकार्य्यमित्यर्थः । अतएव मूले न्यूनमासनिषेधः । अथाब्दैकस्माद्वर्षात्परतः ऊर्द्ध्वं याम्येऽयने दक्षिणायने कर्कादिषड्राशिस्थिते सूर्य्ये न दाहः कार्य्यः अर्थादुत्तरायणं सम्यक्, उपलक्षणत्वादशुभदिनमपि निषिद्धम् उक्तञ्च गार्ग्येण “ऊर्द्ध्वं संवत्सराद्यदि” प्रेतकार्य्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् । कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनत्रयम्” । इति गारुड़पुराणेऽपि “न कुर्य्याद्गुरुशुक्रास्ते पौषे चापे मलिम्लुचे । विलम्बितं प्रेतकार्य्यं गयां गोदावरीं विनेति” । अत्र वाक्ये पौषचापयोर्निषिद्धत्वान्मार्गशीर्षस्य मध्यमत्वं प्रतीयते तदावश्यकविषयं प्रथमवर्षे तु दक्षिणायनमपि शुभमेव । पातपरिघे व्यतिपाताख्ये योगे गणितागते व्यतीपाताख्ये महापात इत्यपि केचित् परिघाख्ये योगे तथा देवेज्यशुक्रास्तके गुरुशुक्रयोरस्ते अत्र स्वार्थे कः । तथा भद्रावैधृतयोः भद्रावैधृतौ प्रसिद्धौ गणितसाध्ये वैधृताख्ये महापाते इत्यपि केचित् । तथा सिते पक्षे शुक्लपक्षे शवप्रतिकृतेर्दाहो न कार्य्यः । यदुक्तं नारदेन श्राद्धलक्षणाध्याये “चतुर्दशीं तिथिं नन्दां शुक्रारार्किवासरम् । सितेज्ययोरस्तमयं द्व्यङ्घ्रिभं विषमाङ्घ्रिभम् । शुक्लपक्षं च सन्त्यज्य पुनर्दहनमुच्यते” इति अन्यत्रापि “नन्दा मदनभूतायां पातवैधृतविष्टिषु । शुक्रार्किभौमपरिघध्रुवमिश्रोग्रमूलभे । कर्त्तुश्चन्द्रेऽष्टवेदान्त्ये जन्मप्रत्यरितारके ।

त्रिपादृभे सिते पक्षेऽयने याम्येऽब्दतः परम् । शवप्रतिकृतेर्दाहः शुक्रेऽस्तेऽधिकमासके । नेष्टो मध्यो द्विपानुमैत्रब्रह्मादितिभगध्रुवे" इति तथा कर्तुः प्रेतस्याद्याधिकारिणो जन्मप्रत्यरितारयोः जन्मतारा उत्पत्तिनक्षत्रं दशममेकोनविंशं चेति प्रत्यरितारा जन्मभात् पञ्चमं चतुर्दशं त्रयोविंशं चेति । कथा कर्तुर्स्तितिथुखान्त्येऽब्दे स्वजन्मराशेरष्टमचतुर्थद्वादशस्थे चन्द्रे सति दाहो न सन् न प्रशस्तः" ।

वराहपुराणे "चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् । प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा । करणे विष्टिसंज्ञे च शनैश्चरदिने तथा" । विष्टिसंज्ञं करणं भद्रा । महाभारते "नक्षत्रेण न कुर्वीत यस्मिन् जातो भवेन्नरः । न प्रोष्ठपदयोः कार्यं तथाग्नेयेऽपि भारत ।। दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्" इति प्रोष्ठपदयोः पूर्वभाद्रपदोत्तराभाद्रपदयोः आग्नेये कृत्तिकायाम् । कालविशेषादिकं नारदेनोक्तम् "दिनोत्तरार्द्धे तत्कर्तुश्चन्द्रतारावलान्विते । पापग्रहे बलयुते शुक्रलग्नांशवर्जनम् । तत्पुनर्दहनं प्रोक्तमिति "अथ शवप्रतिकृतिदाहे मध्यनक्षत्राण्युच्यन्ते मैत्रमनुराधा भगः पूर्वफाल्गुनी अदितिध्रुवविशाखाः प्रसिद्धाः इन्द्राग्निभं स्वगचित्रा धनिष्ठा । ज्ञेऽपि बुधवारेऽपि शवप्रतिकृतिदाहो मध्यमः न शुभफलदो नाप्यनिष्टफलद इत्यर्थः उक्तञ्च कश्यपेन "फल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः । द्वे आषाढे विशाखा च भानि द्विचरणानि च । एतानि किञ्चिद्दुष्टानि वर्जयेत् सति सम्भवे" इति । "नेष्टो मध्यो द्विपानुमैत्रब्रह्मादितिभगध्रुवः" इति चेत्युक्तो बुधे सम्भवाभावः । अथार्केज्यविधोरर्केज्याभ्यां सहितो विधुरिति मध्यमपदलोपी समासः । सूर्यगुरुचन्द्राणां दिने वारे दाहः श्रेष्ठस्तथा तेन करणेन स्तुतिकरस्वात्यश्विपुष्येषु निषिद्धनक्षत्रगणाद्बहिर्भूतेषु पञ्चसु भेषु शवप्रतिकृतेर्दाहः श्रेष्ठोऽनुष्ठीयमानः शुभफलद इत्यर्थः । आशौचान्तरत इत्यादिव्याख्यातार्थं ननु प्रतिकृतिसंस्कारः किंनिमित्तम् उच्यते । देवान्मानुषाद्वाऽपराधान्मृतस्य विधिवद्दाहो नाभूत् किन्तु काष्ठवद्दाहो जातोऽथ वा परदेशगतस्य चौरदंष्ट्र्यादिहतस्य तद्भीतेरेव केनचित् काष्ठवद्दाहोऽपि न कृतोऽथ वैकाकित्वाच्च जातस्तदा प्रतिकृतिदाहो विधेयः उक्तञ्च ब्रह्मपुराणे "अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः । तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि । सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः । एवं पर्णशवं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इति । तदभावे देहाभावे तथाग्निना गृह्याग्निना अपिशब्दात् स्त्रीमरणे तद्देहाभावे स्त्र्यपि पलाशोत्थैः पत्रैः कार्य्येत्यर्थः । आहिताग्नेस्तु श्रौतसूत्रे विधिमाहापस्तम्बः "यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत स यां दिशमभिप्रस्थितस्तां दिशमस्याग्निभिः कक्षं दहेयुरपि वाजसनेयिनामिति त्रीणि षष्टिशतानि पलाशवृन्तानि तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति वा" । अत्र पक्षद्वयं यथाप्रवासगतो यदि न प्रज्ञायेत प्रमीत इति यतो मृत इत्येव निर्णये स यां दिशं प्रस्थितो भवेत्तां दिशं प्रति यः कक्षोऽकृष्टोभूमिप्रदेशस्तृणवांस्तं देशमस्य मृतस्य श्रौताग्निभिस्तूष्णीं दहेयुर्बान्धवाः पितृमेधविधिना । अयमेकः पक्षः । अपि वा अथवा । त्रीणि षष्ट्युत्तराणि शतानि ३६० पलाशवृन्तानि पलाशानि पर्णानि यत्र तिष्ठन्ति तादृशानि वृन्तानि संपाद्य तैर्वृन्तैः पलाशवृक्षीयैस्त्रिपत्रैर्वृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामाकृतिमस्याग्निभिः पितृमेधविधिना दहेयुरिति वाजसनेयिनां मतमिति द्वितीयः पक्षः । पराशरेण तु कुशैः प्रतिकृतिः कार्येत्युक्तम् । "कृष्णाजिने समास्तीर्य कुशैस्तु पुरुषाकृतिमिति" कुर्यादिति शेषः । अत्र पलाशवृन्तकुशविध्योरन्यतरेणानुष्ठानं व्रीहियववत्तुल्यबलत्वात् । शवप्रतिकृतिदाहानुष्ठानविधिस्तु शौनकाद्युक्त दिशा ज्ञेयः नात्राप्रस्तुतत्वाल्लिख्यते अयं च पलाशवृन्तादिभिः प्रतिकृतिविधिरस्थ्यलाभे यदा तु मृतास्थ्नां लाभस्तदा तैरेव प्रतिकृतिः कार्य्या । यदुक्तं छन्दोगसूत्रे "अथातः पुनर्दाहविधिं व्याख्यास्यामो यदि शरीरं नश्येदस्थीन्यादायास्थीनि क्षीरोदकेन प्रक्षाल्यास्थिभिः कृष्णाजिने पुरुषाकृतिं कृत्वा पूर्ववद्दहेत्तेषामलाभे पलाशवृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा चत्वारिंशता शिरो दशभिर्ग्रीवां विंशत्योरस्त्रिंशतोदरं पञ्चाशता पञ्चाशता बाहू तयोरेव पञ्चभिरङ्गुलीन् सप्तत्या सप्तत्या पादौ तथैवाङ्गुलीरष्टाभिः शिश्नं द्वादशभिर्वृषणं तां कुशैर्वेष्टयित्वा तस्मिन्नेव पूर्ववद्दहेदिति" । अस्यार्थः चत्वारिंशता पलाशवृन्तैः शिरः संपाद्य दशभिर्ग्रीवां विंशत्योरस्त्रिंशता जठरं पञ्चाशतैकबाहुं तथैव पञ्चाशताऽपरम् पञ्चभिः पञ्चभिरङ्गुलीन् तथा सप्तत्या सप्तत्या पादद्वयं तत एव

पञ्चभिरङ्गुलीन् एवं पञ्च पञ्च षष्ठ्यैकः पादः सम्पन्नः अष्टाभिः शिश्नं द्वादशभिर्वृषणद्वयं एवं च षष्ठ्यधिकत्रिशत्या पलाशवृन्तैरवयवकल्पना भवति तां प्रतिकृतिं तस्मिन्नेव कृष्णाजिने पूर्ववदिति पितृमेधविधिना दहेदित्यर्थः एतादृशे विषये कालनियमः शुक्रारार्किभिन्नेत्यादिनोक्तः यतः "अथातः संप्रवक्ष्यामि यत् पुनर्दहनं नृणाम्" इत्यादिना पद्यसमुदायेन कालशुद्धिमुक्त्वा "अतीतविषये काम्ये न्यूने श्राद्धे महालये। एतत् सर्वं विचिन्त्याशु कुर्याच्छ्राद्धमतन्द्रितः" इति काश्यपेन कालातीतविषयत्वेनाभिधानात्"।

आशौचमध्ये क्रियते चेत्तदा भद्रा भरणी धनिष्ठा पञ्चकादिदोषराहित्यमपेक्षितं, नैव बहुकालव्यापिशुक्रास्तादिदोषापेक्षा कार्येति गर्गवाक्ये यथासम्भवपदस्यार्थः सर्वथा त्वाशौचदिनेषु दुष्टेषु दोषतारतम्येन महादोषत्यागोऽल्पदोषाङ्गीकारो यथा लोकप्रसिद्धिः तादृशे दिने शवप्रतिकृतिदाहो विधेयः सर्वथा दोषरहिते दिने तूत्तम एव सः। अथ यदि मरणश्रवणानन्तराशौचदिनानां राजिकदैविकब्राह्मणाद्यलाभरूपप्रतिबन्धादतिक्रमणमभूत्तदाशौचमस्ति न वेति विचारः राजिकदैविकसम्भावनायां सत्यां सद्य एव शौचं स्यान्नत्वाशौचं यदाह पराशरः "दुर्भिक्षे राष्ट्रसन्तापे आपदां च समुद्भवे। उपसर्गमृते चैव सद्यः शौचं विधीयते" इति। यमबृहस्पती "दैवे भये समुत्पन्ने प्रधानांशे विनाशिते। सद्यः शौचं समाख्यातं कान्तारापदि सम्प्रतीति"। पैठीनसिरपि "विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि। न तत्र सूतकं तद्वत् कर्म यज्ञादि कारयेत्" इति। कालान्तरालभ्यायाङ्कयादियात्रायां तादृशे एव तीर्थकर्मणि तीर्थस्नानदानादिकर्माणि तादृशे विषये आशौचग्रहाभावादेव शवप्रतिकृतिदाहाभावः यदा तु ब्राह्मणाद्यलाभस्तदाशौचपरिग्रहः स्यादेव परन्त्वाशौचदिनानन्तरं वर्षमध्ये दिनशुद्धिमपेक्ष्यैव शवप्रतिकृतिदाहो विधेयः "आशौचस्य निवृत्तौ चेत् पुनः संस्क्रियते मृतः। संशोध्यैव दिनं ग्राह्यमिति" गर्गेणैवकारसहितदिनपदोक्तेः अयमर्थः अत्रापि भद्राभरणीपञ्चकादिदोषः कतिपयदिनव्यापी त्याज्य एव न तु शुक्रास्तादिकबहुकालव्यापिदोषप्रतीक्षा। तदुक्तं ज्योतिर्निबन्धे पितृखण्डे "शुक्रास्तमने चैव देवेज्यस्य तथैव च। प्रेतकार्यं प्रदुष्येत प्रथमं वत्सरं विनेति"। अथ यदि वर्षमध्ये राजिकदैविकाद्युपद्रवः सम्पन्नस्तदा वर्षोत्तरं निषिद्धदक्षिणायनशुक्रास्तादिमहादोषरहिते भद्राभरणीपञ्चकादिदोषरहिते च काले शवप्रतिकृतिदाहः कार्यः उक्तञ्च गार्ग्येण "ऊर्ध्वं संवत्सराद्यदि। प्रेतकार्याणि कुर्वीतश्रेषं तत्रोत्तरायणम्" इत्यादीनि मूलवाक्यानि प्रागभिहितानि। अतएव मूलपद्येऽप्यब्दात्परतो याम्येऽयने तथा देवेज्य शुक्रास्तके शवप्रतिकृतिदाहो न कार्य इति व्याख्येयम्। प्रथमे वर्षे तु नायं दोषः सर्वत्रापि गयागोदावर्य्योस्तीर्थयोः प्राप्तयोः सतोरयं शुक्रेज्यास्तदक्षिणायनादिमहादोषविचारः कोऽपि नास्ति तदुक्तं ज्योतिर्निबन्धे प्रेतमञ्जर्य्याम्। "प्रेतकार्य्याणि सर्वाणि व्रतस्नानजपादिकम्। वर्ज्यं शुक्रेज्ययोरस्ते गयां गोदावरीं विनेति" पी०धा०। अत्र दर्शे विधिनिषेधौ देशाचारभेदात् व्यवस्थाप्यौ पर्णशवपर्णपुत्तलिकादयोऽप्यत्रार्थे।

**पर्णभेदिनी** स्त्री पर्णानि भिनत्ति भिद–णिनि ङीप्। १प्रियङ्गुवृक्षे राजनि०। २पत्रभेदकमात्रे त्रि०।

**पर्णभोजन** पुंस्त्री० पर्णं भुङ्क्ते भुज–ल्यु हेत०। १छागले त्रिका०स्त्रियां जातित्वात् ङीष्। २पत्रभक्षकमात्रे त्रि० भावे ल्युट्। ३पत्रस्य भक्षणे न०। [श०५।१

**पर्णमणि** पु० पर्णवर्णो मणिः शा०त०। हरिन्मणौ अथ०

**पर्णमय** त्रि० पर्णस्य विकारः "ह्यचश्छन्दसि" पा० विकारे मयट्। पर्णस्य विकारे "शरमयं बर्हिः" श्रुतिः स्त्रियां ङीप्। "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" श्रुतिः।

**पर्णमाचाल** पु० पर्णमाचालयति आ+चल+णिच्–अण् वा० सम्। कारवेल्लवृक्षे (उच्छा) शब्दमाला।

**पर्णमुच्** त्रि० पर्णानि मुच्यन्त्यत्र मुच–आधारे–क्विप् हेत०। वृक्षाणां पत्रमोचनाधारे शिशिरकाले।

**पर्णमृग** पु० पर्णचरो मृगः पशुः। पशुभेदे "वनौका वृक्षमार्जारो वृक्षमर्कटिकादयः। एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः"। वनौका वानरः वृक्षमार्जारो वृक्षबिडालः। वृक्षमर्कटिका (रूषी) इति लोके "स्मृताः पर्णमृगाः वृष्याश्चक्षुष्याः शोषिणे हिताः। श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषकाः" भावप्र०

**पर्णरुह्** पु० पर्णं रोहत्यत्र रुह–आधारे क्विप्। पर्णजननाधारे वसन्तकाले।

**पर्णल** त्रि०पर्ण+अस्त्यर्थे सिध्मा०लच्। पत्रयुक्ते [राजनि०।

**पर्णलता** स्त्री पर्णप्रधाना लता शा०त०। ताम्बूलीलतायाम्

**पर्णवल्क** पु० ऋषिभेदे ततः गर्गा० गोत्रापत्ये यञ्। पार्ण-वल्क्य तद्गोत्रापत्ये पुंस्त्री० स्त्रियां यञोपः ङीप्। पार्णवल्की [राजनि०।

**पर्णवल्ली** स्त्री पर्णप्रधाना वल्ली शा०त०। पलाशीलतायाम्

**पर्णवी** त्रि०पर्णमिव वजति–वज-क्विप् वीभावः। खगे ऋ० ८।२।१ भा०। [लतताम्बूले।

**पर्णवीटिका** स्त्री पर्णस्य वीटिका। (पानेर विड़ा) खवकी

**पर्णशद** पु० पर्णानि शद्यन्ते शीर्य्यन्ते शात्यन्ते यत्र शद–संज्ञायां आधारे घ। १पतितपर्णस्थितिदेशे २तद्रूपे रुद्रभेदे च यजु० १६।४६ वेददीपः।

**पर्णशय्या** स्त्री पर्णरचिता शय्या शा०त०। पत्ररचितश-य्यायाम्। [मार्कण्डपु० ५८अ०।

**पर्णशवर** पुंस्त्री० पर्णभक्षणकरः शवरो यत्र। देशभेदे

**पर्णशाला** स्त्री पर्णरचिता शाला शा०त०। १पत्ररचित कुटीरे उटजे अमरः। पर्णमिव शाला यत्र। २ग्राम-भेदे "मध्यदेशे महान् ग्रामो ब्राह्मणानां बभूव ह। गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः। पर्णशालेति विख्यातो रमणीयो नराधिप!" हरिवं० ६८अ०

**पर्णशालाग्र** पु० भद्राश्ववर्षस्थे कुलाचलभेदे तदुपक्रमे "श्वेतपर्णश्च नीलश्च शैवालश्चाचलोत्तमाः। कौरञ्जः पर्णशालाग्रः पञ्चैते तु कुलाचलाः" मार्कण्डपु०।

**पर्णशुष्** पु० पर्णं शुष्यत्यत्र शुष–आधारे क्विप्। इ-च्छायां पत्रशोषाधारे शीतकाले।

**पर्णस** त्रि० पर्णस्यादूरदेशादि तृणा० चतुरर्थ्यां स। पत्र-स्यादूरदेशादौ त्रि०।

**पर्णसि** पु०पृ–पूरणे असि-नुक् च। १जलमध्यस्थगृहे (जल-टुङ्गी) उज्ज्वल०। २पद्मे उणादिकोषः। ३शाके ४अा-भरणक्रियायाम् संक्षिप्तसारः।

**पर्णाढक** पु० ऋषिभेदे तस्य गोत्रापत्यम् इञ् पार्णाढकि तद्गोत्रापत्ये बहुत्वेऽस्त्रियां तस्य लुक्। पर्णाढकाः स्त्रियान्तु पार्णाढक्य इत्येव।

**पर्णाद** त्रि०पर्णमत्ति व्रतार्थम् अद–अण् उप०स०। १व्रतार्थं पत्रभक्षके २ऋषिभेदे पु० भा०व० ४अ०।

**पर्णाशन** पु० पर्णानि अन्नानि अश–ल्यु। १मेघे तस्य पत्र-भक्षणकाले गवल्लाक्षयाभ्रसम्भवप्रसिद्धिः। २पत्रभोजि-मात्रे त्रि०। [श्याम् अमरः।

**पर्णास(सि)** पु० पर्णानि अस्यति अस–अच् इन् वा। तुल-

**पर्णिन्** पु० पर्ण+अस्त्यर्थे इनि। १वृक्षे हेमच० २माषपर्ण्यां स्त्री ङीप् शब्दमाला। ३अप्सरोभेदे स्त्री हरिवं० २२६अ०। पर्णतुल्यवर्णत्वात्तस्यास्तथात्वम्।

**पर्णिल** त्रि० पर्ण+अस्त्यर्थे पिच्छा० इलच् उज्ज्वल०। पर्ण-विशिष्टे पिच्छादिगणस्थत्वे तु नास्य पाठो दृश्यते।

**पर्णोटज** न० पर्णनिर्मितमुटजम् शा०त०। पर्णशालायाम् हारा०। [हिंस पपर्द्द।

**पर्द्द** अपानवायुक्रियायां भ्वा०आत्म०अक० सेट्। पर्द्दते अप-

**पर्द्द** पु० पृ–वा० द। १केशसमूहे उणा०। पर्द्द–भावे घञ्। २अपानवायुशब्दे (पाद)। ल्युट् पर्द्दन तत्रार्थे न० हेमच०

**पर्प** गतौ भ्वा०पर०सक० सेट्। पर्पति अपर्पीत् पपर्प।

**पर्प** न० पृ–प। १गृहे २नवतृणे उणादिकोषः ३खञ्जवाह-नसाधने पीठादौ सि०कौ०। तेन चरति पर्पा० ष्ठन्। पार्पिक पर्पेण गतियुक्ते खञ्जे। स्त्रियां षित्त्वात् ङीष्।

**पर्पट** पु० पर्प+शका०अटन्। (क्षेतपापड़ा) १वृक्षभेदे "पर्पटो वरतिक्तश्च स्मृतः पर्पटकश्च सः। कथितः पांशुपर्य्यायस्तथा कवचनामकः। पर्पटो हन्ति पित्तास्रभ्रम तृष्णाकफज्वरान्। संग्राही शीतलस्तिक्तो दाहनु-द्वातलो लघुः" भावप्र० (पाँपर) ख्याते २पिष्टकभेदे पु० सतान्नशब्दे २१८२ पृ० दृश्यम्। मेदिन्यां कतार्थे क्लीवत्वेन पठितः। ३औषधभेदे पु० मेदि० स्वर्णपर्पट इत्यादि स्वार्थे क। पिष्टकभेदे भावप्र०।

**पर्पटद्रुम** पर्पट इव द्रुमः। कुम्भीवृक्षे राजनि०।

**पर्पटी** स्त्री पर्प–अटन् गौरा० ङीष्। १सौराष्ट्रमृत्तिकायाम् रत्नमाला। २पिष्टकभेदे (पाँपर) उणादिकोषः। ३उत्त-रदेशप्रसिद्धसुगन्धिद्रव्ये भावप्र०। "पर्पटी तुवरा तिक्ता शिशिरा वर्णकृल्लघुः। विषव्रणकण्डुकफपित्तास्रकुष्ठ-नाशिनी" भावप्र०।

**पर्परीक** पु० पृ–ईकन् द्वित्वमभ्यासस्य रुक् च। १सूर्ये उज्ज्वलद० २वह्नौ त्रिका०। ३जलाशये संक्षिप्तसारः

**पर्परीण** पु०पृ–यङ्लुक् वा०ईनन्। १पर्णस्य सिरायां २द्यू-तकम्बले च मेदि०।

**पर्पादि** तेन चरतीत्यर्थे ष्ठन् प्रत्ययनिमित्ते शब्दगणे स च-गणः पा०ग०सू० उक्तो यथा "पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल (पादः पञ्च)" पर्पिक इत्यादि।

**पर्फरीक** न० स्फुर–ईकन् "पर्फरीकादयश्च" उणा० नि०। किसलये नवपल्लवे उज्ज्वद०।

**पर्व** गतौ भ्वा०पर०स० सेट्। पर्वति अपर्वीत् पपर्व।

**पर्य्य(ल्य)ङ्क** पु० परिगतोऽङ्कम् प्रा० समा० "परेश्च घाङ्कयोः

वा रस्य लः । १खट्वायाम् (पालङ्क) अमरः । २वीरासनाङ्के अङ्कस्थापितकरतले यथाह योगसारे वशिष्ठः "एकं पादमथैकस्मिन् विन्यस्योरौ तु संस्थितम् । इतरस्मिन् तथैवोर्व्वीं वीरासनमिदं स्मृतम् । उत्तानिते करतले करमुत्तानितं परम् । आधायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम्" । ३अवसिक्थकायाम् हेमच० । ४योगपट्टे च ।

**पर्य्यङ्कपादिका** स्त्री पर्य्यङ्कस्येव पादोऽस्याः ठन् वङ्क० कप् वा कापि अतइत्त्वम् । कोलशिम्ब्याम् राजनि० ।

**पर्य्यङ्कबन्ध** पु०पर्य्यङ्कस्य योगपट्टस्य बन्धः बन्ध–घञ् । योगपट्टवस्त्रादिना पृष्ठजानुजङ्घाबन्धने "पर्य्यङ्कबन्धं निविडं बिभेदेति" कुमारः । ल्युट् । पर्य्यङ्कबन्धन अत्रैव न० ।

**पर्य्यग्निकृत** त्रि०अग्नेः परितः कृतः । "समन्तादग्निवेष्टनेन कृतसंस्कारे "तान् पर्य्यग्निकृतानुत्सृजन्ति"ताण्ड्य०ब्रा० ।

**पर्य्यङ्ग** पु० अश्वमेधीये प्रथमयूपे बन्धनीयेषु पञ्चदशसंख्याकेषु पशुभेदेषु ते च यजु० २४।१ मन्त्रे उक्ताः । "ते यात्र ते पञ्चदश पर्य्यङ्ग्याः पशवो भवन्ति" शत०ब्रा० १३।२।२।१। "पर्य्यङ्ग्यानश्वे" कात्या०श्रौ० २०।५।४। "कृष्णग्रीवादयः वामनान्ताः पञ्चदश पर्य्यङ्गसंज्ञा इत्यर्थः" कर्कः ।

**पर्य्यटन** न० परितोऽटनम् । पुनःपुनर्भ्रमणे हेमच० ।

**पर्य्यनुयोग** पु० परितोऽनुयोगः प्रश्नः । दूषणार्थं जिज्ञासायाम् कुलायु० "एतेनास्यापि पर्य्यनुयोगस्यानवकाशः" इति दायभागः ।

**पर्य्यनुयोज्य** त्रि० परि+अनु–युज–कर्मणि ण्यत् । निग्रहोपपत्त्या चोदनीये (निग्रहस्थानं प्राप्तोऽसि) इत्येवमनुयोज्ये न्यायभाष्यम् ।

**पर्य्यनुयोज्योपेक्षण** न० गौतमोक्ते निग्रहस्थानभेदे निग्रहस्थानप्राप्तस्योपेक्षणे । "अनिग्रहः पर्य्यनुयोज्योपेक्षणम्" गौ०सू० । पर्य्यनुयोज्योपेक्षणं लक्षयति । निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावनमित्यर्थः यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनं तत्र न पर्य्यनुयोज्योपेक्षणम् अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात् ननु वादिना कथमिदमुद्भाव्यं स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् सत्यं मध्यस्थेनैवोद्भाव्यं वादे च स्वयमुद्भावनेऽप्यदोषः" वृत्तिः ।

**पर्य्यन्त** पु० परिगतोऽन्तम् प्रा०स० । शेषसीमाप्रान्ते ।

**पर्य्यन्तभू** स्त्री पर्य्यन्तस्य शेषसीमायाः भूः । ग्रामादेः शेषसीमास्थाने परिसरे अमरः ।

**पर्य्यन्तिका** स्त्री परितोऽन्तिका । गुणनाशे हारा० ।

**पर्य्यन्य** पु० पर्जन्यः+पृषो० । पर्जन्यशब्दार्थे उणा० ।

**पर्य्यय** पु०परित्यज्य शास्त्रलौकिकमर्य्यादाम् अयः इण–भावे अच् । शास्त्रलोकव्यवहारातिक्रान्ते आचारे अमरः ।

**पर्य्यवसान** न० परि+अव+सो–भावे ल्युट् । १तत्तदर्थावधारणे २शेषावधौ च ।

**पर्य्यवसित** त्रि० परि+अव+सो–कर्मणि क्त । १पूर्वापरालोचनेन अवधारितेऽर्थे २निष्कृष्टार्थे च ।

**पर्य्यवस्था** स्त्री परि+अव+स्था–अङ् । १विरोधे २प्रतिपक्षवादे च । ल्युट् । पर्य्यवस्थान तत्रैव न० । तृच् पर्य्यवस्थातृ तत्कर्त्तरि त्रि० । "परितः विश्वं व्याप्य स्थितः । पर्य्यवस्थित विष्णौ पु०"जीवनः पर्य्यवस्थितः" विष्णुस० ।

**पर्य्यसन** न० परि+अस–क्षेपे–भावे ल्युट् । १अपसारणे २दूरीकरणे परितः ३क्षेपणे च । [२पतिते च मेदि० ।

**पर्य्यस्त** त्रि० परि+अस–क्षेपे कर्मणि क्त । १परितः क्षिप्ते

**पर्य्यस्ति** स्त्री पर्य्यस्यते शरीरं यत्र परि+अस–क्षेपे आधारे भावे वा क्तिन् । १पल्यङ्के (पालङ्क) त्रिका० तत्रार्थे २दूरीकरणे च स्वार्थे क । पर्य्यस्तिका हेमच० ।

**पर्य्याचान्त** न० परित आचान्तम् । एकपङ्क्तिस्थान् भुञ्जानानन्यानवमत्य यत्रान्येनान्ने भुज्यमाने अन्येनाचमनं कृतं तादृशे अन्ने तच्चान्नमभक्ष्यम् "उयाद्यं सूतिकान्नञ्च पर्य्याचान्तमनिर्दशम्" मनुव्याख्यायां कुल्लूकभट्टः । "उदक्यास्पृष्टसंघुष्टं पर्य्याचान्तञ्च वर्जयेत्" याज्ञ० । मुद्रितपुस्तके पर्य्यायान्नमिति पाठः प्रामादिकः मनुनैकवाक्यत्वात् तथा पाठस्य युक्तत्वात् ।

**पर्य्याचित** त्रि० परि+आ+चि-क्त । आचिते आचिता० नास्त्यान्तोदात्तता ।

**पर्य्याण** न० परि+या-ल्युट् पृषो० । १अश्वसज्जायां २पल्ययने (जिन्) इण–ल्युट् । पर्य्ययणमप्यत्र ।

**पर्य्याणहन** न० सोमोऽनसि स्थितः समन्तादानह्यतेऽनेन परि+आ+नह–करणे ल्युट् । सोमशकटोपरिगत पटकुटीरूपे तद्बन्धनोपाये पदार्थे कात्या०श्रौ०७।७।१२०

**पर्य्याप्त** न० परि+आप-भावे-क्त । १यथेष्टे २तृप्तौ ३सामर्थ्ये ४निवारणे ५योग्यत्वे च । कर्त्तरि क्त । ६समर्थे ७प्राप्ते च त्रि० मेदि० । ८पर्य्याप्तिसम्बन्धयुक्ते त्रि० ।

**पर्य्याप्ति** स्त्री परि+आप–भावे क्तिन् । १सम्यक् प्राप्तौ न्यायमतसिद्धे २स्वरूपसम्बन्धभेदे तथाहि "द्वित्वादिकं पर्य्याप्तिसम्बन्धेन द्वित्वादिष्वेव वर्त्तते न प्रत्येकम् ।

सर्पति। तदम्लं रसतः प्रोक्तं लघु रोचनदीपनम्। केचिल्लवणवर्ज्जांस्तु रसानत्रादिशन्ति हि। स्निग्धैस्तद्गन्धैर्मांसैश्च भक्ष्यैश्च सह सेवितम्। भवेदायुःप्रकर्षाय बलायोपचयाय च। काम्यता मनसस्तुष्टिस्तैर्य्यं तेजोऽतिविक्रमः। विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः। तदेवानन्नमत्तेन सेव्यमानममात्रया। कायाग्निनाह्यग्निसमं समेत्य कुरुते मदम्। मदेन करणानान्तु भावान्यत्वे कृते सति। निगूढमपि भावं स्वमकाशी कुरुतेऽवशः। त्र्यवस्थस्य मदो ज्ञेयः पूर्वो मध्योऽथ पश्चिमः। पूर्वे वीर्य्यरतिप्रीतिहर्षभाष्यादिवर्द्धनम्। प्रलापो मध्यमे हर्षो युक्तायुक्तक्रियास्तथा। विसंज्ञः पश्चिमे शेते नष्टकर्म्मक्रियागुणः। श्लेष्मकानलपित्तांश्च स्निग्धान्मात्रोपसेविनः। पानं न बाधतेऽत्यर्थं विपरीतांस्तु बाधते। निर्भक्तमेकान्तत एव मद्यं निषेव्यमाणं मनुजेन नित्यम्। उत्पादयेत् कष्टतमान्विकारानापादयेच्चापि शरीरभेदम्। क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन। व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि। अत्यम्लभक्ष्यावततोदरेण साजीर्णभुक्तेन तथा बलेन। उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान्। पानात्ययं परमदम्पानाजीर्णमथापि वा। पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम्। स्तम्भाङ्गमर्दहृदयग्रहतोदकम्पाः पानात्ययेऽनिलकृते शिरसो रुजश्च। स्वेदप्रलापमुखशोषणदाहमूर्च्छाः पित्तात्मके वदनलोचनपीतता च। श्लेष्मात्मके वमथुशीतकफप्रसेकाः सर्वात्मके भवति सर्वविकारसम्पत्। ऊष्मा शरीरगुरुता विरसाननत्वं श्लेष्माधिकत्वमरुचिर्मलमूत्रभङ्गः। लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णारुजा शिरसि सन्धिषु चापि भेदः। आध्मानमुद्गिरणमम्लरसो विदाहोऽजीर्णस्य पानजनितस्य वदन्ति लिङ्गम्। ज्ञेयानि तत्र भिषजा सुविनिश्चितानि पित्तप्रकोपजनितानि च कारणानि। हृद्गात्रतोदवमथुज्वरकण्ठधूममूर्च्छाकफस्रवणमूर्द्धरुजो विदाहः। द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेन धीराः। हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं विजह्यात्। जिह्वौष्ठदन्तमसितं त्वथवापि नीलं पीते च यस्य नयने रुधिरप्रभे च। हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं भजन्ते"। परमदपानाजीर्णपानविभ्रमा अपि तत्रोक्ते मद्यपानजे रोगभेदे तल्लक्षणमत्रैवोक्तम्।

**पानिल** न० पानमाधारतयाऽस्त्यत्र इलच्। पानपात्रे शब्दच०

**पानीय** त्रि० पा–पाने रक्षणे वा कर्म्मणि अनीयर्। १पेये जलादौ २रक्षणीये च ३जले न० अमरः। तद्गुणभेदादि अम्बुशब्दे दृश्यम्।

**पानीयकाकिक** पु० काकस्येवाकारोऽस्यास्ति ठन् ७त०। (पानकौड़ि) पक्षिभेदे मद्गुखगे उज्ज्वलद०।

**पानीयनकुल** पुंस्त्री० पानीये जले नकुल इव। (उद्विराल) जलविडाले हेमच०।

**पानीयपृष्ठज** पु० पानीयपृष्ठे जलोपरि जायते जन–ड। (पाना) कुम्भ्याम् रत्नमाला।

**पानीयफल** न० ६त०। (माखना) जलकन्दफलभेदे भावप्र०

**पानीयभक्तगुड़िका** स्त्री चक्रदत्तोक्ते गुलिकाभेदे "रसोऽर्द्धभागिकस्तुल्याविडङ्गमरिचाभ्रकाः। भक्तोदकेन संमर्द्य कुर्य्याद्गुञ्जासमां गुड़ीम्। भक्तोदकानुपानेश्च सेव्या वह्निप्रदीपनी। वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते"। [शब्दच०।

**पानीयमूलक** न० पानीयं मूलं यस्य कप्। सोमराज्याम्

**पानीयवर्णिका** स्त्री पानीयमिव वर्णयति वर्णि–ण्वुल्। वालुकायां राजनि०।

**पानीयशालिका** स्त्री पीयतेऽस्याम् आधारे अनीयर् तादृशी शाला पानीयवितरणार्थं वा शाला ततः स्वार्थे क आपि अतइत्त्वम्। प्रपायाम् (जलसत्रस्थे) अमरः। तद्दानविधिः हेमाद्रि०दा० भविष्यपु० उक्तो यथा "व्यतीते फाल्गुने मासि प्राप्ते चैत्र महोत्सवे। पुण्येऽह्नि विप्रकथिते प्रहचन्द्रबलान्विते। मण्डपं कारयेद्विद्वान् घनच्छायं मनोरमम्। पुरस्य मध्ये पथि वा चैत्यवृक्षतलेऽथ वा। सुशीतलतलं रम्यं विचित्रासनसंयुतम्। तन्मध्ये स्थापयेद्भव्यान् मणिकुम्भांश्च शोभनान्। आकण्ठयुक्तान् करकान् वस्त्रैरावेष्टिताननान्। ब्राह्मणे शीलसम्पन्ने भृतिं दत्त्वा यथोदिताम्। प्रपापालः प्रकर्त्तव्यो बहुपुत्रपरिच्छदः। पानीयपानादश्रान्तान् यः कारयति मानवान्। एवंविधां प्रपां कृत्वा शुभेऽह्नि विधिपूर्वकम्। यथाशक्त्या नरश्रेष्ठ! प्रारम्भे भोजयेद्द्विजान्। ततश्चोत्सर्जयेद्विद्वान्मन्त्रेणानेन मानवः। प्रपेयं सर्व्वसामान्या भूतेभ्यः प्रतिपादिता। अस्याः प्रदानात् पितरस्तृप्यन्तु च पितामहाः। अनिवारितं ततो देयं जलं मासचतुष्टयम्। त्रिपक्षं वा महाराज!

जीवानां जीवनं परम्। गन्धाढ्यं सुरसं शीतं शोभने राजते स्थितम्। प्रदद्यादप्रतिहतं सुखपानवशीकृतम्। प्रत्यहं कारयेत्तस्यां भोजनं शक्तितो द्विजान्। अनेन विधिना यस्तु ग्रीष्मे तापप्रणाशनम्। पानीयमुत्तमं दद्यात्तस्य पुण्यफलं शृणु। कपिलाशतदानस्य सम्यग्दत्तस्य यत् फलम्। तत्पुण्यफलमाप्नोति सर्वदेवैः सुपूजितः। पूर्णचन्द्रप्रतीकाशं विमानमधिरुह्य सः। याति देवेन्द्रनगरं पूज्यमानोऽप्सरोगणैः। त्रिंशत्कोट्यो हि वर्षाणां यक्षगन्धर्वसेवितम्। पुण्यक्षयादिहागत्य चतुर्वेदो द्विजो भवेत्। ततःपरं पदं याति पुनरावृत्तिदुर्लभम्"।

**पानीयामलक** न॰ कर्म॰। (पानिआमला) वृक्षभेदे "पानीयालकं दोषत्रयज्वरविनाशनम्। अम्लं स्वादु सुखशुद्धिकरं मलविशुद्धिकृत्" राजवल्लभः।

**पानीयालु** पु॰ पानीयजात आलुः शा॰त॰। (पानीआलु) कन्दभेदे राजनि॰ "पानीयालुस्त्रिदोषघ्नः सन्तर्पणकरः परम्"। [स्त्री॰ ष टाप्। वल्वजायां राजनि॰।

**पानीयाशा** स्त्री पानीयं जलमश्नाति मूलेन अश–भोजने

**पान्थ** त्रि॰ पन्थानं नित्यं गच्छति अण् पन्थादेशः। नित्यं पथि गन्तरि १पथिके अमरः। २वियोगिनि च त्रि॰।

**पान्थायन** त्रि॰ पथोऽदूरदेशादि पथिन्+पक्षा॰ फक् पन्थ देशः। मार्गस्यादूरदेशादौ।

**पान्नागारि** पुंस्त्री॰ पन्नागारस्य ऋषेरपत्यं युवा इञ् "इञः प्राच्यभरतेषु" पा॰ युवप्रत्ययस्य लुक्। गोत्रप्रवर्त्तकपन्नागारर्षेः १गोत्रापत्ये २तदीये यून्यपत्ये च।

**पाप** न॰ पाति रक्षति आत्मानमस्मात् पा–अपादाने प। १नरकहेतौ दुरदृष्टे तत्साधने २हिंसादौ ज्योतिषोक्तेषु क्षीणचन्द्ररविप्रभृतिषु ग्रहेषु पापग्रहशब्दे दृश्यम्। पापलक्षणं पापसत्तायां प्रमाणञ्च प्रा॰वि॰ उक्तं यथा ननु किं पापलक्षणम् उच्यते चोदनालक्षणोऽर्थोधर्म्म इति धर्मलक्षणं कुर्वता सूत्रकारेण जैमिनिना वेदैकप्रतिपाद्योऽनर्थोऽधर्म्म इत्यधर्म्मलक्षणं सूचितम् अनर्थश्चानिष्टसाधनं तथा चोक्तं भाष्यकृता कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयाय"। ननु पापसत्तायां किं मानं न तावत् वेदः तस्य कार्य्ये कार्य्यान्विते वा प्रामाण्यात् न च दुरितापूर्वं कार्य्यं कार्य्यान्वितं वा। न च नित्यकर्माकरणस्य निषिद्धाचरणस्य च वेदोक्तप्रत्यवायसाधनत्वान्यथानुपपत्त्या कल्प्यं तस्य तथाविधशब्दाभावेन अभिद्धत्वेन चावगन्तुमशक्यत्वात्, उच्यते "यो ब्राह्मणायावगुरेत् तं शतेन यातयात्" इति श्रुतौ लिङ्द्वयश्रुतेरवगोरणशतयातनयोः साध्यसाधनभावोऽवगम्यते "हेतु हेतुमतोर्लिङिति" पाणिनिस्मरणादिति यथोक्तं शंव्वधिकरणे, तथात्रापि क्वचित् पञ्चम्या क्वचित् तृतीयया क्वचिद्विशेषणेन तदवगम्यते। यथा याज्ञवल्क्यः "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" (अत्र पञ्चम्या) मनुः "शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम्। इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नराहूपविपर्य्ययम्" (अत्र तृतीयया) विष्णुपु॰ "नरकं कर्म्मणां लोपादेवमाहुर्मनीषिणः" यमः "सुरापो ब्रह्महा गोघ्न सुवर्णस्तेयकृन्नरः। पतितैः संप्रयुक्तश्च कृतघ्नो गुरुतल्पगः। एते पतन्ति सर्वेषु नरकेष्वनुपूर्वशः"। अत्रैते सुरापादयः पतन्तीति सुरापादीनां पतनकर्तृत्वावगतेः पतनकर्तृत्वञ्च साधनत्वविशेषः। अतः सुरापानादिविशिष्टस्य पुरुषस्य पतनसम्बन्धे विशेषणस्य सुरापानादेः सति सम्भवे पतनसाधनत्वमवगम्यते। "सप्तदशप्राजापत्यान् पशूनालभेत" इतिवत्। एवं "वारिदस्तृप्तिमाप्नोति" इत्यादिवच्च। नरकसाधनस्यास्य कार्य्यान्वयाभावात् कथं शब्दादवगतिरिति चेत् शंयुवत् विषयविशेषणतया इति ब्रूमः। यथा यातनासाधनादवगोरणान्निवर्त्तितव्यमिति विधिः। तथा नरकसाधनात् सुरापानादेरपि निवर्त्तितव्यमिति"। यथा कालान्तरभावि स्वर्गादिसाधनत्वान्यथानुपपत्त्या यागादेर्द्वारीभूतधर्मकल्पकता एवं कालान्तरभाविनरकादिसाधनत्वान्यथानुपपत्त्या सुरापानादेर्द्वारीभूताधर्मकल्पकत्वमिति बोध्यम् पापमस्त्यस्य अर्श॰ अच्। ४पापयुक्ते त्रि॰। पापं च कायिकादिभेदेन दशविधं दशहराशब्दे ३४८३पृ॰दर्शितम् कायिकादिभेदेनान्यान्यपि पापान्युक्तानि यथा "प्राणाभिपातनं स्तैन्यं परदारमथापि च। त्रीणि पापानि कायेन सर्वतः परिवर्जयेत्। असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा। चत्वारि वाचा राजेन्द्र! न जल्पेत न चिन्तयेत्। अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम्। कर्मणां फलमस्तीति त्रिविधं मनसाचरेत्" भा॰शा॰दानधर्मः। पापस्य पुरुषत्रयावध्यनुवर्त्तित्वं यथा "नाधर्म्मश्चरितो राजन्! सद्यः फलति गौरिव। शनै-

रावर्त्तमानस्तु मूलान्यपि निकृन्तति । यदि नात्मनि मित्रेषु न चेत् पुत्रेषु नप्तृषु । पापमाचरितं कर्म त्रिवर्गमनुवर्त्तते । फलत्येवं ध्रुवं पापं गुरु भुक्तमिवोदरे" मात्स्ये २८अ० । राष्ट्रादिकृतपापेन राजादीनां परस्परं पापित्वं यथा "राजा राष्ट्रकृतात् पापात् पापी भवति वै हरे! । तथैव राज्ञः पापेन तद्राज्यस्थास्तु ये जनाः । वर्णाश्रमादयः सर्वे पापिनो नात्र संशयः । भार्य्याकृतदुष्कृती स्वामी ह्यर्जनात् स्वामिनोऽबला । तथा दैशिकपापात्तु शिष्यः स्यात् पातकी सदा । शिष्याद्धि पापिनो नित्यं गुरुर्भवति दुष्कृती । पातकी यजमानः स्यात् पापिनोऽङ्ग पुरोधसः । पुरोहितस्तथा पापी यजमानाद्धि सो ध्रुवम्" अदत्तपुण्यपापभागित्वं यथा "अदत्तानि च पुण्यानि पापानि च यथा प्रिये! । प्राप्यानि कर्मणा येन तद्यथावच्छृणामय । देशग्रामकुलानि स्युर्भागभाञ्जि कृतादिषु । कलौ तु केवलं कर्त्ता फलभुक् पुण्यपापयोः । अकृतेऽपि च संसर्गे व्यवस्थेयमुदाहृता । संसर्गात् पुण्यपापानि यथा यान्ति निबोध तत् । एकत्र मैथुनाद्याना देकपात्रस्थभोजनात् । फलार्द्धं प्राप्नुयान्मर्त्यो यथावत् पुण्यपापयोः । स्पर्शनाद्भाषणाद्वापि परस्य स्तवनादपि । दशांशं पुण्यपापानां नित्यं प्राप्नोति मानवः । दर्शनश्रवणाभ्याञ्च मनोध्यानात्तथैव । परस्य पुण्यपापानां शतांशं प्राप्नुयान्नरः । परस्य निन्दापैशुन्यं धिक्कारञ्च करोति यः । तत्कृतं पातकं प्राप्य स्वपुण्यं प्रददाति सः । कुर्वतः पुण्यकर्माणि सेवां यः कुरुते परः । पत्नीभृत्योऽथ शिष्यो वा सजातीयोऽपि मानवः । तस्य सेवानुरूपेण तस्य तत्पुण्यभाग्भवेत् । एकपङ्क्तौ स्थितो यस्तु लङ्घयन् परिवेशयेत् । तस्य पापशतांशन्तु लभते परिवेशकः । स्नानसन्ध्यादिकं कुर्वन् संस्पृशेद्वा प्रभाषते । स पुण्यकर्मषष्ठांशं दद्यात्तस्मै सुनिश्चितम् । धर्मोद्देशेन यो द्रव्यं परं याचयते नरम् । तत्पुण्यं कर्मजं तस्य धनं दत्त्वाप्नुयात् फलम् । अपहृत्य परद्रव्यं पुण्यकर्म करोति यः । कर्मकृत् पापभोक्ता च धनिनस्तद्भवेत् फलम् । नापहृत्य ऋणं यस्तु परस्य म्रियते नरः । धनी तत्पुण्यमाप्नोति स्वधनस्यानुरूपतः । बुद्धिदस्त्वनुमन्ता च यश्चोपकरणप्रदः । बलदश्चापि षष्ठांशं प्राप्नुयात् पुण्यपापयोः । प्रजाभ्यः पुण्यपापानां राजा षष्ठांशमाहरेत् । शिष्याद्गुरुः स्त्रिया भर्त्ता पिता पुत्रात्तथैव च । स्वपतेरपि पुण्यस्य भार्य्यार्द्धं समवाप्नुयात् । परहस्तेन दानादि कुर्वतः पुण्यकर्मणः । विना भृत्यकशिष्याभ्यां कर्त्ता षष्ठांशमाहरेत् । आत्मनो वा परस्यापि यदि सेवां न कारयेत्" श्रीकृष्ण उवाच "इत्थं ह्यदत्तान्यपि पुण्यपापान्यायान्ति नित्यं परसंश्रितानि । शृणुष्व चाश्चर्यमितिहासमग्र्यं पुराभवं पुण्यप्रतिप्रसिद्धम्" पाद्मोत्तरखण्डे ७११५७अ० । अत्र कलौ संसर्गजपापोक्तिः महापातकिविषया संसर्गखण्डे दृश्यम् । ५गर्ह्ये त्रि० पापयोनिः मनुः ४।१६६ पापनापित इत्यादि । [पिण्डीकृते प्रेते च शा०त०रघु० ।

**पापकृत्** त्रि० पापं कृतवान् कृ—भूते क्विप् । १कृतपापे २अस-

**पापग्रह** पु० कर्म० । "क्षीणेन्दुः कुजो राहुः शनिस्तैर्युत इन्दुजः । रविः पापग्रहास्ते शुभाश्चान्ये प्रकीर्त्तिताः" ज्योतिषोक्तेषु ग्रहेषु ।

**पापघ्न** पु० पापं हन्ति हन—टक् । १तिले तस्य हि दानेन पापनाशकत्वमिति तस्य तथात्वम् । २पापनाशके त्रि० राजनि० ।

**पापचेली** स्त्री पुनःपुनः पचति पा—यङ्-अच् पापचो वायुस्तमीरयति ईर—अण् रस्य लः । (आकनादि) पाठावतायाम् अमरः स्वार्थे क ह्रस्वः । पापचेलिका तत्रार्थे स्त्री रत्नमाला ।

**पापति** त्रि० पत—यङ्लुक् इन् । पुनःपुनः पतनशीले

**पापनापित** पु० कर्म० "कुत्सितानि कुत्सनैः" पा० पापत्वेन (गर्ह्यत्वेन) नापितस्य कुत्स्यमानत्वात् नापितस्य पूर्वनिपाते प्राप्ते "पापाणके कुत्सितैः" पा० परनि० । धूर्त्तनापिते

**पापनाशन** त्रि० पापं नाशयति नाशि—ल्यु । १पापनाशके २विष्णौ पु० "चितोशः पापनाशनः" विष्णुसं० । भावे ल्युट् ६त० । ३पापस्य नाशने च न० । करणे ल्युट् । ४प्रायश्चित्ते न० ।

**पापपति** पु० पापजनकः पतिः । उपपतौ जारे त्रिका० ।

**पापपुरुष** पु० पापात्मकः पुरुषः पुरुषाकारः । तन्त्रोक्ते वामकुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे तन्त्रसारे भूतशुद्धिप्र० । बहुपापावयवभेदयुते २पुरुषभेदे च । पाद्मे क्रिया० २१अ० तत्स्वरूपमुक्तं यथा "ब्रह्मादौ पुरुषश्रेष्ठः संसारं सचराचरम् । सर्वेषां दमनार्थाय सृष्टवान् पापपुरुषम् । द्विजातिहत्यामूर्द्धानं मदिरापानलोचनम् । सुवर्णस्तेयवदनं गुरुतल्पगतिश्रुतिम् । स्त्रीहत्यानासिकञ्चैव गोहत्यादोषबाहुकम् । न्यासापहरणग्रीवं भ्रूणहत्यागलन्तथा । परस्त्रीगति-

वक्त्रान्तं सुहृच्छोकवधोदरम्। शरणागतहत्यादिनाभिं गर्वकृताकटिम्। गुरुनिन्दाप्रसक्थिभागं कन्याविक्रयशेफसम्। विश्वासवाक्यकथनपायुं पितृवधाङ्घ्रिकम्। उपपातकरोमाणं महाकायं भयङ्करम्। कृष्णवर्णं पिङ्गनेत्रं स्वाश्रयात्यन्तदुःखदम्"।

**पापयक्ष्मन्** पु॰ वास्तुमण्डलस्थे पूज्यगणभेदे ह॰ दे॰ ५२अ॰।

**पापमुक्त** त्रि॰ पापात् मुक्तः ५त॰। परित्यक्तपापे। पापमोचनहेतवश्च मनुना दर्शिता यथा "ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृन्मुच्यते पापात् तथा दानेन चापदि"। अन्ये च तस्य हेतवो वराहपु॰ दर्शिता यथा "यः समः सर्वभूतेषु जितात्मा शान्तमानसः। स पापेभ्यो विमुच्येत ज्ञानवान् स च वेदवित्। गुणागुणपरिज्ञाता क्षयस्य व्ययस्य च। ध्याने चैव ह्यसंमूढः स पापेभ्यः प्रमुच्यते। स्वदेहे परदेहे च सुखदुःखेन नित्यशः। विचारज्ञो भवेद्यस्तु स मुच्येतैनसो ध्रुवम्। अहिंसः सर्वभूतेषु तृष्णाक्रोधविवर्जितः। कृतन्यासः सदा यश्च स पापेभ्यः प्रमुच्यते। प्राणायामैश्च निर्द्वन्द्वः सञ्चारणरतः। व्यवस्थितमना यस्तु स पापेभ्यः प्रमुच्यते। निराशीः सर्वतश्छिन्नेन्द्रियार्थेषु न लोलुपः। पवितात्मा त्यजेत् प्राणान् सर्वपापात् प्रमुच्यते। श्रद्दधानो जितक्रोधः परद्रव्यविवर्जितः। अनसूयश्च यो मर्त्यः स पापेभ्यः प्रमुच्यते। गुरुशुश्रूषया युक्तो ह्यहिंसानिरतश्च यः। क्षुद्रोऽपि क्षुद्रशीलोऽपि स पापेभ्यः प्रमुच्यते। प्रशस्तानि सदा कुर्य्याद् अप्रशस्तानि वर्जयेत्। योऽभिगच्छति तीर्थानि विशुद्धेनान्तरात्मना। पापादुपरतो नित्यं स पापेभ्यः प्रमुच्यते। उत्थाय ब्राह्मणं गच्छेन्नरो भक्त्या समन्वितः। अभिगम्य प्रयत्नेन स पापेभ्यः प्रमुच्यते"। अन्येऽपि तस्य हेतवः शास्त्रान्तरेषु दृश्याः।

**पापयोनि** स्त्री पापा गर्ह्या योनिः। १तिर्य्यग्योन्यादौ। पापहेतुका योनिः। २पापहेतुके जन्मभेदे तद्भेदे कारणभेदो याज्ञ॰ उक्तो यथा "महापातकजान् घोरान्नरकान् प्राप्य गर्हितान्। कर्मक्षयात् प्रजायन्ते महापातकिनस्त्विह। मृगाश्वशूकरोष्ट्राणां ब्रह्महा योनिमृच्छति। खरपुक्कशवेणानां सुरापो नात्र संशयः। कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात्। तृणगुल्मलतात्वञ्च क्रमशो गुरुतल्पगः"। "तैलहृत्तैलपायी स्यात् पूतिवक्त्रस्तु सूचकः। परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च। अरण्ये निर्जने घोरे भवति ब्रह्मराक्षसः। हीनजातौ प्रजायेत पररत्नापहारकः। पत्रशाकं शिखी हृत्वा गन्धांश्छुच्छुन्दरिः शुभान्। मूषिको धान्यहारी स्याद् यानमुष्ट्रः फलं कपिः। जलं प्लवः पयः काको गृहकारी ह्युपस्करम्। मधु, दंशः फलं गृध्रो, गां गोधाऽग्निं वकस्तथा। श्वित्री वस्त्रं श्वा रसन्तु चीरी लवणहारकः। प्रदर्शनार्थमेतत्तु मयोक्तं स्तेयकर्मणि। द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः। यथा कर्मफलं प्राप्य तिर्य्यक्त्वं कालपर्य्ययात्। जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः"। गौतमोऽपि क्वचिद्विशेषमाह "विद्याविक्रयी पुरुषमृगः वेदविक्रयी द्वीपी, वहुयाजको जलप्लवः, अयाज्ययाजको वराहः, अनिमन्त्रितभोजी वायसः, मिष्टैकभोजी वानरः, यतस्ततोऽश्नन् मार्जारः, कक्षवनदहनात् खद्योतः, दारकाधायी सुखविगन्धः, पर्युषितभोजी कृमिः, अदत्तादायी वलीवर्दौ, मत्सरी भ्रमरः, अग्न्युत्सादी मण्डलकुष्ठी, शूद्राचार्य्यः श्वपाकः, गोहर्ता सर्पः, स्नेहापहारी क्षयी, अन्नापहार्य्यजीर्णी, ज्ञानापहारी मूर्खः, चण्डालीपुक्कशीगमनेऽजगरः, प्रव्रजितागमने मरुपिशाचः, शूद्रागमने दीर्घकीटः, सवर्णाभिगामी दरिद्रः, जलहारी मत्स्यः, क्षीरहारी वलाका। वार्धुषिकोऽङ्गहीनः, अविक्रेयविक्रयी गृध्रः, राजमहिषीगामी नपुंसकः, राजाक्रोशको गर्दभः, गोगामी मण्डूकः, अनध्यायाध्ययने शृगालः परद्रव्यापहारी परप्रेष्यः, मतृस्ववधे गर्भशायी, इत्येतेऽनूर्द्ध्वगमना इति। स्त्रियोऽप्येतेषु निमित्तेषु पूर्वोक्तास्वेव जातिषु स्त्रीत्वमनुभवन्ति"। विष्णुस॰४४अ॰ अन्येऽपि पापभेदकृतयोनिभेदा दर्शिताः। बहु॰। ३तद्युते त्रि॰।

**पापरोग** पु॰ पापविशेषकृते रोगभेदे स च विष्णुसं॰ उक्तो यथा "नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मनुष्येषु लक्षणानि भवन्ति। कुष्ठ्यतिपातकी। ब्रह्महा यक्ष्मी। सुरापः श्यावदन्तकः। सुवर्णहारी कुनखः। गुरुतल्पगो दुश्चर्मी। पूतिनासः पिशुनः। पूतिवक्त्रः सूचकः, धान्यचौरोऽङ्गहीनः। मिश्रचौरोऽतिरिक्ताङ्गः। अन्नापहारकस्त्वामयावी। वागपहारको मूकः। वस्त्रापहारकः श्वित्री। अश्वापहारकः पङ्गुः। देवब्राह्मणक्रोशको मूकः। लोकनिन्द्यो गरदः। उन्मत्तोऽग्निदः। गुरुप्रतिकूलोऽपस्मारी। गोघ्नस्त्वन्धः। दीपापहारकश्च

कायश्च दीपनिर्वापकः । त्रपुचामरसीसकविक्रयी रजकः । एकशफविक्रयी मृगव्याधः । कुण्डाशी भगास्यः, घाण्टिकःस्तेनः । वार्धुषिको भ्रामरी । मिष्टाश्यैकाकी वातगुल्मी । समयभेत्ता खल्वाटः, स्त्रीपद्यवकीर्णी । परवृत्तिघ्नो दरिद्रः । परपीडाकरो दीर्घरोगी । एवं कर्मविशेषेण जायन्ते लक्षणान्विताः । रोगान्वितास्तथा ह्यन्ये कुब्जखञ्जैकलोचनाः । वामनावधिरामूका दुर्बलाश्च तथा परे । तस्मात् सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत्" । यद्यपि सर्वेषां रोगाणां दुःखदायकत्वेन पापहेतुकत्वं तथापि उन्मादाद्यष्टरोगाणां प्राधान्येन महापापजत्वेन पापरोगत्वं यथोक्तं शु०त०रघुनन्दनेन "महारोगिण इति पापरोगाष्टकान्यतमरोगवतः । ते च उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासो मधुमेहो भगन्दरः उदरोऽश्मरी इत्यष्टौ पापरोगा नारदोक्ताः । कर्मविपाकशब्दे १७४५पृ० विस्तरः । २मसूरीरोगे शब्दरत्ना०

**पापरोगिन्** त्रि० पापजन्यरोगो निन्द्यत्वेनास्त्यस्य इनि । महारोगयुक्ते ३।५।२ मनुः । [२पापर्द्धौ च ।

**पापर्द्धि** स्त्री पापानामृद्धिरत्र । १मृगयायां हेमच० ६त० ।

**पापल** त्रि० पापं लाति ला—क । १पापप्रापके पातयति तुलादण्डं स्वाधिष्ठानेन अधोनयति पाति—कलच् तस्य पश्च । २परिमाणभेदे न० उणादिकोषः ।

**पापशमनी** स्त्री पापं शम्यतेऽनया शम—णिच्—करणे ल्युट् ङीप् । १शमीवृक्षे राजनि० । पापं शमयति शमि—ल्यु । २पापनिवारके त्रि० । [तुल्ये ।

**पापसम** अव्य०पापेन तुल्यम् तिष्ठद्गु० अव्ययीभावः । पाप-

**पापहन्** त्रि० पापं हन्ति हन—क्विप् । पापनाशके मनुः ७।२५।

**पापाख्या** स्त्री पापमनिष्टमाख्याति सूचयति आ+ख्या—क । वृ०सं०७अ०उक्ते बुधस्य गतिभेदे "प्राकृतविमिश्रसंक्षिप्ततीक्ष्णयोगान्तघोरपापाख्याः । पराशरतन्त्रे नक्षत्रैः कीर्त्तितागतयः" इत्युपक्रमे "पापाख्या सावित्रं मैत्रं शक्राग्निदैवतं चेति" सावित्रादिनक्षत्रे तद्गतेः संज्ञामुक्त्वा "प्राकृतगत्यामारोग्यवृष्टिशस्यप्रवृद्धयः क्षेमम् । संक्षिप्तमिश्रयोर्मिश्रमेतदन्यासु विपरीतम्" इति तस्याः अशुभफलकथनेन पापसूचकत्वात् तथात्वम् ।

**पापात्मन्** त्रि० पापयुक्तः आत्मा अन्तःकरणं यस्य । पापान्विते जीवे "पापात्मा पापसम्भवः" इति पुराणम् । तेषां संसरणप्रकारः पाद्मे क्रियायो० २२अ० यथा "पापात्मनां शृणु गतिं विस्तरेण वदाम्यहम् । षडशीति सहस्राणि योजनानि दुरात्मनाम् । प्रोक्तो मार्गस्य विस्तारः सर्वदुःखान्वितस्य च । क्वचित् क्वचित् ज्वलद्वह्निः सन्तप्तः कर्दमः क्वचित् । क्वचित् क्वचित् द्विजश्रेष्ठ ! सन्तप्तं ताम्रवालुकम् । क्वचित् क्वचित्तीक्ष्णशिलाः क्वचित्तप्तशिलास्तथा । क्वचित् क्वचिच्छस्त्रवृष्टिः क्वचिदङ्गारवर्षणम् । कुत्रचिद्वह्निवृष्टिश्च कुत्रचित् पङ्कवर्षणम् । उष्णाम्बुवर्षणं क्वापि क्वचित् पाषाणवर्षणम् । ज्वलदग्निरिव क्वापि सन्तप्तो वाति मारुतः । गभीरा अन्धकूपाश्च तृणावृतमुखा द्विज ! । क्वापि कण्टकवृक्षाश्च नाराचसमकण्टकाः । पाषाणश्रेणयः क्वापि दुरारोहाः सपन्नगाः । क्वचिद्गाढान्धकाराश्च क्वचित् शोणित कन्दराः । क्वचिद्वीरणवृक्षाश्च क्वचित् काशाः क्वचित् शराः । क्वचित् क्वचिच्छर्कराश्च लेपश्च क्वचित् क्वचित् । क्वचिदस्थ्नां राशयश्च दुर्गन्धा मांसराशयः । क्वचित्कण्टकराशिश्च शैवालानि क्वचित् क्वचित् । कीलकावलयः क्वापि क्वचिद्व्याघ्रास्तथा शिवाः । खड्गिनः करिणः क्वापि क्वचिद्रक्ता भयङ्कराः । एवं बहुविधक्लेशे छाया जलविवर्जिते । तस्मिन्मार्गे द्विजश्रेष्ठ ! पापिनो यान्ति दुःखिनः । नग्नाविमुक्तकेशाश्च प्रेताकारभयङ्कराः । गच्छन्ति पापिनस्तत्र शुष्ककण्ठौष्ठतालुकाः" ।

**पापान्त** न० पृथूदकापरनामके तीर्थभेदे वामनपु० ३८अ० ।

**पापाह** पु०पापमशुद्धत्वात् गर्ह्यमहः टच्समा०। अशौचदिने

**पापिन्** त्रि० पाप+अस्त्यर्थे इनि । पापयुक्ते । अतिशयेन पापी इष्ठन् । पापिष्ठ अतिशयेन पापयुक्ते । ईयसुन् पापीयस् तत्रार्थे त्रि० स्त्रियां ङीप् । [पाप्मे अमरः ।

**पाप्मन्** पु० आप्नोति व्याप्नोति पापिनम् आप—मनिन् नि० ।

**पामघ्न** पु० पाम–हन्ति हन–टक् । १गन्धके राजनि० । २कटुकायां स्त्री जटाधरः ।

**पामन्** न० पा—मनिन् । विचर्चिकायां (खोस पाचड़ा) स्त्रीत्वमपि मनन्तात् वा डाप् पामाप्यत्र अमरः ।

**पामन** त्रि० पामास्त्यस्य मत्वर्थे न । पामरोगवति अमरः पक्षे मतुप् मस्य वः । पामवत् तत्रार्थे त्रि० स्त्रियां ङीप्

**पामर** त्रि० पाति क्विप् पाः त्रयीधर्मः स म्रियतेऽनेन मृ—घ । १मूर्खे २नीचे मेदि० ३खले हेमच० ।

**पामरोदारा** स्त्री पामरमुदरति उद्–ऋ–अण् अजादित्वात् टाप् । गुडूच्यां शब्दरत्ना० ।

**पामादि** पु० "पामादिभ्यो नः" पा० अस्त्यर्थे नप्रत्ययनिमित्ते

शब्दगणे स च गणः पा०ग० सू० उक्तो यथा "पामन् वामन् वेमन् श्लेष्मन् कद्रु वलि सामन् ऊष्मन् कृमि- (अङ्गात् कल्याणे) (शाकीपलालीदद्रूणां ह्रस्व- त्वञ्च)(विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः) (लक्ष्म्या अच्च)

**पामारि** पु० ६त० । गन्धके हेमच० । तत्सेवने हि पाम- रोगनाशः इति तस्य तथात्वम् ।

**पायना** स्त्री पा–णिच्+भावे युच् । अस्त्रादीनां धाराकर- णार्थे व्यापारभेदे तेषां पायना त्रिविधा "क्षारोदक- तैलेषु, तत्र क्षारपायितं शरशल्यास्थिच्छेदनेषु । उदक- पायितं मांसच्छेदनभेदनपाटनेषु, तैलपायितं सिराव्यधन- स्नायुच्छेदनेषु" सुश्रुतः ।

**पायस** त्रि०पयसोविकारः अण् । १दुग्धविकारे २परमान्ने पु० अमरः । तत्पाकप्रकारो यथा "अतप्ततण्डुलो धौतः परिभ्रष्टो घृतेन च । खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत् । पायसः कफकृद्बल्यो विष्टम्भी मधुरो गुरुः" पाकराजेश्वरः ।

**पायसिक** त्रि० पायसो भक्तिरस्य । पायसभक्तियुक्ते

**पायिक** पु० पादविक+पृषो० । पदातौ शब्दच० ।

**पायित** त्रि० पा+णिच–क्त । १पानकर्मभूतीकृते पदार्थे (पानदेओया) २अस्त्रे च पायनाशब्दे दृश्यम् ।

**पायु** पु० अपैति अनेन वायुः अप+इण करणे–उण् अपे- रल्लोपः पिबत्यौषधमनेन पा–उण् वा । १अपानवायु- स्थाने २कर्मेन्द्रियभेदे च इन्द्रियशब्दे दृश्यम् ।

**पाय्य** न० मीयतेऽनेन मा–ण्यत् नि० पादेशः । १परिमाणे २पानीये न० ३निन्दनीये त्रि० विश्वः । ४पाने उणादि० ।

**पार** कर्मसमाप्तौ अद०चु०उभ०सक०सेट् । पारयति ते अप- पारत् त ।

**पार** न० परं तीरं परमेव अण्, पृ–घञ् वा । नदीलङ्घनेन प्राप्ये १परे तीरे अमरः । २प्रान्तभागे शेषावधौ मेदि० ।

**पारक** त्रि० पृ–ण्वुल् । १पूर्त्तिकारके २पालके ३प्रीति- कारके च स्त्रियां गौरा० ङीप् । [साधौ ।

**पारकुलीन** त्रि० परकुले साधु प्रतिजना० खञ् । परकुले

**पारक्य** त्रि०परस्मै लोकाय हितम् तस्येदं वा ष्यञ् कुक्च । १परलोकसाधने २परकीये च "पारक्यमविरोधि च" कर्मप्रदीपः "उद्धृत्य चतुरः पिण्डान् पारक्ये स्नान- माचरेत्" अत्रिस० । [समाप्तिगन्तरि च ।

**पारग** त्रि० पारं गच्छति गम–ड । १पारगन्तरि २कार्य-

**पारगत** त्रि० पारं गतः । १पारगामिनि २जिने पु० हेमच०

**पारज्** न० पार–अजिन् । सुवर्णे उज्ज्वलद० । [गन्तरि ।

**पारजायिक** पु०परजायां गच्छति परदारादि०ठक् । परदार-

**पारटीन** पु० प्रस्तरे त्रिका० ।

**पारण** न० पार–भावे ल्युट् । १व्रतान्तभोजने युच् पारणा तत्रार्थे । "पारणं पावनं पुंसां सर्वपापप्रणाशनम् । उपवासाङ्गभूतञ्च फलदं शुद्धिकारणम् । सर्वेष्वेवोपवा- सेषु दिवा पारणमिष्यते । अन्यथा फलहानिः स्यादृते धारणपारणम् । न रात्रौ पारणं कुर्य्यादृते वै रोहि- णीव्रतात् । निशायां पारणं कुर्य्याद्वर्जयित्वा महानि- शाम् । पूर्वाह्णे पारणं शस्तं कृत्वा विप्र ! सुरार्चनम् । सर्वेषां सम्मतं कुर्य्यादृते वै रोहिणीव्रतम्" ब्रह्मवै० श्रीकृष्णजन्मखण्डे ८अ० । जन्माष्टमीशब्दे एकादशी- शब्दे च दृश्यम् । ल्यु । २मेघे पु० शब्दमाला । ३ऋ- षिभेदे । पारणस्यर्षेरपत्यम् इञ् । पारणि तदपत्ये । ततः यूनि फञ् पारणायन यूनि तदपत्ये । तौल्वल्या० फिञो न लुक् ।

**पार(द)त** पु० पृ–णिच्–तन्, पृषो० तस्य दो वा । १रसभेदे (पारा) । पारं ददाति दा–क । २पारदायिनि त्रि०हेमच० "रसायनार्थिभिर्लोकैः पारदो रस्यते यतः । ततो रस इति प्रोक्तः स च धातुरपि स्मृतः" । अथ पारदस्योत्- पत्तिलक्षणनामगुणाः "शिवाङ्गात् प्रच्युतं रेतः प- तितं धरणीतले । तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत् । क्षेत्रभेदेन विज्ञेयं शिववीर्य्यं चतुर्विधम् । श्वेतं रक्तन्तथा पीतं कृष्णं तत्तु भवेत् क्रमात् । ब्राह्मणः क्ष- त्रियो वैश्यः शूद्रश्च खलु जातितः । श्वेतं शस्तं रुजां नाशे, रक्तङ्किल रसायनम् । धातुवादे तु तत्पीतं खेगतौ कृष्णमेव च । पारदो रसधातुश्च रसेन्द्रश्च महारसः । चपलः शिववीर्य्यञ्च रसः सूतः शिवाह्वयः । पारदः षड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः । योगवाही महा वृष्यः सदा दृष्टिबलप्रदः । सर्वामयहरः प्रोक्तो विशे- षात्सर्वकुष्ठनुत् । स्वस्थो रसो भवेद्ब्रह्मा बद्धो ज्ञेयो जनार्दनः । रञ्जितः क्रामितश्चापि साक्षाद्देवमहेश्वरः । मूर्च्छितो हरति रुजं बन्धनमनुभूय खेगतिं कुरुते । अजरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात् । असाध्यो यो भवेद्रोगो यस्य नास्ति चिकित्सितम् । र- सेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम् । मलं विषं वह्निगिरी च चापलं नैसर्गिकं दोषमुशन्ति पारदे । उपाधिजौ द्वौ त्रपुनागयोगजौ दोषौ रसेन्द्रे कथितौ

मुनीश्वरैः। मलेन मूर्च्छां, मरणं विषेण दाहोऽग्निना कष्टतरः शरीरे। देहस्य जाड्यं गिरिणा सदा स्यात् चाञ्चल्यतो वीर्य्यहृतिश्च पुंसाम्। वङ्गेन कुष्ठम्भुजगेन षण्ढो भवेदतोऽसौ परिशोधनीयः। वह्निर्विषं मलञ्चेति मुख्या दोषास्त्रयो रसे। एते कुर्वन्ति सन्तापं मृतिं मूर्च्छां नृणां क्रमात्। अन्येऽपि कथिता दोषा भिषग्भिः पारदे यदि। तथाप्येते त्रयो दोषा हरणीया विशेषतः। संस्कारहीनं खलु सूतराजं यः सेवते तस्य करोति बाधाम्। देहस्य नाशं विदधाति नूनं कष्टांश्च रोगान् जनयेन्नराणाम्"। तस्य शोधनादिविधिः तत्स्वेदनञ्च "नानाधान्यैर्यथाप्राप्तैस्तुषवर्ज्जैर्जलान्वितैः। मृद्भाण्डं पूरितं रक्षेद् यावदम्लत्वमाप्नुयात्। तन्मध्ये भृङ्गरा मुण्डी विष्णुक्रान्ता पुनर्णवा। मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी। त्रिफला गिरिकर्णी च हंसपदी च चित्रकम्। समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत्। पूर्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम्। स्वेदनादिषु सर्वत्र रसराजस्य योजयेत्" विष्णुक्रान्ता गिरिकर्णी च अपराजितैव नीलश्वेतपुष्पभेदात्। "अत्यम्लमारनालं वा तदभावे प्रयोजयेत्" तदभावे धान्याम्लाभावे "त्र्यूषणं लवणं राजी रजनी त्रिफलार्द्रकम्। महाबला नागबला मेघनादः पुनर्णवा। मेषशृङ्गी चित्रकञ्च नवसारं समं समम्। एतत्समस्तं व्यस्तं वा पूर्वाम्लेनैव पेषयेत्। प्रलिम्पेत्तेन कल्केन वस्त्रमङ्गुलमात्रकम्। तन्मध्ये निःक्षिपेत्सूतं बद्ध्वा तत्त्रिदिनं पचेत्। दोलायन्त्रेऽम्लसंयुक्ते जायते स्वेदितो रसः" मेघनादः (चवराई)शाकविशेषः। मेषशृङ्गी (मेढाशृङ्गी)। तदलाभे कर्कटशृङ्गी ग्राह्या। नवसारं नवसादरम्। अन्यच्च "मूलकानलसिन्धूत्थत्र्यूषणार्द्रकराजिका। रसस्य षोडशांशेन द्रव्यं युञ्ज्यात् पृथक् पृथक्। द्रवेष्वनुक्तमानेषु मतं मानमिदं बुधैः। पट्टावृतेषु चैतेषु सूतं प्रक्षिप्य काञ्जिके। स्वेदयेद्दिनमेकञ्च दोलायन्त्रेण बुद्धिमान्। स्वेदात्तीव्रो भवेत्सूतो मर्दनाच्च सुनिर्मलः"। मूलकम् (मुरई) अनलश्चित्रकम्। त्र्यूषणं त्रिकटु·राजिका (राई)। अथ मर्दनम् "इष्टिकाचूर्णचूर्णाभ्यामादौ मर्द्यो रसस्ततः। दध्ना गुडेन सिन्धूत्थराजिकागृहधूमकैः"। अन्यच्च "कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीविमिश्रितैः। फलत्रिकेणापि विमर्द्दितो रसो दिनत्रयं सर्वमलैर्विमुच्यते"।

अथ मूर्च्छनम् "त्र्यूषणं त्रिफलावन्ध्याकन्दैः क्षुद्राद्वयान्वितैः। चित्रकोर्णानिशाक्षारकन्यार्ककनकद्रवैः। सूतं कृतेन यूषेण वारान् सप्ताभिमर्द्दयेत्। इत्थं सम्मूर्च्छितः सूतस्त्यजेत्सप्तापि कञ्चुकान्"। वन्ध्याकन्दः (बान्देखेखसाकन्द) क्षुद्राद्वयं (छोटीकटाई बड़ीकटाई) ऊर्णा ऊर्णमेषका। निशा हरिद्रा क्षारः यवक्षारः। कन्या कुमारिका अर्कस्तत्पत्ररसः कनकधुस्तूरपत्ररसः। अथोर्द्ध्वपातनम् "मयूरग्रीवताप्याभ्यां नष्टपिष्टीकृतस्य च। यन्त्रे विद्याधरे कुर्य्याद्रसेन्द्रस्योर्द्ध्वपातनम्"। ताप्यम् सुवर्णमाक्षी। नष्टपिष्टीकृतस्य। कुमारिकाद्रवयोगेन तावन्मर्द्दनं कर्त्तव्यं यावत्पारदः पृथक् न दृश्यत इत्यर्थः। विद्याधरयन्त्रे डमरुयन्त्रे। अथाऽधःपातनम् "त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः। नष्टपिष्टं रसं कृत्वा लेपयेदूर्द्ध्वभाजनम्। ततो दीप्तैरधःपातः सूपलैस्तस्य कारयेत्। यन्त्रे भूधरसंज्ञे तु ततः सूतो विशुध्यति। स्वेदनादिक्रियाभिस्तु शोधितोऽसौ यदा भवेत्। तदा कार्य्याणि कुरुते प्रयोज्यः सर्वकर्मसु"। अथ मुख्यदोषहरः शोधनविधिः "गृहकन्या हरति मलं त्रिफलाऽग्निं चित्रको विषं हन्ति। तस्मादेभिर्मिश्रैर्वारान् संमूर्च्छयेत् सप्त"। अथ सर्वदोषहरः शोधनविधिः "कुमारिकाचित्रकरक्तसर्षपैः कृतैः कषायैर्बृहतीविमिश्रितैः। फलत्रिकेणापि विमर्द्दितो रसो दिनत्रयं सर्वमलैर्विमुच्यते। कुमार्य्यां च निशाचूर्णैर्दिनं सूतं विमर्द्दयेत्। एवं कदर्थितः सूतो षण्ढो भवति निश्चितम्। वह्नौषधीकषायेण स्वेदितः स बली भवेत्। सर्पाक्षीचिञ्चिकावन्ध्याभृङ्गद्रवैः स्वेदितो बली। ततः स पावकद्रावैः स्विन्नः स्याद्दतिदीप्तिमान्"। सर्पाक्षी (नागफणी) चिञ्चिका (अम्बिली) वन्ध्या (बाङ्झखेखसा) भृङ्गः भृङ्गराजः। अवदो मुस्ता पावकः चित्रकम्। अथ रसस्य मारणविधिः "धूमसारं रसं तोरीगन्धकं नवसादरम्। यामैकं मर्द्दयेदम्लैर्भागं कृत्वा समं समम्। काचकूप्यां विनिःक्षिप्य ताञ्च मृद्वस्त्रमुद्रया। विलिप्य परितो वक्त्रे मुद्रां दत्त्वा विशोषयेत्। अधःसच्छिद्रपिठरीमध्ये कूपीं निवेशयेत्। पिठरीं वालुकापूरैर्भृत्वा च कूपिकागलम्। निवेश्य चुल्यां तदधो वह्निं कुर्य्यात्क्रमैः शनैः। तस्मादप्यधिकं किञ्चित्पावकं ज्वालयेत् क्रमात्। एवं द्वादशभिर्यामैर्म्रियते रस उत्तमः। स्फोटयेत् स्वाङ्गशीतं तमूर्द्ध्वगन्धकं त्यजेत्। अधस्थञ्च

स्रुतं स्रुतं गृह्णीयात्तन्तु मात्रया। यथोचितानुपानेन सर्वकर्मसु योजयेत्” भावप्र०। सर्व०सं० रसेश्वरदर्शने तन्निरुक्तिः “संसारस्य परं पारं दत्तेऽसौ पारदः स्मृतः” इति। रसार्णवेऽपि “पारदो गदितो यस्मात् परार्थं साधकोत्तमैः। सुप्तोऽयं मत्समो देवि मम प्रत्यङ्गसम्भवः। मम देहरसो यस्माद्रसस्तेनायमुच्यते” इति “कर्मयोगेन देवेशि! प्राप्यते पिण्डधारणम्। रसश्च पवनश्चेति कर्मयोगो द्विधा स्मृतः। मूर्च्छितो हरति व्याधीन् मृतो जीवयति स्वयम्। बद्धः खेचरतां कुर्य्याद्रसो वायुश्च भैरवि!” इति। मूर्च्छितस्वरूपमप्युक्तम् “नानावर्णो भवेत् सूतो विहाय घनचापलम्। लक्षणं दृश्यते यस्य मूर्च्छितं तं वदन्ति हि। आर्द्रत्वञ्च घनत्वञ्च तेजो गौरव चापलम्। यस्यैतानि न दृश्यन्ते तं विद्यान्मृतसूतकम्” इति। अन्यत्र बद्धस्वरूपमप्यभ्यधायि “अक्षतश्च लघुद्रावी तेजस्वी निर्मलो गुरुः। स्फोटनं पुनरावृत्तौ बद्धसूतस्य लक्षणम्” इति। “ननु हरगौरीसृष्टिसिद्धौ पिण्डस्थैर्य्यमास्थातुं पार्य्यते तत्सिद्धिरेव कथमिति चेन्न अष्टादशसंस्कारवशात्तदुपपत्तेः तदुक्तमाचार्य्यैः “तस्य हि साधनविधौ सुधियां प्रतिकर्मनिर्मलाः प्रथमम्। अष्टादशसंस्कारा विज्ञातव्याः प्रयत्नेनेति”। ते च संस्कारा निरूपिताः “स्वेदनमर्द्दनमूर्च्छनस्थापनपातननिरोधनियमाश्च। दीपनगगनग्रासप्रमाणमथ जारणापिधानम्। गर्भद्रुतिबाह्यद्रुतिक्षारणसरागसारणाश्चैव क्रमेण वेधो भक्षणमष्टादशधेति रसकर्मेति”। रसेश्वरशब्दे विवृतिः

**पारतन्त्र्य** न० परतन्त्रस्य भावः ष्यञ्। पराधीनत्वे

**पारत्रिक** त्रि० परत्र भवं, हितं वा ठक्। १परलोकहितकारके कर्मणि २परलोकभवे च।

**पारदण्डक** पु० देशभेदे शब्दरत्ना०।

**पारदारिक** पु० परस्य दारान् गच्छति “गच्छतौ परदारादिभ्यः” वार्त्ति० ठक्। यथेष्टं परस्त्रीगामिनि।

**पारदार्य्य** न० परस्य दारा दारा यस्य तस्य कर्म्म—ष्यञ्। परदारगमने। तच्चोपपातकम् याज्ञ० ३।२३५ श्लो०।

**पारदृश्वन्** त्रि० पारं दृष्टवान् दृश—भूते क्वनिप्। पारं दृष्टवति। स्त्रियां ङीप् रश्चान्तादेशः।

**पारदेश्य** त्रि० परदेशे भवः परदेशात् आगतो वा ष्यञ्। १परदेशोद्भवे द्रव्यादौ याज्ञ०२।२५५। २परदेशागते च।

**पारमार्थिक** त्रि० परमार्थाय पारलौकिकधर्म्माय हितं ठक्। १परमार्थोपायभूते श्रेयःसाधने कर्म्मणि। परमार्थतो भवः तत आगतो वा ठक्। २वस्तुत आगते स्वाभाविके। स्वार्थे वा ठक्। यथार्थे “सत्ता त्रिविधा पारमार्थिकी व्यावहारिकी प्रातीतिकी चेति वेदान्तस०।

**पारम्परीण** त्रि० परम्परया आगतः खञ्। परम्परायाः क्रमादागते। [“पारम्पर्य्यक्रमागतः” इति मनुः।

**पारम्पर्य्य** न० परम्परैव स्वार्थे ष्यञ्। कुलादिपरम्परायाम्

**पारम्पर्य्योपदेश** पु० पारम्पर्य्येण पित्रादिपरम्परया उपदेशः न तु साक्षात्कारादिज्ञानम्। ऐतिह्ये अमरः (यथा इह वटे यक्षः) इत्यादिरुपदिश्यते एव सर्वैः न तु तत्र यक्षः केनचित् दृश्यते। [साधौ।

**पारयुगीन** त्रि० परयुगे साधु प्रतिजना० खञ्। परयुग-

**पारलौकिक** त्रि० परलोकाय हितं ठक् द्विपदवृद्धिः। परलोके जन्मान्तरादौ, हिते कर्म्मणि।

**पारवत** पुंस्त्री पारावत+पृषो०। पारावते द्विरूपकोषः।

**पारवश्य** न० परवशस्य भावः ष्यञ्। पारतन्त्र्ये त्रिका०।

**पारशव** पुंस्त्री “निषादः शूद्रकन्यायां यः पारशव उच्यते। स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः” इति. मनूक्ते ऊढ़ायां शूद्रायां ब्राह्मणेनोत्पादिते निषादरूपे १सङ्कीर्णवर्णे २परस्त्रीतनये ३लौहे च मेदि०। परशु+इदमर्थेऽण्। ४परशुसम्बन्धिनि त्रि०। ५मध्यस्थे देशभेदे वृ०सं० १४अ०। पारशवस्य गोत्रापत्यं युवादि०अञ्। ६तद्गोत्रापत्ये हरिता० फञ्। पारशवायन तदीये यूनि गोत्रापत्ये।

**पारशीक** पु० १देशभेदे तद्देशोद्भवे २घोटके च (आरबी)।

**पारश्वधिक** पु० परश्वधः प्रहरणमस्य “परश्वधाट्ठञ्” च पा० ठञ्। परश्वधास्त्रेण योद्धरि अमरः। पक्षे अण् पारश्वध तत्रार्थे हेमच०।

**पारस** त्रि०पारस्यदेशभवे अण् वा०यलोपः। १पारस्यदेशोद्भवे २तत्सम्बन्धिनि च स्त्रियां ङीप्। “ज्येष्ठाश्लेषामघापूर्वारेवतीभरणीद्वये। विशाखार्द्रोत्तराषाढाशतभे पापवासरे। लग्ने स्थिरे सचन्द्रे च पारसीमारवीं पठेत्” मुहूर्त्तगणपतिः। [स्त्री०शब्दरत्ना० स्त्रियां ङीप्।

**पारसिक** पु० पारसीक+पृषो०। १पारस्यदेशे २घोटके पुं

**पारसीक** पु०१देशभेदे २तद्देशस्थे जने ब०व०। “पारसीकांस्ततो जेतुम्” रघुः। ३तद्देशस्थे घोटके पु०स्त्री (आरबीघोड़ा) तद्देशस्य कुङ्कुमाकरता भावप्र० उक्ता कुङ्कुमशब्दे २६४० पृ० दृश्या।

**पारस्कर** पु०पारं करोति कृ—ट पारस्करा० सुट्। १देशभेदे २गृह्यसूत्रकारके मुनिभेदे च।

**पारस्करादि** "पारस्करप्रभृतीनि च संज्ञायाम्" पा॰ उक्ते सुट्कनिपातनिमित्ते शब्दगणे स च "पारस्करो देशः। कारस्करो वृक्षः। रथस्पा नदी। किष्कुः प्रमाणम्। किष्किन्धा गुहा। (तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च) (प्रात्तुम्पतौ गवि कर्त्तरि)।

**पारस्त्रैणेय** त्रि॰ परस्त्रिया अपत्यं ढक् इनङादेशः। जारजे परस्त्रियाः सुते अमरः स्त्रियां ङीप्।

**पारस्यकुलीन** त्रि॰ परस्य कुले भवः प्रतिजना॰ खञ् तत्र परस्यकुलेति पाठात् अलुक्स॰। परकुलोत्पन्ने दत्तकसुतादौ

**पारापत** पुंस्त्री॰ परादृत्यापतति प्रेम्णा आ+पत–अच्। पारावते (पायरा) अमरः स्त्रियां ङीष्।

**पारावत** पुंस्त्री॰परं जीवमवति परात् शत्रोर्वा अहङ्कारद्वा ज्ञानोपदेशद्वारा अवति अव–शतृ परावन् तत्त्वज्ञः तस्यायमुपदेष्टा अण्। कपोते अमरः स्त्रियां ङीष्। चतुर्विंशगुरुमध्ये पारावतस्यापि गुरुत्वमुक्तं तत्र प्रसङ्गात् चतुर्विंशतिगुरवोऽत्र प्रदर्श्यन्ते "पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः। कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद्गजः। मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः। कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत्। ततो मे गुरवो राजन्! चतुर्विंशतिराश्रिताः। शिक्षावृत्तिभिरेतेषामन्वशिक्षमिहात्मना" भाग॰ ११।७ अ॰। तत्कथा तदुत्तरत्र दृश्या

**पारापा(वा)र** न॰ पारमपारञ्चास्त्यस्य अर्शा॰ अच्। १समुद्रे अमरः द्व॰। २तटद्वये द्वि॰व॰। पारावारशब्दोऽप्युभयत्रार्थे।

**पारायण** न॰ पारं समाप्तिमयतेऽनेन अय–ल्युट्। १साकल्ये अमरः २मन्वादीनामाद्यन्तपाठे च। तत्र वेदपारायणं चतुष्प्रकारम् ऋग्वेदशब्दे १४१२पृ॰दृश्यम्। पुराणसम्पूर्णग्रन्थपाठेऽपि पारायणव्यवहारः। तत्र भागवतपारायणे कश्चिद्विशेषः पद्म॰पाता॰ ७१अ॰उक्तो यथा "कृतनित्यक्रियः प्रातः कुशहस्तः कृतासनः। देवद्विजगुरून्नत्वा ध्यात्वा विष्णुं सनातनम्। द्वैपायनं नमस्कृत्य शुकदेवञ्च भक्तितः। हिरण्याक्षवधं यावत् प्रथमेऽहनि कीर्त्तयेत्। चरितं भरतस्यापि द्वितीयेऽथ तृतीयके। मथनञ्चामृतस्यापि, यत्र कूर्मः स्वयं हरिः। चतुर्थदिवसे, चैव दशमे हरिजन्म च। पञ्चमे तु पठेद्विद्वान् रुक्मिण्या हरणावधि। षष्ठे चोद्धवसंवादं सप्तमे तु समापयेत्। अध्यायं प्राप्य विरमेन्न तु मध्ये कदाचन। कृते विरामे मध्ये तु अध्यायादिं पठेत् पुनः। पठेदर्थं बुध्यमानः श्रावयेद्वैष्णवोत्तमैः। श्रोता तु प्राङ्मुखो भूत्वा शृणुयाद्भक्तितत्परः। अध्याये स्वर्णमाषैकं तथा दद्याच्च दक्षिणाम्। समाप्तौ च ततो धेनुं स्वर्णशृङ्गीं निवेदयेत्। कुर्याच्च वैष्णवं होमं सात्वतान् भोजयेत्ततः। एवं यः कुरुते देवि! पाठं भागवतस्य तु। श्रवणं श्रावणं वापि स दृष्टां गतिमाप्नुयात्। एतत् पारायणं नाम सर्वकामफलप्रदम्" तत्र मासभेदाः पाद्मोत्तरख॰ १९७अ॰ उक्ता यथा "अथ ते संप्रवक्ष्यामि सप्ताहश्रवणे विधिम्। सहायैर्वस्तुभिश्चैव प्रायः साध्यो विधिः स्मृतः। दैवज्ञन्तु समाहूय मुहूर्त्तं पृच्छ्य यत्नतः। विवाहे यादृशं वित्तं तादृशं परिकल्पयेत्। नभस्य आश्विनोर्जौ च मार्गशीर्षः शुचिर्नभाः। एते मासाः कथारम्भे श्रोतॄणां मोक्षसूचकाः"। "कृच्छ्रो देव्ययुतञ्चैव प्राणायामशतद्वयम्। तिलहोमसहस्रन्तु वेदपारायणं भवेत्" इति मिता॰धृतषट्त्रिंशन्मतम्।

**पारायणिक** त्रि॰ पारायणमावर्त्तयति ठक्। १तदावर्त्तनकारिणि। पारयणस्येदं तदधिकृत्य वा प्रवृत्तं "वृद्धाच्छः" पा॰ छ। परायणीय पारायणकसम्बन्धिनि पारायणग्रन्थाधिकारेण प्रवृत्ते ग्रन्थभेदे च।

**पारारुक** पारमृच्छति ऋ–उकञ्। प्रस्तरे शब्दच॰

**पारावतघ्नी** स्त्री पारावारं हन्ति हन–टक् पृषो॰। पारवति दूरदेशे भवाऽपि वृक्षादेर्हन्त्री। सरस्वत्यां नद्याम् ऋ॰ ६।६१।२। इतास्तृचकमधिकृत्य निरु॰२।२४ उक्तं "पारावतघ्नीं पारावारघातिनी"।

**पारावतपदी** स्त्री पारावतस्येव पादो मूलमस्य अन्त्यलोपः ङीप् पद्भावः। (नया फटकि) १लतायां रत्नमा॰। २काकजङ्घायां राजनि॰। [श्वेतोलतायाम् अमरः।

**पारावताङ्घ्रि** पु॰ पारावतस्याङ्घ्रिरिव मूलमस्य। ज्योति-

**पारावताङ्घ्रिपिच्छ** पुंस्त्री॰ पारावताङ्घ्रिरिवास्तदाकारयुतं पिच्छमस्य। पारावतभेदे राजनि॰।

**पारावारीण** त्रि॰ पारमवारञ्च समस्तं समुद्रं वा गच्छति खञ्। १तटद्वयगामिनि २समुद्रगामिनि च। पारापारीणोऽप्यत्र।

**पाराशर** पु॰ पराशरस्यापत्यं गर्गा॰ यञ् पाराशर्य्यः तस्य छात्रा॰ कण्वा॰ अण् अन्त्ययलोपः। १पाराशर्य्यस्य छात्रेषु। पराशरेण प्रोक्तम् अण्। २पराशरप्रोक्ते स्त्रियां ङीप् "कलौ पाराशरी स्मृतिः" पराशरः।

**पाराशरकल्पिक** त्रि॰पाराशरकृतः कल्पः तं वेत्त्यधीते वा

"विद्याश्चयणकल्पान्तात्" वार्त्ति॰ ठक्। १पराशरकृतकल्पग्रन्थाध्येतरि २तत्कल्पग्रन्थस्यार्थवेत्तरि च।

**पाराशरि** त्रि॰ पराशरस्येदम् इञ्। अपत्ये तु यञेव। १पराशरसम्बन्धिनि २शुकदेवे पु॰ त्रिका॰।

**पाराशरिन्** पु॰ व॰व॰। पाराशर्य्येण प्रोक्तं भिक्षुसूत्रमधीयते इनि यलोपः। वेदव्यासप्रणीतशारीरकसूत्ररूप भिक्षुसूत्राध्यायिषु चतुर्थाश्रमिषु अमरः।

**पाराशरीय** त्रि॰ पराशरस्यादूरदेशा॰ कृशाश्वा॰ छण्। पराशरसन्निकृष्टदेशादौ।

**पाराशर्य्य** पु॰ पराशरस्यापत्यं गर्गा॰ यञ्। पराशरस्यापत्ये वेदव्यासे द्वैपायनशब्दे दृश्यम्। "यञञोः" पा॰ ततो यूनि फञ् पाराशर्य्यायण तदीये यून्यपत्ये।

**पारिकर्म्मिक** त्रि॰ परिकर्म्मणि नियुक्तः ठञ्। परिकर्मकरणे नियुक्ते।

**पारिकाङ्क्षिन्** पु॰ पारयति संसारात् तारयति पारि णिनि पारि ब्रह्मज्ञानं तत्काङ्क्षति णिनि। यतिभेदे अमरः।

**पारिख** त्रि॰ परिखायां भवः पलद्या॰ अण्। परिखाभवे तस्येदं "इञश्च"पा॰छ। पारखीय तत्सम्बन्धिनि त्रि॰।

**पारिखेय** त्रि॰ परिखा प्रयोजनमस्य ढक्। परिखार्थे स्थलादौ स्त्रियां ङीप् पारिखेयी भूमिः।

**पारिग्रामिक** त्रि॰परिग्रामं भवः ठञ्। ग्रामस्य परितोभवे

**पारिजात** पु॰ पारमस्यास्ति पारी समुद्रस्तस्म जातः जन—ड। १देवतरुभेदे "ततोऽभवत् पारिजातः सुरलोकविभूषणम्" भाग॰ ८।८।५श्लो॰। तस्यामृतमथनकाले समुद्रादुत्पत्तिरुक्ता। हरिवंशे तु १८६अ॰तस्य कश्यपात् उत्पत्तिरुक्ता तन्नामनिरुक्तिश्चान्या दर्शिता यथा

"पारिजातं ततोऽस्राक्षीददित्याः प्रियकाम्यया। सर्वकामप्रदैः पुष्पैराहृतं दिव्यगन्धजैः। विशाखं सर्वदा दृश्यं सर्वभूतमनोहरम्। सर्वपुष्पाणि दृश्यन्ते तस्मिन्नेव महाद्रुमे। ईहयान्यस्य पुष्पाणि विभक्त्यर्थकाऽतिरूपिणी। बहुरूपाणि चाप्यस्य पत्राऽपि च तथाऽपरा। मन्दरादपि हचाञ्च सारमुद्धृत्य कश्यपः। तस्मादेष तरुश्रेष्ठः सर्वेषां ज्येष्ठतां गतः। ततस्तत्र निवध्याथ कश्यपं प्रददौ शुभा। अदितिर्मम पुत्रार्थं सौभाग्यार्थं तथैव च। निष्क्रयेण मया दत्तः कश्यपस्तु तपोधनः। इन्द्रोदत्तस्तथेन्द्राण्या सौभाग्यार्थं ततो मम। सोमश्चाप्यथ रोहिण्या ऋद्ध्या च धनदस्तथा। एवं सौभाग्यदो वृक्षः पारिजातो न संशयः। पारिजातो पिष्णुपद्याः पारिजातेति शब्दितः। मन्दारपुष्पैर्यद्युक्तो मन्दारस्तेन कथ्यते। कोऽप्येषं दारयित्वाङ्कुरजानन्तो यतो जनाः। कोविदारः इति ख्यातस्तस्ततः स महातरुः। मन्दारः कोविदारश्च पारिजातश्च नामभिः। स वृक्षो जायते दिव्यो यस्यैतत् कुसुमोत्तमम्"। तस्य द्वारकायामानयनकथा पारिजातहरणे तदुत्तराध्यायेषु दृश्या। २नागभेदे भा॰आ॰ ५७अ॰। ३ऋषिभेदे भा॰स॰५अ॰। स्वार्थे क। पारिजातक तत्रार्थे अमरः।

**पारिजातसरस्वती** स्त्री पारिजातेश्वरी सरस्वती। सरस्वतीभेदे तन्मन्त्रादि तन्त्रसारे दृश्यम्।

**पारिणाय्य** त्रि॰ परिणये तत्काले लब्धम् बा॰ष्यञ्। परिणयकाले लब्धे धनादौ "मातुः पारिणाय्यं स्त्रियो विभजेरन्" दायभागे वशिष्ठः।

**पारिणाह्य** त्रि॰ परिणाहमर्हति बा॰ ष्यञ्। गृहोपकरणे शय्यासनादौ मनुः ९।११ कुल्लू॰।

**पारितथ्या** स्त्री परितस्तथा परितथा स्वार्थे ष्यञ्। सीमन्तस्थितायां स्वर्णादिपट्टिकायां (सिंथी) अमरः।

**पारितोषिक** त्रि॰ परितोषः प्रयोजनमस्य ठञ्। परितोषार्थं दीयमाने धनादौ।

**पारिधेय** त्रि॰ परिधौ भवः शुभ्रा॰ ढक्। परिधौ भवे।

**पारिन्द्र** पुंस्त्री॰पारीन्द्र+पृषो॰। सिंहे हेमच॰ स्त्रियां ङीष्।

**पारिपन्थिक** त्रि॰ पन्थानं वर्ज्जयित्वा व्याप्य वा परिपन्थम् अव्ययीभा॰ तत्र तिष्ठति हन्ति वा ठक् "परिपन्थश्च तिष्ठति" पा॰उक्तेः निपा॰ पन्थादेशः। पन्थानं वर्ज्जयित्वा व्याप्य वा १स्थायिनि २हन्तरि च चौरे हेमच॰।

**पारिपाट्य** न॰ परिपाट्येव स्वार्थे ष्यञ्। परिपाट्याम्।

**पारिपा(या)त्र** पु॰ पर्वतभेदे "हिमवान् पारिपात्रश्च" भा॰ स॰ १॰ अ॰। स तु भारतवर्षस्थकुलाचलभेदः यथोक्तं "विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः। तेषां सहस्रशो राजन्! पर्वतास्तु समीपतः" भा॰ भी॰ ९ अ॰। "जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ। आनीलनिषधौ प्राप्तौ परस्परनिरन्तरौ। निषधः पारिपात्रश्च मेरोःपार्श्वे तु पश्चिमे। यथा पूर्वौ तथा चैता वानीलनिषधायतौ" मार्क॰ पु॰ ५४अ॰। "वेदस्मृतिर्वेदवती वृत्रघ्नी सिन्धुरेव च। वेण्वा सा नन्दिनी चैव सदानीरा नदी तथा। पारा चर्म्मण्वती नूपी विदिशा वेत्रवत्यपि। शिप्रा ह्यवर्णी च तथा पारिपात्राश्रयाः

स्थिताः" मार्कं० पु० ५७ अ०। "महाकाशाजदास्तै व पारियात्रनिवासिनः" विष्णु पु०। स च पर्वतः हृ०सं० १४ अ० कूर्मविभागे मध्यस्थिततयोक्तः यथा "उत्तरशाखोतककुकुदकालकोटिकुकुराश्च पारियात्रनगः" स्वार्थे क। पारिपात्रक तत्रार्थे क्वचित्तु यमध्यपाठस्तत्रार्थे।

**पारिपार्श्विक** त्रि० परिपार्श्वं पार्श्वं व्याप्य वर्त्तते ठक्। पार्श्वं व्याप्य स्थायिनि १सेवकादौ। स्थापकानुचरे २नटभेदे पु० "नटी विदूषको वाऽपि पारिपार्श्विक एव वा। सूत्रधारेण सहितः संलापं यत्र कुर्वते"। सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते तस्यानुचरः पारिपार्श्विकः" सा०द०।

**पारिप्लव** त्रि० परि+प्लु–अच् स्वार्थेऽण्। १चञ्चले २व्याकुले च अमरः। ३तीर्थभेदे भा० व० ८ अ०। पञ्चममन्वन्तरे ५प्रकृतिभेदे हरिवं० ७ अ०। ६आख्यानभेदे शत० ब्रा० १३।४।३।२। तदाख्यानं "पारिप्लवमाख्यानमाख्यायन्" इत्युपक्रमे "मनुर्वैवस्वतो राजेत्याह" इत्यादिकं तत्र दृश्यम्

**पारिभद्र** पु० परितो भद्रमस्यास्य प्रज्ञाद्यण्। (पालदामान्दार) १वृक्षे अमरः। "पारिभद्रोऽनिम्बवृक्षः प्रयोधभेदः क्रिमिप्रणुत्। तस्य पुष्पं पित्तरोगकर्णव्याधिविनाशनम्" भावप्र०। परिभद्राय शायति शै–क। २देवदारुवृक्षे ३निम्बवृक्षे च पु० मेदि०। ४कुष्ठौषधौ न० शब्दच०। ५सरलवृक्षे पु० शब्दच०। ६शाल्मलिद्वीपपतिपुत्रभेदे ७तद्वर्षभेदे च पु० भाग० ५।२०।९ श्लो०।

**पारिभाव्य** न० परिभवाय रोगप्रशमनाय हितः ष्यञ्। कुष्ठौषधौ अमरः। परिभुवः प्रतिभुवो भावः ष्यञ्। प्रतिभूभावे "साक्षित्वं पारिभाव्यञ्च" इति स्मृतिः।

**पारिभाषिक** त्रि० परिभाषात आगतः ठञ्। १परिभाषातः प्राप्ते २परिभाषाकृताधुनिकसङ्केतयुते शब्दे पु० ३तादृशसंज्ञायां स्त्री। "उभयावृत्तिधर्मेण संज्ञा स्यात् पारिभाषिकी"। "उभयावृत्तिधर्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी यथाकाशादिः सा हि द्वितीयावृत्तिनैव शब्दादिना रूपेण तदाश्रयमभिधत्ते न चाकाशादिपदस्य गगनादौ निरवच्छिन्नैव शक्तिः पटादिपदस्यापि पटादौ तादृशशक्त्यापत्तेः पटे शक्तमपि पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिप्रत्युत्तरं ततः पटत्वविशिष्टज्ञानानुभवादनन्यं तच्छक्तिरवच्छिन्नेति चेत् शब्दवति शक्तमाकाशपदं न शब्दत्वावच्छिन्नशक्तिमदित्येवं प्रत्युदासायाकाशादिपदात् शब्दवत्त्वेन गगनस्य प्रतीतिरतस्तथापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम्। "यद्वाधुनिकसङ्केतशालित्वात् पारिभाषिकम्" तत्रार्थे यत्रामाधुनिकसङ्केतवत्तदेव तत्र पारिभाषिकं यथा पित्रादिभिः पुत्रादौ सङ्केतितं चैत्रादि यथा च शास्त्रकृद्भिः शिवत्रभावादौ पचतादि" शब्दशक्तिप्रका०।

**पारिमाण्डल्य** न० परितो मण्डलं यस्य सर्वत्र विद्यमानत्वात् परिमण्डलः परमाणुस्तस्य भावः ष्यञ्। १न्यायोक्ते असमवायिकारणताशून्ये परमाणुपरिमाणे। स्वार्थे ष्यञ्। २परिमण्डलशब्दार्थे परिमण्डलशब्दे दृश्यम्।

**पारिमुखिक** त्रि० परिमुखं वर्त्तते ठक्। मुखसमीपे वर्त्तमाने। [हेमच०। पारिपात्रशब्दे दृश्यम्।

**पारियात्रिक** पु० पारियात्र+स्वार्थे ठक्। कुलाचलभेदे

**पारियानिक** पु० परियानं प्रयोजनमस्य ठक्। मार्गयानयोग्यरथे हेमच०। [रिणि तापसे हेमच०।

**पारिरक्षक** पु० परिरक्षा व्रतभेदः प्रयोजनमस्य ठक्। मस्क-

**पारिव्राजक** न० परिव्राजकस्य भावः युवा० अण्। परिव्राजकस्य भावे सन्न्यासे। [(पलाशपिपुल) ख्याते वृक्षे।

**पारिश** पु० पिपूर्त्ति पृ–क्विप् पारी तां श्यति शो–क।

**पारिषत्क** पु० परिषदं तत्प्रतिपादकं ग्रन्थमधीते वेत्ति वा उक्था० ठञ्। परिषदुपलक्ष्याध्येतरि तद्वेत्तरि च।

**पारिषद** त्रि० परिषदि साधु अण् अर्थेऽर्थे प्रज्ञा० अण् वा। १सभासाधौ २सभासदे च।

**पारिषदक** त्रि० परिषदा कृतं कुला० वुञ्। परिषदा कृते

**पारिषद्य** त्रि० परिषदि साधु–ण्य। सभायां साधौ

**पारिसीर्य** त्रि० परिसीरं सीरं वर्जयित्वा अव्ययी० परिमुखा० ञ्य। हलवर्जनेन क्षये।

**पारिहनव्य** त्रि० परिहनु+परिमुखा० ञ्य। हनूपरिभवे

**पारिहारिक** त्रि० परिहारे साधु ठक्। परिहारकारके शब्दार्थकल्पतरुः। [स्वार्थे ष्यञ्। वलये अमरः।

**पारिहार्य्य** पु० परिह्रियतेऽसौ परि+हृ–कर्म्मणि ण्यत्

**पारी** स्त्री पा–पाने रक्षणे वा सम्प०भावे क्विप् तां राति रा–क गौरा० ङीष्। १जलपूरे २कर्ष्यां गलन्तिकायां ३हस्तिपादबन्धनदामनि च मेदि०। [मानिकारके च।

**पारीण** त्रि० पारं गच्छति पार+खञ्। १पारगे २कर्मठ-

**पारीन्द्र** पु० पृ–पालने कर्म्मणि इण् पारिः पशुः पारिरिन्द्र इव। १सिंहे २अजगरसर्पे च हेमच०।

**पारीरण** पुं स्त्री० पार्य्यां जलपूरे रणति रण+अच्। कमठे स्त्रियां ङीष्। १दण्डे २पटशाटके च विश्वः। [उणादि०

पारु पु० पिबति जलं रश्मिभिः पा—रु । १आदित्ये २वह्नौ च

पारुच्छेपि पु० आवापभेदे आश्व०श्रौ० ७।११।१।

पारुष्ण स्त्री पशुभेदे यजु० २४।२४ स्त्रियां ङीष् ।

पारुष्य न० परुषस्य भावः परुषि भवो वा ष्यञ् । १निष्ठुरत्वे २दुर्वाक्ये च मेदि० । ३इन्द्रवने विश्व: ४अगुरुचन्दने शब्दच० ५वृहस्पतौ पु० मेदि० । ६विरुद्धाचरणे दण्डपारुष्यशब्दे ३५२४ पृ० दृश्यम् ।

पारेगङ्ग अव्य० गङ्गायाः पारम् अव्ययी० एदन्तत्वं निपा०। गङ्गायाः पारे पारेसमुद्रादयोऽपि तत्तत्पारे ।

पार्घट न० पादे घटते घट—अच् पृषो० । पांशौ हारा० ।

पार्थ पु० पृथायाः कुन्त्या अपत्यम् शिवा० अण् । १कुन्तीपुत्रे युधिष्ठिरादौ २अर्जुननामकत्वे शब्दच० । पृथोः पृथिव्या ईश्वरः अण् । ३पृथिवीपाले

पार्थक्य न० पृथक् इत्यस्य भावः ष्यञ् भत्वे अव्ययस्य टिलोपस्यानित्यत्वात् न टिलोपः । पृथक्त्वे

पार्थव न० पृथोर्भावः पृथ्वा० इमनिजोऽभावपक्षे अण् । १पृथुत्वे । पृथोरयम् अण् । २पृथुसम्बन्धिनि स्त्रियां ङीप् । अस्य कार्त्तकौजपा० द्वन्द्वे न अन्तोदात्तता ।

पार्थसारथि पु० ६त० । १श्रीकृष्णे २मीमांसाग्रन्थकारके मिश्रोपाधिके विद्वद्भेदे च ।

पार्थिव पु० पृथिव्या ईश्वरः अण् । १राजनि पृथिव्याविकारः इदं वा उत्सा०अञ् । २भूमिमये त्रि० ३सीतायां स्त्री ङीप् । ४तगरपुष्पे न० राजनि० । पृथिव्याः निमित्तं संयोग उत्पातो वा अण् । ५पृथिवीनिमित्ते ६तत्संयोगे ७तदुत्पाते च ८शरीरे पु० त्रिका० । [८२।१५ भा०।

पार्थ्य पु०पृथेरपत्यं वा० यक् । पृथिवंशजे ऋषिभेदे ऋ०१०।

पार्य्य पु० पारे भवः यञ् । रुद्रभेदे यजु० १६।४२।

पार्य्याग्निक त्रि० पर्य्यग्निरेव स्वार्थे क वा अस्यास्य प्रज्ञा० अण्। १सम्पूर्णे २मृगभेदे पुंस्त्री० शब्द० स्त्रियां ङीष् पर्य्यग्निमाह ठक् । ३पर्य्यग्निजातेति वादिनि ।

पार्वण त्रि०पर्वणि क्रियते शैषिकोऽण् पर्वणि भवे तु कालाट्ठञेव स्यात् तेन पार्विक इत्येव अतएव "न शारदः पार्विक शर्वरीश्वरः" इति नैषधे पठित्वा मल्लिनाथेन तथोक्तम् । १पर्वविहिते २अमावास्यानिमित्तके श्राद्धे न० यथोक्तं श्रा०त० "अमावास्याकर्त्तव्यपर्वकर्त्तव्ययोः पार्वणत्वमाह भविष्यपुराणम् "अमावास्यां यत् क्रियते तत् पार्वणमुदाहृतम् । क्रियते वा पर्वणि यत् तत्पार्वणमिति स्मृतिः" । अत्र यद्यित्यादिवचनाभिधानेन विष-सार्थवाचकेन च पार्वणस्य लक्षणं द्वितीयवृत्तं पर्वणि यत् क्रियते इत्यनेनामावास्यायाः पर्वत्वात्तच्छ्राद्धस्य वैदिकप्रयोगाधीनयौगिकत्वेन पार्वणत्वप्राप्तौ अमावास्यायां यत् पृथगुपादानं तदमावास्याश्राद्धस्य रूढित्वार्थं तेन पार्वणेन विधानेन इत्यादौ यौगिकनानावयवशक्त्यपेक्षया एकस्या एव समुदायशक्तेर्लघुत्वात् अमावास्यापार्वणधर्मातिदेशो लभ्यते न तु पूपादिद्रव्याष्टकादिपार्वणधर्मातिदेशः । अतः अमावास्यायामष्टम्यादि पर्वणि च तन्निमित्तकश्राद्धे पार्वणश्राद्धम् अन्यत्र पार्वणविधिना श्राद्धमित्यभिलापे विशेषः"। कालमाधवीये च शातातप आह "दर्शश्राद्धन्तु यत् प्रोक्तं पार्वणं तत् प्रकीर्त्तितम् । अपराह्णे पितृणां तु तत् प्रदानं विशेष्यते" इति । यद्यप्येतादृशं पार्वणं प्रतिपदि न प्राप्नोति तथापि तद्विकृतिरूपतया त्रिपुरुषोद्देशेन कर्त्तव्यादिकाम्यश्राद्धादेः पार्वणत्वं व्यवहर्त्तुं शक्यम् । अतएव वायवीयवाक्यं पूर्वमुदाहृतम् "त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः" इति । तच्च कालभेदाच्च नि०सि० निर्णीताः यथा वृद्धपराशरः "श्राद्धं हस्तावचन्द्रे भच्छायामङ्गचसंक्रमे । नवोदके नवान्ने च नवच्छत्रे तथा गृहे । मवैकुलेषु चेहन्ते पितरो हि मघास्वपि" । "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" इति शातातपपाठः नवोदके नवशूर्पव्याप्यादाविति केचित् । वर्षोपक्रमे आर्द्राप्रवेशे इति गौडाः "वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः" अतः कृष्णपक्षे नेति गौडाः । मैथिलास्तु "आसतापयणं चैव धान्यजातं नरोत्तम !" इति वाराहोक्तेः प्रतिधान्यं श्राद्धमाहुः तच्च जातपदस्य श्राद्धयोग्यमङ्कुरपरत्वात् । हेमाद्रौ जातूकर्ण्यः "ग्रहोपरागे च सुते च जाते पितृत्रे गयायामयनद्वये च । नित्यं च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम् । षष्ठं प्राहुरमावास्यां क्षीणचन्द्रां द्विजोत्तमाः । अष्टकासु भवेत्सप्तं तत्र दत्तं तथाऽक्षयम्" । तत्रैव शङ्खः "यदा विष्टिर्व्यतीपातो भानुवारस्तथैवं च । पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम्" । याज्ञवल्क्यः "अमावस्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम् । द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः । व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः । श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः" कृष्णपक्षः वर्षोऽपि "शाकेनापरपक्षं नातिक्रमेत् मासि मासि वाऽशनमिति" स्मृतेः "कर्त्तुं वा चतुर्थ्यां यदहः सम्पद्यते

म्यते चतुर्दशीमिति" कात्यायनोक्तेः "मासि मासि कार्यमपरपक्षस्यापराह्णः श्रेयान्" इत्यापस्तम्बोक्तेश्च वीप्सया सर्वकृष्णपक्षेषु नित्यम् "तेनोपसंहारान्महालयपरत्वं परास्तम् अत्र प्रत्यहं पञ्चम्यादि यदहःसम्पत्तिर्वेति त्रयः पक्षाः यद्येकैकदिने श्राद्धं तदा दार्शं पृथगेव याज्ञवल्क्येनामावास्यायाः पृथङ्निर्देशात् । एतेन कृष्णपक्षे यदहः सम्पद्यते अमावास्यायां तु विशेषेणेति निगमोक्तेर्गुणोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणिमतमप्यपास्तम् । अशक्तौ दर्शेनापि मासि श्राद्धसिद्धिरिति नारायणवृत्तिः । निरग्निकानां कस्मिंश्चिद्दिने आहिताग्नेस्तु दर्श एव "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनूक्तेः सर्वकृष्णपक्षाशक्तौ मात्स्ये "अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत् । कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा" । कर्कोऽपि "आहिताग्नेः संवत्सरे त्रिः श्राद्धनियम" इति । देवलः "अनेन विधिना श्राद्धं कुर्य्यात् संवत्सरं सकृत् । द्विस्त्रिर्वा यथाश्रद्धं मासे मासे दिने दिने" । कृष्णपक्षेष्वपि महालयस्य श्रैष्ठ्यं तच्छ्लोकं प्राक् । व्यतीपाते विशेषमाह हेमाद्रौ शङ्खः "फलं लक्षमुत्पत्तौ भ्रमणे कोटिरुच्यते । पतने शतकोट्यस्तु पाते वै दत्तमक्षयम्" ज्योतिःशास्त्रे "द्वाविंशतिस्तथोत्पत्तौ भ्रमणे चैकविंशतिः । पतने दश नाड्यस्तु पतिते सप्त नाडिकाः" अन्यौ च द्वौ व्यतीपातौ प्रागुक्तौ । हेमाद्रौ मार्कण्डेयः "यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित् । तेनैकेनापि कर्त्तव्यं श्राद्धं च विषुवच्छुभम्" । इदं चापिण्डं कार्यमिति हेमाद्रिः एतच्चैव पिटकोऽपि "उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः" इति मैत्रायणीयपरिशिष्टोक्तेः । तिथिविशेषे फलविशेषो याज्ञवल्क्येनोक्तः "कन्यां१ कन्यावेदिन२श्च पशू३न्वै सत्सुतानपि४ । द्यूतं५ कृषिं६ च वाणिज्यं७ द्विशफैकशफां८।९स्तथा । ब्रह्मवर्चस्विनः पुत्रान्१० स्वर्णरौप्ये सकुप्यके११।१२ । ज्ञातिश्रैष्ठ्यं १३ सर्वकामानाप्नोति१५ श्राद्धदः सदा । प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्" एताः कृष्णपक्षस्था एव महालये तु फलभूमेति पृथ्वीचन्द्रोदयः । पौर्णमास्यां हेमाद्रौ पितामहः "अमावास्याव्यतीपाते पौर्णमास्यष्टकासु च । विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते" एतन्माघ्यादिपरम् "व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ! । पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ! । प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" इति विष्णुधर्मोक्तेः । विष्णुः "माघी प्रौष्ठपद्यूर्द्ध्वं कृष्णा त्रयोदशीति" । अत्र माघी पौर्णमासीति कल्पतरुः । श्रावण्यूर्द्ध्वमपि मघायोगसम्भवात्त्रयोदशी विशेषणमिति गौडाः नक्षत्रेष्वपि याज्ञवल्क्यः "स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा । पुत्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम् । प्रवृत्तचक्रतां चापि वाणिज्यप्रभृतीनपि । अरोगित्वं यशोवीतशोकतां परमां गतिम् । धनं वेदान् भिषक्सिद्धिं कुप्यं गा अप्यजाविकम् । अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति । कृत्तिकादिभरण्यन्तं सकामान् प्राप्नुयादिमान्" । फलान्तराण्यपि महाभारत कौमारिद्वेयानि । माधवीये मरीचिः "कृत्तिकादिषु ऋक्षेषु श्राद्धे यत् फलमीरितम् । विष्कम्भादिषु योगेषु तदेव फलमिष्यते" बृहस्पतिः "आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयम् । सर्वान् कामान् श्रियं विद्यां धनमायुर्यथाक्रमम् । सूर्य्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम् । ववादिकरणेष्वेतच्छ्राद्धकृल्लभते फलम्" अन्यानि च षण्णवतिश्राद्धादीनि प्रागुक्तानि मार्कण्डेयपुराणे "श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने । जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया" ।

"संक्रान्तावुपरागे च पर्वण्यपि महालये । निर्वाप्यास्तु त्रयः पिण्डा एकतस्तु क्षयेऽहनि । एकोद्दिष्टं परित्यज्य पार्वणं कुरुते द्विजः । अकृतं तद्विजानीयात् स नरः पितृघातकः । अमावस्यां क्षयो यस्य प्रेतपक्षेऽथ वा यदि । सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः । त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते । अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते" लिखितस०। एतेषां व्याख्यानतात्पर्यकथनपूर्वकं विकृतिपार्वणविधानम् श्रा०त० निर्णीतं यथा "त्रयं सङ्घटानानां त्रयं कुर्यात् त्रिभ्यो दद्यादित्यर्थः । मृताहपर्युदस्तत्रिदैवतत्वस्य प्रतिप्रसवमाह अमावास्यामिति प्रेतपक्षोऽत्र पितृपक्षः अश्वयुक्कृष्णपक्ष इति यावत् न तु कृष्णपक्षमात्रं कृष्णपक्षसामान्यपरत्वेऽमावास्यापदवैयर्थ्यापत्तेः पितृपक्षं विशेषयति हेमाद्रिमाधवाचार्य्यधृतं नागरखण्डम् "नभो वाथ नभस्यो वा मलमासो यदा भवेत् । सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः" । अत्र श्रावणभाद्रयोरन्यतरस्य मलमासत्वे

ततोविधानावधेः यौ परौ तावेव सुप्तिङौ या च तयोराद्या विधानावधिभूता सैव प्रकृतिरिति तदर्थः। एतदभिप्रायेणैव हरिणा "यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने। यदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः" इति प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्वत्वं बोधकशब्दविधानावधित्वमेव बोध्यं भाष्यैकवाक्यत्वात् नत्वेतत्कारिकोपात्तपूर्वापरत्वं तथासति पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकारकान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च निरुक्तपूर्वत्वरूपलक्षणेनैव प्रसक्तातिप्रसक्तादिवारणसम्भवे प्रकृतिप्रत्यययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव यः शब्द इत्यादिकथनं बोध्यमेवञ्च यस्यार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः तेन सिद्धान्ते तिङर्थप्रकारकान्वयबोधेऽपि न क्षतिः। तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वं तत्प्रकृतित्वमिति फलितम्। एवञ्चावयवशक्तिस्वीकारेऽपि बहुजादावतिप्रसक्त्यादिशङ्कापि नोदेति बहुजादेः प्रकृतिविधानावधित्वाभावात् अवधित्वस्य पूर्वापरत्वरूपस्य निवेशाच्च। अत एतत्पक्षे भाष्ये सुप्तिङ्शब्दौ प्रत्ययान्तरस्याप्युपलक्षकाविति द्रष्टव्यम्। तथा शेखरकारेणापि प्रत्ययविधानोद्देश्यतावच्छेदकाक्रान्तत्वमेव प्रकृतित्वमित्यभिदधे पूर्वसिद्धवस्तुन एव उद्देश्यत्वसम्भवात् पूर्वत्वमर्थायातं बहुजादेरपि सुप उद्देश्यत्वान्न किञ्चिद्दूषणमावहतीति। एवञ्च प्रकरोति प्रत्ययं बोधयतीतिव्युत्पत्तिसत्त्वात् प्रकृतिशब्दो योगरूढ इति बोध्यम्"। १७उपादानकारणे "प्रकृतिश्च दृष्टान्तानुपरोधात्" शा०सू० "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी" हरिका०। १८उपदिष्टसर्वाङ्गके कर्मभेदे। तदेतत् तावच्छा०भा०निर्णीतं यथा "ननु का प्रकृतिः का विकृतिरिति चेत् उच्यते यत्र कर्त्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः यत्र विशेषरूपमेव कर्त्तव्यं श्रुत्योपदिश्यते इतरत् सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। सचातिदेशः प्रत्यक्षवचनाद्वा साम्याद्वा लिङ्गाद्वाऽवगन्तव्यः। तत् सर्वं सप्तमाष्टमाध्यायाभ्यां बहुधा विचारितम्। प्रकृतिश्च द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयञ्च कैश्चित् कर्मभिरपेक्षणीया भवति सेयमवान्तरप्रकृतिः। तत्र तिस्रो मूलप्रकृतयः तासामष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः। "इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि। अस्ति वा नालौकिकत्वादियत्तानवधारणात्। लोकवत् सन्निपात्यारादुपकारिद्वयस्तुतेः। इयत्तायानिश्चितत्वान्मूलप्रकृतिता त्रिषु। अलौकिकत्वेनैतावद्भिरङ्गैः सम्पूर्ण उपकार इति निश्चेतुमशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्वमिति चेत् नैवं लौकिकसदृशत्वात्। यथा लोके भुजिक्रियायामोदनः करणं तस्य सन्निपत्योपकारिणः शाकसूपादयः, आरादुपकारिणः पीठप्रदीपादयः। तथा भावनायां यागः करणम् अवघातादयः सन्निपातिनः, प्रयाजादयः आरादुपकारिणः। अतो नात्यन्तिकमलौकिकत्वम्। इयत्ता लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयतां तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति"।

१९सत्त्वरजस्तमसां साम्यावस्थायां साम्यावस्थोपलक्षिते सत्त्वादिगुणे। "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता। केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च" मात्स्ये ४अ०।

"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" सा सू०। "तेषां सत्त्वादिद्रव्याणां या साम्यावस्थाऽन्यूनानतिरिक्तावस्थान्यूनाधिकभावेनासंहतावस्थेति यावत् अकार्य्यावस्थेति निष्कर्षः। अकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामनुगमाय सामान्येति। पुरुषव्यावर्त्तनाय गुणेति। महदादिव्यावर्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्य्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते" प्र०भा०। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" सां० का०। "संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः। कश्चिदर्थः प्रकृतिरेव, कश्चित् विकृतिरेव, कश्चित् प्रकृतिविकृतिः कश्चिदनुभयरूप इति। तत्र का प्रकृतिरेवेत्यत उक्तम् मूलप्रकृतिरविकृतिरिति प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरज-

तमसां साम्यावस्था सा अविकृतिः। प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं नत्वस्या मूलान्तरमस्तीति भावः। कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महदाद्याः प्रकृतिविकृतयः सप्तेति प्रकृतयश्च ता विकृतयश्च ता इति। तथा हि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः। एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतयश्च महतः। एवं पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य। अत्र विकृतिरेव कियती चेत्यत उक्तं षोड़शकस्तु विकार इति। षोडशसंख्यापरिमितो गणः षोडशकः तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्चमहाभूतान्येकादशेन्द्रियाणि चेति षोड़शको गणो विकार एव "न प्रकृतिरिति। यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं तद्विकारभेदानां दध्यङ्कुरादयस्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतमिति न दोषः सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्। अनुभयरूपमुक्तं तदाह न प्रकृतिर्न विकृतिः पुरुषः" इति त॰कौ॰। शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्। त्रिगुणं तत् जगद्योनिः" स्मृतिः। तदनुमापकाः कार्य्यभेदाः तद्भेदाश्च सा॰सू॰ भाष्याद्युक्ता यथा "ततः प्रकृतेः" सा॰ सू॰ "ततो महत्तत्त्वात् कार्य्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः। अन्तःकरणसामान्यस्यापि कार्य्यत्वं तावदेकदा पञ्चेन्द्रियज्ञानानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रमाण्याच्च। तस्य च प्रकृतिकार्य्यत्वेऽयं प्रयोगः। सुखदुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्म्मकद्रव्यजन्या कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति कारणगुणानुसारेणैव कार्य्यगुणौचित्यं चात्रानुकूलस्तर्कः श्रुतिस्मृतयोऽपीति मन्तव्यम्" भा॰ "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" सू॰ कारणानुमापकत्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्य्यजातम् न तु महत्तत्त्वमात्रमत्र विवक्षितं हेतुमत्त्वादीनामखिलकार्य्यसाधारण्यात्। "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति कारिकायामप्यत एव व्यक्ताख्यं सर्वं कार्य्यमेव लिङ्गमित्युक्तम्। तथा च तल्लिङ्गं हेतुमत्त्वादिधर्म्मकमिति वाक्यार्थः। तत्र हेतुमत्त्वं कारणवत्त्वम् अनित्यत्वं विनाशिता प्रधानस्य या व्यापिता पूर्वोक्ता तद्वैपरीत्यमव्यापित्वम्। सक्रियत्वमध्यवसायादिरूपनियतकार्य्यकारित्वम्। प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वाच्च कार्य्यैकदेशमात्रकारित्वम्। न च क्रिया कर्म्मैव वक्तुं शक्यते प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्म्मवत्तया सक्रियत्वापत्तेरिति। अनेकत्वं सर्गभेदेन भिन्नत्वम्। सर्गद्वयासाधारण्यमिति यावत्। न पुनः सजातीयानेकव्यक्तिकत्वम् प्रकृतावतिव्याप्तेः प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात् "सत्त्वादीनामतद्धर्म्मत्वं तद्रूपत्वात्" इत्यागामिसूत्रादिति। आश्रितत्वं चावयवेष्विति" सा॰प्र॰भा॰। एतद्विपरीतत्वमेव तद्धर्म्मत्वम्।

२॰प्रकृत्यंशदेवीपञ्चकरूपशक्तिभेदे "गणेशजननी दुर्गा१ राधा२ लक्ष्मीः३ सरस्वती४। सावित्री५ च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता"। प्रकृतिशब्दनिरुक्तिर्यथा "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता। गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ। मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः। त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता। प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते। प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता"। तस्या आविर्भूतिः स्वरूपञ्च यथा "योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः। पुमांश्च दक्षिणार्द्धाङ्गात् वामाङ्गात् प्रकृतिः स्मृता। सा च ब्रह्मस्वरूपा च यथा नित्या सनातनी। यथात्मा च यथाशक्तिर्यथाग्नौ दाहिका स्मृता। अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते। सर्वं ब्रह्ममयं ब्रह्मन्! शश्वत् पश्यति नारद!। स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया। साविर्बभूव सहसा मूलप्रकृतिरीश्वरी। तथा ज्ञेया पञ्चविधा सृष्टिकर्म्मणि भेदतः। सर्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः। सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः। मध्यमा राजसांशाश्च ताश्च भोग्याः प्रकीर्त्तिताः। सुखसम्भोगवश्याश्च स्वकार्य्ये तत्पराः सदा। अधमास्तामसांशाश्च अज्ञातकुलसम्भवाः। दुर्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः। पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः। प्रकृतेस्तामसांशास्ताः पुंश्चल्यः परिकीर्त्तिताः। एवं निगदितं सर्वं प्रकृतेः परिकीर्त्तितम्"।

इति स्त्रीभावस्य प्रकृत्यंशतया प्रकृतिवाचकशब्दस्यैव प्राशुत्कीर्त्यत्वं निर्णीतं यथा "आदौ राधां समुच्चार्य्य पश्चात् कृष्णं विदुर्बुधाः। निमित्तमस्य मां भक्त वद भक्तजनप्रिय !" श्रीनारायण उवाच "निमित्तमस्य त्रिविधं कथयामि निशामय। जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता। गरीयसीति जगतां माता शतगुणैः पितुः। राधाकृष्णेति गौरीशेत्येवं शब्दः श्रुतौ श्रुतः। कृष्णराधेशगौरीति लोके न च कदा श्रुतः। प्रसीद रोहिणीचन्द्र ! गृहाणार्घ्यमिदं मम। गृहाणार्घ्यं मया दत्तं संज्ञया सह भास्कर !। प्रसीद कमलाकान्त ! गृहाण मम पूजनम्। इति दृष्टं सामवेदे कौथुमे मुनिसत्तम !। राशब्दोच्चारणादेव स्फीतो भवति माधवः। धाशब्दोच्चारतः पश्चाद्धावत्येव ससम्भ्रमः। आदौ पुरुषमुच्चार्य्य पश्चात् प्रकृतिमुच्चरेत्। स भवेन्मातृगामी च वेदातिक्रमणे मुने !" ब्रह्मवैपु०जन्मख०५०अ०।

**प्रकृतिज** त्रि०प्रकृत्या जायते जन–ड। १स्वभावजे। प्रकृतिरूपेण जायते जन–ड। प्रकृतिस्वभावरूपे सांख्यमतसिद्धे सत्त्वादिगुणे "गुणाः प्रकृतिजाः" गीता।

**प्रकृतिधर्म** पु० ६त०। सांख्यमतसिद्धे प्रकृतिधर्मभेदे स च प्रकृतिशब्दे हेतुमदनित्यादिविपरीतधर्मरूपेण दर्शितः। सुश्रुते तु "अत ऊर्द्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः। तद्यथा "उभावप्यनादी उभावप्यनन्तौ उभावप्यलिङ्गौ उभावपि नित्यौ उभावप्यपरौ उभौ च सर्वगतावित्ति। एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिण्यमध्यस्थधर्मिणी चेति। बहवस्तु पुरुषाश्चेतनावन्तोऽगुणा अबीजधर्मिणोऽप्रसवधर्मिणो मध्यस्थधर्मिणश्चेति"।

**प्रकृतिमण्डल** न० ६त०। १राज्याङ्गेषु स्वाम्यमात्यादिषु २प्रजासमुदाये च रघुः ८।२ श्लोकव्या० मल्लिनाथः।

**प्रकृतिवत्** अव्य०प्रकृत्या तुल्यम् प्रकृति+वति। व्याकरणप्रसिद्धे आदिश्यमानस्य प्रकृतिभूतस्थानितुल्यकार्य्ये।

**प्रकृत्यादि** पु० प्रकृतिशब्द आदिर्यस्य। सर्वविभक्त्यपवाद तृतीयानिमित्ते शब्दगणे स च गणः "प्रकृति प्राय गोत्र सम विषम द्विद्रोण पञ्चक साहस्र"। प्रकृत्या प्रायेण याज्ञिकः इत्यादि। आकृतिगणोऽयम्। "तेन नाम्ना सुतीक्ष्णश्चरितेन दान्तः" भट्टिः इत्यादि।

**प्रकृष्ट** त्रि० प्र+कृष–क्त। उत्कर्षयुक्ते हेमच०।

**प्रकृष्य** त्रि० प्र+कृष–कर्मणि क्यप्। भूमिसंलग्नतया कर्षणीये "उलूखलबुध्नो यूपः प्रकृष्यः" कात्या०श्रौ० २४।१।२७। प्रकृष्यः देशान्तरनयनेन प्रकर्षणीयः भूमिसंलग्नतया प्रेरणीयो न तु उत्पाठनेनेति तदर्थः।

**प्रक्लृप्ति** स्त्री प्र+क्लृप–भावे क्तिन्। उपक्लृप्तौ विद्यमानतायां कात्या० १।८।२२

**प्रकेत** त्रि० प्र+कित–णिच्–अच्। १प्रकर्षेण ज्ञापके ऋ०१।११३।१भा०। प्रकर्षेण कं सुखमीयतेऽनेन प्र–ई–वा०करणे क्त। २प्रकृष्टसुखसाधने यजु० १५।६।वेददीपः।

**प्रकोथ** पु० प्र+कुथ–पतिनत्वे भावे घञ्। १प्रकृष्टपतने २संशोषे च "शीघ्रं स्तनौ हि मृदुमांसतयोपनद्धः सर्वं प्रकोथमुपयात्यवदीर्य्यते च" सुश्रुतः।

**प्रकोष्ठ** पु० प्रगतः कोष्ठं प्रा०स०। कूर्परस्याधोभागस्थे मणिबन्धपर्यन्ते १हस्तावयवे २गृहद्वारपिण्डे च अमरः। गृहाभ्यन्तरप्रदेशभेदे मुकुटः।

**प्रक्ख(च)र** पु० प्रखर+पृषो०प्र+चर अच् वा। १अश्वसन्नाहे शब्दमाला तत्र द्विधा पाठः। २कुक्कुरे ३अश्वतरे च ४अत्यन्ततीव्रे त्रि० मेदि०।

**प्रक्रम** पु० प्र+क्रम–भावे घञ्। १उपक्रमे अमरः २प्रथमारम्भे ३अवसरे मेदि० भग्नप्रक्रमः काव्यदोषभेदः। भावे ल्युट्। प्रक्रमण–तत्रार्थे प्रकर्षेण क्रमणे न०।

**प्रक्रान्त** त्रि० प्र+क्रम–क्त। १आरब्धे २प्रकरणप्राप्ते

**प्रक्रिया** स्त्री प्र+कृ–भावे श। १प्रकरणे "सा प्रक्रिया या कथमित्यपेक्षा" पार्थसारथिमिश्रः। २अधिकारे नृपादीनां चामरव्यजनच्छत्रधारणादिव्यापारे च ३शब्दप्रयोजकसाधनावस्थायाम् ४पक्षप्रतिपक्षयोः प्रवृत्तौ गौतमसू० ५।१।१६ शबरभा०। [युक्ते त्रि०।

**प्रक्लिन्न** त्रि० प्र+क्लिद–कर्त्तरि क्त। १तृप्ते जटा० २क्लेद-

**प्रक्व(क्वा)ण** पु० प्र+क्वण–भावे घञ् अप् वा। वीणादेः क्वणिते शब्दे अमरः।

**प्रक्षाल** त्रि० प्रक्षालयति क्षालि–अच्। शोधके प्रायश्चित्ते न० "परिघट्टिका वैदिकास्तत्प्रक्षालास्तथैव च" (यतयः) भा० आश्व० ८२अ०। "अप्रक्षालाः (निष्पापतया) शोधकहीनाः" नीलकण्ठः। अत्र मुद्रितपुस्तके "परिघट्टिका वैदानिकास्तत्प्रक्षालास्तथैव च" इत्यपपाठः।

**प्रक्षेप** पु०प्र+क्षिप–भावे घञ्। १अर्पणे २बहुद्रव्यमध्ये अपराल्पांशनिवेशने च।

**प्रक्ष्वेडन** पु० प्र+क्ष्विड–ल्युट्। नाराचास्त्रे हेमच०।

**प्रख्या** स्त्री प्र+ख्या–भावे अङ्। १विख्यातौ २उपमायां च

उत्तरपदस्थः बहु० । उपमायुक्ते यथा वज्रप्रख्यः इत्यादि

**प्रख्यात** त्रि० प्र+ख्या—क्त । विख्याते सुप्रसिद्धे ।

**प्रख्यातवप्तृक** पु० प्रख्यातो वप्ता जनयिता यस्य कप् । विख्यातपितृके अत्युपग्रपुत्रे हेमच० ।

**प्रख्यास्** पु० प्र+चक्ष- असि "बहुलं शिच्च" इत्युक्तेर्न शित् तेन ख्यादेशः । प्रजापतौ उज्ज्वल० ।

**प्रगण्ड** पु० गडि—वदनैकदेशे अच् प्रकृष्टो गण्डः अवयवः प्रा०स० । १कूर्परोपरिकक्षपर्य्यन्तभागे अमरः । दुर्गप्राकारभित्तौ २शूराणां निवेशनस्थाने च स्त्री गौरा० ङीष् । "सञ्चारो यत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारसंज्ञिता । प्रणिधिस्तत्र यत्नेन कर्त्तव्यो भूतिमिच्छता । स एवाकाशरक्षीति ह्युच्यते शस्त्रकोविदैः" भा०टी०धृतवाक्यम् । "प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा" भा० शा० ६९ अ० । "प्रगण्डीर्दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानानि । आकाशजननीस्तत्रैवैककक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते" नीलकण्ठः ।

**प्रगतजानु(क)** त्रि० प्रगते परस्परमसंश्लिष्टे जानुनी यस्य वा कप् । असंहतजानुके प्रज्ञौ यस्य जानुनोर्मध्ये महदन्तरालं तस्मिन् अमरः । सुज्ञे त्रि० ।

**प्रगन्ध** पु० प्रकृष्टो गन्धोऽस्य । १पर्पटे राजनि० । २प्रकृष्टगन्ध-

**प्रगल्भ** त्रि० प्र+गल्भ—अच् । १प्रत्युत्पन्नमतौ २प्रतिभान्विते च अमरः । ३नायिकाभेदे स्त्री तल्लक्षणादि नायिकाशब्दे ४०४२ पृ० दृश्यम् ।

**प्रगल्भता** स्त्री प्रगल्भस्य भावः तल् । १प्रौढत्वे २उत्साहे च हेमच० । "निःशङ्कता प्रयोगेषु बुधैरुक्ता प्रगल्भता" उज्ज्वलमण्युक्ते प्रयोगेषु ३निःशङ्कत्वे च ४प्रतिभान्वितत्वे च ।

**प्रगाढ़** त्रि० प्रकर्षेण गाढ़म् गाह—क्त । १अत्यन्तदृढे २कृच्छ्रे च अमरः । ३दृढे भरतः ।

**प्रगात्ृ** त्रि० प्र+गै तृच् । उत्तमगायके शब्दरत्ना० ।

**प्रगाथ** पु० प्र+ग्रन्थ—वा० आधारे घञ् "छन्दसः प्रगाथेषु" निर्द्देशात् नि०नरयोर्लोपे उपधावृद्धिः । वेदे द्वे ऋचौ यत्र तिस्रः क्रियन्ते १तत्सार्थे .त्रिस्तरस्तु सामसंहिताभाष्ये दृश्यः । दिङ्मात्रं ततः समाहृत्येहोच्यते । "काकुभः प्रगाथः" इत्यत्र प्रगाथशब्दार्थपर्य्यालोचनेनापि प्रथनं गम्यते प्रकर्षेण प्रथनं यत्र स प्रगाथः प्रकर्षो नाम आम्नाताद्रूपपाठादाधिक्यम्, तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरत्वगनन्तरसम्पादनेनोपजायते । तस्मान्नोत्पत्तिककुभौ प्रहीतव्ये किन्तर्हि प्रथयेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् । रौधमनामकं किञ्चित् साम तथा यौधाजयनामकमपरम् तयोः साम्नोर्बृहतीच्छन्दस्कास्तृच आश्रय इति उत्तराग्रन्थे तु तस्य सामद्वयस्याश्रय एकः प्रगाथः आम्नातः तस्मिंश्च प्रगाथे पुनानः सोमेत्यष्टाक्षु प्रथमा सा च बृहती "दुहान ऊधर्दिव्यमिति" द्वितीया सा तु विष्टारपङ्क्तिः तामेतां विष्टारपङ्क्तिमपनीय तस्याः स्थाने उत्पत्तिबृहत्यौ द्वे ऋचौ आनेतव्ये इति पूर्वपक्षः । बृहतीविष्टारपङ्क्त्योः प्रथयनविशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः । प्रगाथत्वेन ध्येये २मन्त्रे च यजु०१९।२४वेददी०

**प्रगुण** त्रि० प्रस्तुतो गुणो यत्र प्रकृष्टो गुणो यस्य वा प्रा०ब० । १ऋजुतायति २दक्षे च अमरः । प्रकृष्टगुणोऽयत्र ।

**प्रगृह्य** न० प्र+ग्रह—क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्ययोग्ये १पदभेदे २स्मृतौ ३वाक्ये च अमरः ।

**प्रगे** अव्य० प्रगीयतेऽत्र प्र+गै—के । अतिप्रातःकाले अमरः । तत्र भवः ख्यु तुट् च । प्रगेतन प्रातर्भवे त्रि० राजनि०

**प्रगेनिशा** त्रि०प्रगे प्रातःकाले निशेव स्वापहेतुर्यस्य । प्रातःकालशायिनि । "उत्सूर्य्यशायिनश्चाशन् सर्वे चासन् प्रगेनिशाः" भा०शा० २२८अ० ।

**प्रग्रथन** न० प्रकर्षेण ग्रथने । प्रगाथशब्दे दृश्यम् ।

**प्रग्रह** पु०प्र+ग्रह कर्मकरणादौ पक्षे अप् । १तुलासूत्रे २हयादिसंयमनरज्ज्वौ ३बन्द्यां च अमरः । ४नियमने ५सुजे ६सुवर्णालङ्कारे मेदि० । ७कर्णिकारवृक्षे राजनि० । प्र+ग्रह—कर्त्तरि अच् । ८विष्णौ "प्रग्रहो निग्रहो व्यग्रः" विष्णु स० "भक्तैरुपाहृतं पत्रपुष्पादिकं प्रगृह्णातीति प्रग्रहः" भा० । [२हयादिसंयमनदामनि च अमरः ।

**प्रग्राह** पु० प्र+ग्रह—कर्मकरणादौ वा घञ् । १तुलासूत्रे

**प्रग्रीव** पु०न०प्रकृष्टा ग्रीवा यस्य । १गृहादौ प्रान्तभार्य्यदारुपङ्क्तौ २वातायने सुभूतिः ३हर्म्यशीर्ष्यके गोवर्द्धनः । ४प्रकृष्टग्रीवान्विते त्रि० ।

**प्रघटाविद्** पु०प्रकृष्टा घटा आडम्बरः तां वेत्ति विद—क्विप् । शास्त्रगण्डे शास्त्राभिज्ञे त्रिका० ।

**प्रघट्टक** पु० प्र+घट्ट—ण्वुल् । एकार्थप्रतिपादनार्थसन्दर्भविशेषे सां०प्र०भाष्ये दृश्यम् ।

**प्रघ(घा)ण(न)** पु० प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

हन-कर्मणि घञ् अप् वा घातम्। १अलिन्दे अमरः। २प्रकोष्ठे सि॰कौ॰। अवन्तः ३ताम्रकुम्भे ४लोहमुद्गरे च मेदि॰। मुकुटमतेऽयमघातमध्यः।

**प्रघस** पु॰ प्र+अद-अप् घसादेशः। १प्रकृष्टभक्षणे २राक्षसभेदे पु॰ भा॰ व॰ २८४अ॰ ३असुरे ४दैत्ये च त्रिका॰ कुमारानुचरमातृभेदे स्त्री भा॰ग॰ ४७अ॰।

**प्रघात** न॰ प्रहन्यतेऽत्र हन-आधारे घञ्। १युद्धे हेमच॰ भावे घञ्। २प्रहनने पु॰।

**प्रघास** पु॰ प्र+घस-कर्मणि घञ्। प्रकर्षेण भक्षणीये हविरादौ वरुणप्रघासस्वातुर्मास्ययागभेदः। प्रघासोऽस्त्यस्ति भूम्ना इनि। प्रघासिन् मरुत्सु "प्रघासिनोहवामहे मरुतश्च" यजु॰ ३।४४ वेददीपे दृश्यम्।

**प्र(प्रा)घुण** पु॰ प्र(+आ+वा) घुण-क। अतिथौ हेमच॰।

**प्रघूर्ण** पु॰ प्र+घूर्ण-अच्। अतिथौ हेमच॰।

**प्रघोष** पु॰ प्र+घुष-भावे घञ्। १प्रकृष्टघोषणे स्वार्थे कन्। २अव्यक्तशब्दे ध्वनौ जटा॰।

**प्रचक्र** न॰ प्रगतचक्रं प्रा॰ स॰। स्वचक्रात् परचक्रं प्रति चलिते सैन्ये अमरः।

**प्रचक्षस्** पु॰प्र+चक्ष-असि न ख्यादेशः। बृहस्पतौ उणादि॰

**प्रचण्ड** त्रि॰ प्रकर्षेण चण्डः प्रा॰स॰। १दुर्द्धर्षे २दुर्वहे ३दुरन्ते ४प्रतापान्विते च ५श्वेतकरवीरे पु॰मेदि॰ ६दुर्गाया नायिकाभेदे स्त्री "उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका"कालिकापु॰। ७श्वेतदुर्वायां स्त्री राजनि॰।

**प्रचण्डमूर्त्ति** पु॰ प्रचण्डा मूर्त्तिरस्य। १वरुणवृक्षे २भयानकदेहे त्रि॰ शब्दच॰।

**प्रच(चा)य** पु॰ प्र+चि-"हस्तादाने चेरस्तेये"पा॰हस्तादाने अस्तेये घञ् अन्यत्र "एरच्" पा॰ अच्। तत्र अजन्तः वृक्षादिना हस्तप्रस्थानां पुष्पाणां १चयने २समूहे शब्दच॰ ३उपचये ४शिथिलसंयोगभेदे परिमाणशब्दे ७२५॰पृ॰ दृश्यम् "संख्यातः परिमाणाच्च प्रचयादपि जायते। प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते। परिमाणन्तूलकादौ नाशस्त्वाश्रयनाशतः" भाषा॰ हस्तादाने तु घञ्। हस्तेन पुष्पप्रचाय इत्येव चौर्ये तु अच्। प्रचय इत्येव चौर्येण हस्तेन पुष्पादेश्चयने। [धरणिः।

**प्रचर** पु॰ प्र+चर+गोचरप्रचरौ नि॰ आधारेऽप्। मार्गे

**प्रचल** त्रि॰ प्र+चल-अच्। प्रकृष्टचलनयुक्ते चञ्चले।

**प्रचलक** पु॰ प्र+चल+वा वुन्। कीटभेदे सुश्रुतः कीटशब्दे २०५८पृ॰ दृश्यम्।

**प्रचलाक** पु॰ प्र+चल-वा॰ आकन्। १शराघाते २मयूरशिखण्डे ३भुजङ्गमे पुंस्त्री॰ मेदि॰ स्त्रियां ङीप्।

**प्रचलाकिन्** पु॰ प्रचलाक+मत्वर्थे इनि। मयूरे त्रिका॰।

**प्रचलाय** नामधातुः प्रचल+अग्रा॰ अभूततद्भावे क्यङ् आ॰ अक॰सेट्। प्रचलायते अप्रचलायिष्ट प्राचलायिष्ट इत्यन्ये

**प्रचलायित** त्रि॰ प्रचलाय+नामधातुः कर्त्तरि क्त। निद्रादिना घूर्णिते अमरः।

**प्रचायिका** स्त्री प्र+चि+भावे ण्वुच्। १परिपाट्या पुष्पादेश्चयने। प्र+चि-ण्वुल् टाप् कापि अत इत्त्वम्। प्रचयनकर्त्र्यां २स्त्रियां स्त्री।

**प्रचार** पु॰ प्र+चर-भावे घञ्। १प्रसरणे २गतौ ३प्रकाशे च। ततः तारका॰ इतच्। प्रचारित सञ्जातप्रचारे त्रि॰। प्रकाशिते च।

**प्रचाल** पु॰ प्रकृष्टचालः। यूपस्य कटकभेदे। भा॰द्रो॰६१ अ॰

**प्रचिकीर्षु** त्रि॰प्र+कृ-सन्+उ। प्रतीकारेच्छौ भाग॰४।१८।१०

**प्रचित** त्रि॰ प्र+कर्मणि क्त। १कृतप्रचयने पुष्पादौ स्वार्थे क तत्रार्थे। २प्रचयस्वरयुक्ते त्रि॰। संज्ञायां कन्। दण्डकभेदे "प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः" वृ॰र॰। [सुश्रुतः।

**प्रचीबल** न॰ प्रचेयं बलं यस्य पृषो॰। वीरणे (बेणार मूल)

**प्रचीर** पु॰ वत्सप्रोन्दपस्य १सुनन्दागर्भजाते २पुत्रे नृपभेदे मार्कपु॰ ११८ अ॰। [२वङ्कणे अमरः।

**प्रचुर** त्रि॰ प्र+चुर-क प्रगतचुराया वा प्रा॰त॰। १चौरे

**प्रचुरपुरुष** पु॰ प्र+चुर-क नित्यक॰। चौरे त्रिका॰।

**प्रचेतसी** स्त्री प्रकर्षेण चेतयति मूर्च्छितं चित-णिच्-असच् गौरा॰ङीष्। कट्फले राजनि॰ तन्मूलस्य हि मूर्च्छानाशकता वैद्यकप्रसिद्धेति तस्यास्तथात्वम्।

**प्रचेतस्** पु॰ प्र+चित-असुन्। १वरुणे अमरः। २मुनिभेदे ३प्रकृष्टहृदये त्रि॰मेदि॰। ४अनुवंश्ये नृपभेदे हरिवं॰ ३२ अ॰। ५प्राचीनबर्हिषः सामुद्रीभार्यायां जातेषु पुत्रेषु राजभेदेषु व॰व॰। हरिवं॰२अ॰। ६प्रकृष्टज्ञानयुक्ते ऋ॰ २।२३।२ भा॰।

**प्रचेतृ** त्रि॰प्र+चि-तृच्। १प्रचयनकर्त्तरि २सारथौ पु॰हेमच॰

**प्रचेतुन** त्रि॰ प्र+चित-उन। प्रकृष्टज्ञानयुक्ते ऋ॰१।२१।६

**प्रचेल** न॰ प्र+चिल-चेल-वा अच्। पीतकाष्ठे शब्दच॰।

**प्रचेलक** पुंस्त्री॰ प्र+चेल-गतौ ण्वुल्। १घोटके शब्दमा॰। स्त्रियां जातित्वात् ङीष्। २प्रकृष्टगतियुक्ते त्रि॰ स्त्रियां टाप्।

**प्रचोदक** त्रि० प्र+चुद-प्रेरणे ण्वुल् । १प्रेरके स्त्रियां टापि अत इत्त्वम् । प्रचोदिका । सा च दुःसहस्य नियोजिताख्यायां कन्यायां जाते २कन्याभेदे मार्कपु० ५१अ० ।

**प्रचोदनी** स्त्री प्रचोद्यते अपसार्य्यते रोगोऽनया चुद-णिच् ल्युट् ङीप् । १कण्टकारिकायाम् अमरः । भावे ल्युट् । २प्रेरणे न० ।

**प्रच्छ** जिज्ञासायां तु०पर०द्विक०अनिट् । पृच्छति अप्राक्षीत् । पप्रच्छ । द्विकर्मकत्वेन दुहादि०गौणे कर्मणि लकारादि । पृच्छ्यते शिष्येण गुरुः धर्मं, जिज्ञासाविषयकज्ञानानुकूलव्यापारः कथं धर्म आचरितव्य इत्यभिलापादिः पृच्छेरर्थः, ज्ञानविषयत्वेन धर्मस्य, तज्ज्ञानाश्रयत्वाच्च गुरोः कर्मत्वम् ।

**प्रच्छद्** न० प्रच्छादयति प्र+छादि-क्विप् ह्रस्वः । अन्ने "अन्नं वा प्रच्छच्छन्दोऽन्नं प्रच्छद् इति श्रुतेः" यजु० १५।५ वेददीपे दृश्यम् । [आच्छादने वस्त्रादौ ।

**प्रच्छद** पु०प्रच्छाद्यतेऽनेन प्र+छद-णिच्-करणे घ ह्रस्वः ।

**प्रच्छदपट** पु०प्रच्छाद्यतेऽनेन प्र+छद-णिच्-घ ह्रस्वः कर्म० । (पाछुडि) प्रावरणवस्त्रे अमरः ।

**प्रच्छना** स्त्री प्रच्छ+वा० ल्यु । आमन्त्रणे जटा० ।

**प्रच्छन्न** न० प्र+छद-क्त । १गुप्तद्वारे २अन्तर्द्वारे । ३आच्छन्ने त्रि० अमरः ।

**प्रच्छर्दन** न० प्र+छर्द-भावे ल्युट् । १वमने २कोष्ठ्यस्य वायोर्नासिकापुटाभ्यां निःसारणप्रयत्नभेदे रेचने "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" पात० सूत्रे भाष्यं दृश्यम् । कुम्भकशब्दे २११४ पृ० दृश्यम् ।

**प्रच्छर्दिका** स्त्री प्र+छर्द-रोगाख्यायां ण्वुल्" पा० ण्वुल् तदन्तः स्त्री । १वमनरोगे अमरः । कर्त्तरि ण्वुल् । २प्रच्छर्दके वमनकारके त्रि०स्त्रियां टाप् कापि अत इत्त्वम् ।

**प्रच्छादन** न० प्रच्छाद्यतेऽनेन छद-णिच्-ल्युट् । १उत्तरीयवस्त्रे हेमच० भावे ल्युट् । २आच्छादने "नवोदके नवान्ने च गृहप्रच्छादने तथा" स्मृतिः ।

**प्रच्छान** न०प्र+छो-भावे ल्युट् । १प्रकृष्टच्छेदने २सुश्रुतोक्ते शस्त्रविस्रावणभेदे "तत्र द्विविधं शस्त्रविस्रावणं शिराव्यधनञ्च" सुश्रुतः ।

**प्रच्छिल** त्रि० प्रच्छ वा० इलच् । निर्जले जलशून्ये हेमच०

**प्रच्यव** पु० प्र+च्यु-अच् । १प्रच्युतियुते । भावे अप् । २प्रचरणे स्वभावचरणे "प्रकृतेः स्वभावप्रच्यव" इति सां० प्र०भाष्यम् । भावे ल्युट् । प्रच्यवन चरणे न० ।

**प्रज** पु० प्रविश्य जायायां जायते जन-ड । पत्यौ भरतः

**प्रजङ्घ** पु० प्रकृष्टा जङ्घाऽस्य । राक्षसभेदे रामा०लं०१८स्लो० ।

**प्रजग्मि** त्रि० प्र+गम-ज्ञाने कि द्वित्वम् उपधालोपः । प्रज्ञाशीले शत०ब्रा० ५।१।१।१५

**प्रजन** पु० प्र+जन-घञ् न वृद्धिः । १प्रजनने । प्रजायतेऽनेन करणे घञ् । स्त्रीगव्यादिषु २पुङ्गवादीनामभिगमने गर्भग्रहणार्थमैथुने ३उपसरे (पालदेओया) अमरः ।

**प्रजनन** न० प्रजायतेऽत्र प्र+जन-आधारे ल्युट् । १योनौ भावे ल्युट् । २जन्मनि मेदि० करणे ल्युट् । ३उपसरे विश्वः । जनयति जनि-ल्यु । ४जनके त्रि० यजु०१८।४८

**प्रजनिका** स्त्री प्रजनयति प्र+जनि-ण्वुल् । मातरि जटा० ।

**प्रजनिष्णु** त्रि०प्र+जन-इष्णुच् । जनने शत०ब्रा०६।४।१७

**प्रजनुक** त्रि० प्र+जन वा० उक । प्रजननशीले हेमच० ।

**प्रजनू** स्त्री प्र+जन-वा० ऊ । प्रजनने तैत्ति०३।११।४२

**प्रजय** पु०प्र+जि-अच् । प्रकृष्टजये याथादि०अन्तोदात्तताऽस्य ।

**प्रजल्प** पु०प्र+जल्प-भावे घञ् । "असूयेर्ष्यामदयुजा योऽवधीरणमुद्रया । प्रियस्य कौशलोद्गारः प्रजल्पः स तु कथ्यते" उज्ज्वलमणिलक्षिते १वाक्यभेदे २प्रकृष्टकथाभेदे च ।

**प्रजविन्** त्रि० प्र+जु-इनि । प्रकृष्टवेगयुक्ते अमरः ।

**प्रजहित** पु० १पुराणे २गार्हपत्ये वह्नौ ताण्ड्य० ब्रा० १।४।१० भाष्यधृतवाक्यं दृश्यम् ।

**प्रजा** स्त्री प्र+जन-ड । १सन्ततौ २जने च अमरः "नञ्दुःसुभ्यः परस्य बहु०असिच्समा० । अप्रजाः दुःप्रजाः ।३जनने च

**प्रजागर** पु० प्र+जागृ-अप् । प्रकर्षेण जागरणे १निद्राक्षये हला० । कर्त्तरि अच् । २विष्णौ "पुष्पहासः प्रजागरः" विष्णुस० "नित्यं प्रबुद्धत्वात् प्रजागर्त्तीति प्रजागरः" भा० प्रजागरयति णिच्-अच् । ३अप्सरोभेदे स्त्री भा०व०४३अ० ।

**प्रजाता** स्त्री प्रजातं प्रजननं गर्भमोचनमस्याः अर्श आद्यच् । १प्रसूतायां स्त्रियाम् हला० । प्र+जन-क्त । प्रकर्षेण २जाते त्रि० । ३अश्वभेदे पु० "वडवायां कृतरेतस्कन्दनः प्रजात इत्युच्यते" कात्या०श्रौ०२०।२।२०भाष्यम्

**प्रजातन्तु** पु० प्रजायाः प्रजननस्य तन्तुरिव । सन्ताने तैत्तिरीय० ।

**प्रजाति** स्त्री प्र+जन-क्तिन् । १प्रजायां २प्रजनने च ३पौत्रोत्पत्तौ "प्रजा च स्वाध्यायवचने च प्रजनश्च स्वाध्यायवचने च प्रजातिश्च स्वाध्यायवचने च" तैत्तिरो० "तत्र प्रजा स्वयमुत्पाद्या प्रजनश्च प्रजननमृतौ भार्या-

गमनं प्रजातिः पौत्रोत्पत्तिः” भा० । ४पुत्रादिवृद्धौ शत० ब्रा० ७।२।१।४६। ५प्रांशुनृपपुत्रभेदे पु० मार्क०पु० ११८अ०

**प्रजादा** स्त्री प्रजां तद्धेतुगर्भं ददाति सेवनात् दा--क । गर्भधात्रीवृक्षे राजनि० ।

**प्रजादान** न० ६त० । १प्रजाया दाने २रूप्यादाने च । प्रजातः जन्मतः दानं शुद्धिरस्य । ३रजते न० शब्दच० ।

**प्रजानाथ** पु० ६त०। लोकनाथे नृपे प्रजापालादयोऽप्यत्र ।

**प्रजाप** पु० प्रजां पाति पा--क। नृपे हेमच० ।

**प्रजापति** पु० ६त०। १चतुर्मुखे ब्रह्मणि अमरः । २दक्षादौ ३नृपे च मेदि० । ४जामातरि ५सूर्य्ये ६वह्नौ ७त्वष्टरि हेमच०। प्रजापतयश्च बहुविधाः यथोक्तम् “आत्मार्थे चासृजत् पुत्रान् लोककर्तॄन् पितामहः। विश्वे प्रजानां पतयो येभ्यो लोका विनिःसृताः। विश्वेशं प्रथमं नाम महातपसमात्मजम् । सर्वाश्रमपदं पुण्यं नाम्ना धर्मं स सृष्टवान् । दक्षं मरीचिमत्रिञ्च पुलस्त्यं पुलहं क्रतुम् । वशिष्ठं गौतमञ्चैव भृगुमङ्गिरसं मनुम्। अथर्वभूता दृश्यन्ते ख्यातास्त्वेव महर्षयः । त्रयोदश सुता येषां वंशास्तु संप्रतिष्ठिताः” हरिवं० २०४अ० “ससर्ज सृष्टिं तद्रूपं स्रष्टुमिच्छन् प्रजापतीन् । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । वशिष्ठञ्च महातेजाः सोऽसृजत् सप्त मानसान् । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः” हरिवं० १अ० । एकविंशतिः प्रजापतयो यथा “ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः । मरीचिरङ्गिरात्रिश्च पुलस्त्यः पुलहः क्रतुः । वशिष्ठः परमेष्ठी च विवस्वान् सोम एव च । कर्दमश्चापि यः प्रोक्तः क्रोधोऽर्वाक् क्रीत एव च। एकविंशतिरुत्पन्ना ते प्रजापतयः स्मृताः” महाभारते मोक्षधर्मः । अन्येऽपि प्रजापतयः पुराणादौ प्रसिद्धा यथा “शंयुः प्रजापतिः” श्रुतिः । ८विष्णौ पु० “पद्मनाभः प्रजापतिः” विष्णुस० । ९यज्ञे निघण्टुः । १०स्वनामख्याते कीटभेदे ।

**प्रजापतिहृदय** न० साममेदे “प्रजापतेर्हृदयं गायति” शत०ब्रा० ९।१।२।४० “प्रजासु च प्रजापतौ च गायति प्रजापतेर्हृदयमिति किञ्चित् साम तदत्र गायेत् । प्रजापतेर्हृदयं गायत्यादि सामवत् कस्यांचिदृचि न गीयते अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते” भा० ।

**प्रजावत्** पुंस्त्री० प्रजाऽस्त्यस्य मतुप् मस्य वः । १सन्तानयुक्ते स्त्रियां ङीप् । ङीवन्तः । २भ्रातृजायायाम् स्त्री अमरः । २प्रकृतियुक्ते नृपे पु० । [यके यजु० १९।४८।

**प्रजासनि** त्रि० प्रजां सनोति ददाति सन--इन् । सन्तानदा-

**प्रजाहित** त्रि० प्रजायै हितम् । सन्तानजनयोर्हितकारके जले न० शब्दमाला ।

**प्रजिन** पु० प्र+ज्या-वा० नक् सम्प्र० । वायौ शब्दमा०।

**प्रजेश** पु० ६त० । नृपे प्रजेश्वरादयोऽप्यत्र त्रिका०।

**प्रज्ञ** त्रि० प्रजानाति प्र+ज्ञा कर्त्तरि क । १प्रज्ञायुते प्रज्ञ एव प्रज्ञादि० स्वार्थे अण् । प्राज्ञ तत्रार्थे त्रि० भावे अङ् । २बुद्धौ स्त्री । प्रज्ञा अस्त्यस्य प्रज्ञा० ण । प्राज्ञ प्रज्ञायुते त्रि० ।

**प्रज्ञप्ति** स्त्री प्र+ज्ञपि--भावे क्तिन् । १बुद्धौ हेमच० “ऋतम्भरा तत्र प्रज्ञा” पात०सू० “तत्र सप्तधा प्रान्तभूमिः प्रज्ञा” पात०सू०। २सङ्केते ३देवीभेदे च त्रिका०।

**प्रज्ञाकाय** पु० प्रज्ञा काय इव यस्य । मञ्जुघोषे त्रिका०।

**प्रज्ञाचक्षुस्** पु० प्रज्ञैव चक्षुरिवास्य । धृतराष्ट्रे शब्दर०।

**प्रज्ञादि** पु० स्वार्थेऽण्प्रत्ययनिमित्ते १शब्दगणे स च गणः “प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष विद्वस् विदन् षोडन् विद्या मनस् (श्रोत्र शरीरे) (जुह्वत् कृष्णमृगे) चिकीर्षत् चोर शत्रु योध चक्षुस् वसु एनस् मरुत् क्रुञ्च सत्वत् दशार्ह वयस् व्याकृत असुर रक्षस् पिशाच अशनि कर्षापण देवता बन्धु”। अस्त्यर्थे णप्रत्ययनिमित्ते २शब्दगणे च । स च गणः प्रज्ञा श्रद्धा (अर्चा) (वृत्तेश्च वार्त्ता)” वार्त्ति० ।

**प्रज्ञान** न० प्र+ज्ञा—भावे ल्युट् । १बुद्धौ । करणे ल्युट् । २चिह्ने अमरः । प्रज्ञानमस्त्यस्य अच् । ३पण्डिते हिम० पकोषः ।

**प्रज्ञाल** त्रि० प्रज्ञाऽस्त्यस्य सिध्मा० लच् । बुद्धियुते त्रि०।

**प्रज्ञिन्** त्रि०प्रज्ञाऽस्त्यस्य इनि । पण्डिते हिम०पक्षे मतुप् मस्य वः । प्रज्ञावत् तत्रार्थे उभयतः स्त्रियां ङीप् ।

**प्रज्ञिल** त्रि० प्रज्ञा+अस्त्यर्थे पिच्छा० इलच् । बुद्धियुते

**प्रज्ञु** त्रि० प्रगते विरले जानुनी यस्य जानुनोर्ज्ञुः । विरलजानुके जने अमरः ।

**प्रडीन** न०प्र+डी--क्त । खगगतिभेदे खगगतिशब्दे दृश्यम् ।

**प्रण** त्रि० पुराभवः प्र+“नश्च पुराणात् प्रात्” ५।४।२० वार्त्ति० न । पुराणे प्राचीने चकारात् पक्षे त्न प्रत्न+ख प्रीण तत्रार्थे त्रि० ।

**प्रणख** पु०प्रकृष्टः नखः पूर्वपदात् णत्वम् । नखाग्रे “आप्रणखात् सर्व एव सुवर्णः” छान्दो०। [२विनययुते च ।

**प्रणत** त्रि॰ प्र+नम-कर्त्तरि क्त । कृतप्रणामे त्रिका॰ । प्रह्वे
**प्रणति** स्त्री प्र+नम–भावे क्तिन् । प्रणामे करशिरःसंयो-
गादिरूपे स्वापकर्षबोधकव्यापारे ।
**प्रणदन** पु॰ प्र+नद–भावे ल्युट् । प्रणादे अमरः ।
**प्रणपात्** त्रि॰ प्रकर्षेण नपात् नभ्राड्नपादिना नञः प्रकृति भावः पूर्वपदात् णत्वम् । प्रकर्षेण न पातयितरि ऋ॰ ८।१७।१२ [३विश्वासे ४निर्वाणे च मेदि॰ ।
**प्रणय** पु॰ प्र+नी–अच् । १प्रेम्णि अमरः २प्रार्थनायां
**प्रणयन** न॰ प्र+नी-भावे ल्युट् । १प्रकर्षेण नयने २करणे च ३अग्नेः संस्कारभेदकरणे कात्या॰श्रौ॰ ६।१०।४।
**प्रणयनीय** त्रि॰प्र+नी कर्मणि अनीयर् । १प्रकर्षेण नेतव्ये २संस्कार्य्ये वह्नौ च प्रणयनस्य वह्निसंस्कारस्येदम् छ । ३वह्निसंस्कारसम्बन्धिनि इध्मकाष्ठादौ कात्या॰१।३।२१
**प्रणयिन्** त्रि॰ प्रणयोऽस्त्यस्य सुखा॰ गणे पाठात् "नेका-क्षरात् कृतोजातेरिति" निषेधस्याप्रवृत्तेः इनि । १प्रण-ययुते २स्वामिनि पु॰ हेमच॰। ३भार्य्यायां स्त्री ङीप् ।
**प्रणव** पु॰ प्रकर्षेण नूयतेऽनेन प्र -नू-अप् । १ओङ्कारे वेदादौ पाठ्ये शब्दभेदे अमरः । १५५८ पृष्ठादौ दृश्यम् । उद्गा-त्रादीनां गानारम्भात् प्राक् यजमानेन ओमित्युक्त्वा गेये २सामावयवभेदे च । प्रणूयते प्र+णू-कर्मणि अप्, प्रणवशब्दवाच्यत्वाद्वा । ३परमेश्वरे पु॰ "प्राणदः प्रणवः प्रभुः" "प्राणदः प्रणवः पणः" विष्णु स॰। द्विधा व्युत्पत्तियोगात् द्वे नामनी । [णत्वम् । प्रनतनासिके
**प्रणस** त्रि॰ प्रगता नासिका अस्य नसादेशः अच्समा॰
**प्रणाडी** स्त्री प्रणाली+लस्य डः । १प्रणालीशब्दार्थे २द्वार-मात्रे च "तस्यां स्थितो व्यपियमाणं धनं प्रणाड्या प्रतिग्रहं निष्प्रयति" दायभागः ।
**प्रणाद** पु॰ प्र+नद-घञ् । अनुरागजे शीत्कृतादौ १शब्दे अमरः । "अनुरागजने शब्दे प्रणादः शीत्कृतो न्दया-मिति शब्दार्णवः । २तारशब्दे ३अश्वणामये च मेदि॰ । अवणामयश्च कर्णनादः "कर्णस्रोतःस्थिते वाते शृ-णोति विविधान् स्वरान् । भेरीमृदङ्गशङ्खानां कर्ण-नादः स उच्यते" सुश्रुतः ।
**प्रणाम** पु॰प्र+नम-भावे घञ् । णत्वं १स्वापकर्षबोधकव्यापारे करशिरःसंयोगादौ "पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते" इत्युक्ते २अष्टाङ्गव्यापारभेदे च प्रणामश्च चतुर्द्धा अभिवादनम् अष्टाङ्गः पञ्चाङ्गः करशिरःसंयोगश्च । तत्रा-भिवादनशब्दे अभिवादनलक्षणं दृश्यम् । अष्टाङ्गलक्षण-मोक्तं तृतीयो यथा "बाहुभ्याञ्चैव जानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवरः स्मृतः"। नतिविशेषस्तु जामले "त्रिकोणाकारा सर्वत्र नतिः शक्तेः समीरिता । दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च शा-म्भवीम् । ततश्च दक्षिणां गत्वा नमस्कारस्त्रिकोणवत्" एकहस्तप्रणामनिषेधो यथा "एकहस्तप्रणामश्च एकं वापि प्रदक्षिणम् । अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम्" इति तन्त्रसारः । स च कायिकवाचिकमान-सभेदेन प्रत्येकं त्रिविधः यथा "कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः । नमस्कारस्तु तत्त्वज्ञैरुत्तमाधमम-ध्यमः । प्रसार्य्य पादौ हस्तौ च पतित्वा दण्डवत् क्षितौ । जानुभ्यामवनीं गत्वा शिरसाऽऽस्पृश्य मेदि-नीम् । क्रियते यो नमस्कार उत्तमः कायिकस्तु सः । जानुभ्यां क्षितिमस्पृष्ट्वा शिरसाऽऽस्पृश्य मेदिनीम् । क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः । पुटीकृत्य करौ शीर्षे दीयते यद्यथा तथा । अस्पृष्ट्वा जानुशी-र्षाभ्यां क्षितिं सोऽधम उच्यते । यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तैर्वा वाचिक-स्तूत्तमः स्मृतः । पौराणिकैर्वैदिकैर्वा मन्त्रैर्या क्रियते नतिः । मध्यमोऽसौ नमस्कारो भवेद्वाचनिकः सदा । स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पुत्रक ! ॥ इष्ट-ध्यानिष्टगतैर्मनोभिस्त्रिविधं पुनः । मननं मानसं प्रोक्तमु-त्तमाधममध्यमम् । त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः । कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः । अयमेव नमस्कारो दण्डादिप्रतिपत्तिभिः । प्रणाम इति विज्ञेयः सर्वैः प्रतिपादितः" कालिकापु॰ ७०अ॰। शूद्र-संस्कृतपूजितदेवताप्रणामनिषेधो यथा "यः शूद्रेणार्च्चितं लिङ्गं विष्णुं वा प्रणमेद्यदि । निष्कृतिस्तस्य ना-स्त्येव प्रायश्चित्तायुतैरपि" इति कर्मलोचनम् । "नमेत् यः शूद्रसंस्कृतम्" इत्यादि च ।
**प्रणाय्य** त्रि॰ प्र+नी–ण्यत् "प्रणाय्योऽसम्मतौ" पा॰नि॰। १चौरे २प्रोत्कृष्टे ३विरक्ते च त्रि॰कौ॰, ४अभिलाषवर्जिते मेदि॰ । ५साधौ त्रिका॰ ६प्रिये च । असम्मतिभिन्नेषु प्रणेय इत्येव ।
**प्रणाली** स्त्री प्र+नल-घञ् गौरा॰ङीष् णत्वम् ।१जलवहनमार्गे (पयनाला) अमरः २परम्परायाञ्च । प्रणालोऽप्यत्र पु॰।
**प्रणिधान** न॰ प्रणिधीयते प्र+नि+धा-ल्युट् । १प्रयत्ने २स-

भिनिवेशे ३योगशास्त्रोक्ते चित्तनविशेषरूपे समाधिभेदे ४भक्तिविशेषे च "ईश्वरप्रणिधानाद्वा" पात० "प्रणिधानात् भक्तिविशेषात्" भाष्यम्। ५अर्पणे ६कर्मणां फलत्यागे च "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" पात० "ईश्वरप्रणिधानं सर्वक्रियाणां तस्मिन् परमगुरावर्पणं फलसन्न्यासो वा" भा० ७मनसो विषयान्तरसञ्चाराभावरूपे ऐकाग्र्ये च गौत० ३।२।२६ सूत्रवृत्तिः।

प्रणिधि पु० प्रणिधीयते प्र+नि+धा-कि। १गुप्तचरे अमरः। २अनुचरे च। भावे कि।३याचने ४अवधाने च मेदि०। काश्यपस्य इच्छूयस्य ५पुत्रभेदे भा०व० २१८अ०।

प्रणिपात पु० प्र+नि+पत-घञ्। प्रणामे हेमच० "तद्विद्धि प्रणिपातेनेति" गीता। [हिते च मेदि०।

प्रणिहित त्रि० प्र+नि+धा-क्त। १प्राप्ते २स्थापिते ३समा-

प्रणी त्रि० प्रणयति प्र+नी-क्विप्। १कारके २ईश्वरे च "ग्रायन्तनीं तिथिप्रण्यः" भट्टिः।

प्रणीत त्रि०प्र+नी-कर्मणि क्त। पाकेन रूपरसान्यथाभावापादिते १पदार्थे २क्षिप्ते ३निवेशिते ४विहिते च हेमच०। ५यज्ञे संस्कृताग्नौ पु०अमरः। ६यज्ञपात्रभेदे स्त्री मेदि० अग्निपदसान्निध्ये ७मन्त्रसंस्कृतमात्रे "यथाध्वरे वह्निरभिप्रणीतः" भट्टिः। ८मन्त्रसंस्कृतासु अप्सु स्त्री ब०व०। तदाधारपात्री तु उपचारात् प्रणीताशब्दवाच्या। "प्रणीतानाम आपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिताः"आश्व०श्रौ०१।११.५ नारा०। "तदापः प्रणयंस्तस्मादापः प्रणीतास्तत्प्रणीतानां प्रणीतात्वम्" शत० ब्रा० १२।८।२।८।

प्रणीय त्रि० प्र+नी-कर्मणि वेदे क्यप्। यस्य मन्त्रेण संस्कारः कृतस्तस्मिन्। लोके तु प्रणेय इत्येव।

प्रणूत त्रि० प्र+णू-स्तुतौ कर्मणि क्त। स्तुते अमरः।

प्रणेय त्रि० प्र+नी-यत्। १वश्ये अधीने २लतलौकिकसंस्कारे च हेमच० ३प्रापणीये।

प्रतक्वन् पु० प्र+तक-गतौ वनिप्। प्रकर्षेण गतियुक्ते "नभोऽस्ति प्रतक्वा" ता०ब्रा०१।४।१२ "प्रकर्षेण प्रतक्वा स्वावयवैः पांशुभिः सर्वान् धिष्ण्यान् प्रति गन्ता तकतिर्गतिकर्म्मा" भा०।

प्रतति स्त्री प्र+तन--भावे क्तिन्। १विस्तारे। कर्त्तरि क्तिच् वा ङीप्। २वल्ल्यां च अमरः।

प्रतद्वसु पु० प्रतत् प्राप्तं वसु धनं येन। १प्राप्तवसुके २विस्तीर्णधने च ऋ० ८।१३।२७।

प्रतन त्रि० प्र+"नच पुराणात् प्रात्" वार्त्ति० चकारात् ट्यु तुट् च। पुरातने अमरः।

प्रतनु त्रि० प्रकृष्टस्तनुः प्रा०स०। १अतिस्वल्पे २अतिसूक्ष्मे च

प्रतमा(रा)म् अव्य०प्र+आम् तरप् तमप् वा। अत्यन्तप्रकर्षे

प्रतर पु० प्र+तॄ-भावे अप्। प्रकर्षेण १तरणे आधारे अप्। २प्रतरणाधारे गोप्रतरशब्दे दृश्यम्। [प्रतर्कं तत्रार्थे।

प्रतर्कण न० प्र+तर्क-भावे ल्युट्। वितर्के शब्दर०। घञ्।

प्रतर्द्दन न० प्र+तृद-भावे ल्युट्। १ताडने। कर्त्तरि ल्यु। २ताडके त्रि० ३दिवोदासपुत्रभेदे पु० हरिवं० २६अ०। ४इन्द्रोपदेश्यभेदे प्रतर्दनं प्रति इन्द्रेण ब्रह्मविद्योपदिष्टेति वेदान्ते प्रसिद्धम्।

प्रतल न० न० प्रकृष्टं तलम्। १पातालभेदे मेदि०। प्रकृष्टं तलमस्य। २विस्तृताङ्गुलिके पाणौ चपेटे पु० अमरः।

प्रतान पु० प्र+तन-घञ्। १विस्तारे २ऋषिभेदे च तस्य गोत्रापत्यम् इञ्। प्रातानि.तद्गोत्रापत्ये बहुत्वे तु तस्य उपका० लुक्। प्रताना इत्येव। ३तन्तुयुक्ते अलाबूलप्रभृतौ। "गुच्छगुल्मन्तु विविधं तथैव तृणजातयः। बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव वा" मनुः। "प्रतानास्तन्तुयुक्ताऽलाबुपाटलाबुप्रभृतयः" कुल्लू०।

प्रतानिन् त्रि० प्र+तन-णिनि। १विस्तीर्णे २विस्तृतलतायाम् स्त्री ङीप् अमरः।

प्रताप पु० प्र+तप-घञ्। १कोषदण्डजाते नृपादेः तेजसि अमरः। २तापे ३अर्कवृक्षे च राजनि०।

प्रतापन पु० प्रतापयति तप-णिच्-ल्यु। १नरकविशेषे २तापके त्रि० शब्दरत्ना०। भावे ल्युट्। ३पीडने शब्दर०। कर्त्तरि ल्यु। ४विष्णौ पु०। "प्रकाशात्मा प्रतापनः" विष्णु स० "सूर्य्यप्रभृतिभिर्विश्वं प्रतापयतीति प्रतापनः" भा०

प्रतापवत् त्रि० प्रताप+अस्त्यर्थे मतुप् मस्य वः। १प्रतापयुक्ते २स्कन्दानुचरगणभेदे पु० भा० श० ४६ अ०।

प्रतापस पु० तपसि साधु अण् प्रकृष्टस्तापसः प्रा०स०। १प्रकृष्टतापसे२शुक्लार्कवृक्षे च अमरः।

प्रतास् अव्य० प्र+तम वा० णिच-स्वरादि। ग्लानौ मनोरमा।

प्रतारक त्रि० प्र+तॄ-णिच्-ण्वुल्। १वञ्चके २धूर्त्ते च।

प्रतारण न० प्र+तॄ-णिच्-भावे ल्युट्। १वञ्चने अन्य पदार्थस्य अन्यथारूपेण ज्ञापने। युच्। प्रतारणाऽपि तत्रार्थे स्त्री। "प्रतारणासमर्थस्य विद्यया किं प्रयोजनम्" उद्भटः।

प्रतारित त्रि० प्र+तॄ-णिच्-क्त। १वञ्चिते त्रिका०।

**प्रति** अव्य० प्रथ–डति। १व्याप्तौ २लक्षणे ३कञ्चित्प्रकार-मापन्नस्य कथने ४भागे ५प्रतिदाने ६प्रतिनिधीकरणे मेदि० ७स्तोके ८चेपे ९निश्चये १०व्यावृत्तौ ११आभिमुख्ये १२स्वभावे च शब्दर०। अस्य निपातत्वेऽपि क्रिया-योगे उपसर्गत्वम् गतित्वञ्च। अस्यार्थभेदोदाहरणादि गणरत्नमहोदधिटी० उक्तं यथा "प्रति सादृश्या-दानहिंसाश्लोकतिप्रतिनिधिव्याप्त्याभिमुख्यव्याप्तिवारणेषु। प्रतिदेवता। प्रतिगृह्णाति। प्रतिहन्ति प्रतिज्ञानम्। अभिमन्युरर्जुनतः प्रति। प्रतिश्यायः। प्रतिसूर्य्यं गतः। प्रतिकीर्णम् पांशुभिः। प्रतिषिद्धः"। तत्र लक्ष-णेत्थम्भूताख्यानभागवीप्सायामस्य कर्मप्रवचनीयसंज्ञा तद्योगे द्वितीया परिशब्दे उदा० दृश्यम्। प्रतिनिधि-प्रतिदानयोः कर्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी। प्रद्युम्नः कृष्णात्प्रति प्रतिनिधिरित्यर्थः। तिलेभ्यः प्रतियच्छति माषान्, माषान् गृहीत्वा प्रतिरूपतया तिलान् ददाती-त्यर्थः। मात्रार्थेऽस्याव्ययीभावे परनिपातः। शाकप्रति-शाकस्य लेश इत्यर्थः। कर्मप्रवचनीयत्वे नोपसर्गसंज्ञा तेन वृक्षं वृक्षं प्रतिषिञ्चतीत्यादौ न षत्वं तथा गतिसंज्ञापि न, तेन गतिर्गताविति निघातो न।"प्रतेरंश्वादयस्तत्पुरुषे पा० प्रतेः परस्यांश्वादेः अन्तोदात्तता अंश्वादिशब्दे २७पृ० दृश्यम्।

**प्रतिक** त्रि०कार्षापणेन क्रीतः टिठन् (इकार उच्चारणार्थः) प्र-तिरादेशश्च। कार्षापणेन क्रीते स्त्रियां टित्त्वात् ङीप्। ततः पुरोहिता० भावे यक्। प्रातिक्य तद्भावे न०

**प्रतिकण्ठ** अव्य० वीप्सार्थे समीप्ये वा अव्ययीभावः। १कण्ठे कण्ठे इत्याद्यर्थे २कण्ठसामीप्ये च। प्रतिकण्ठं गृह्णाति ठक्। प्रातिकण्ठिक कण्ठसमीपग्राहिणि।

**प्रतिकर** पु० प्रति+कॄ-विक्षेपे भावे अप्। १विस्तीर्णतायां २विक्षेपे च। [प्रतीकारकर्त्तरि।

**प्रतिकर्त्तृ** त्रि० प्रति+कृ-तृच्। कृतस्यापकारस्य प्रत्यपकारके

**प्रतिकर्म्मन्** न० प्रति+कृ-मनिन्। १विद्यमानस्य गुणान्तरा-धाने २कृत्रिमभूषायां प्रसाधने अमरः।

**प्रतिकर्ष** पु० प्रति+कृष-भावे घञ्। १समाकर्षणे अन्वयार्थं पूर्व्वोपात्तस्य पदादेर्ग्रहणे कात्या० १५।८।१० कर्कः।

**प्रतिक(ष्क)श** प्रति+कश-गतिशासनयोः अच् सुट् नि०। सुड्भव्यः। १सहाये २पुरोगे च त्रि०कौ०। ३वार्त्ता-हरे मेदि०। प्रतिगतः कशाम् प्रा०स०। प्रतेः न कश्चिं प्रत्युपसर्गत्वम् किन्तु गमेरेवोपसर्गत्वमतो न सुट्। ४कशाघातप्राप्तेऽश्वे त्रि०कौ०। [२तद्गतौ च।

**प्रतिकष्ट** न० प्रतिरूपं कष्टं प्रा०त०। १कर्मानुरूपकष्टे

**प्रतिकाम** अव्य० कामं कामं प्रति अव्ययी०। प्रत्येककामे

**प्रतिकाय** पु० प्रति+चि-घञ् कादेशः। १प्रतिरूपके २शरव्ये लक्ष्ये च जटा०।

**प्रति(ती)कार** पु० प्रति+कृ-घञ् वा दीर्घः। १वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन २शोधने ३रोगा-देश्चिकित्सायाञ्च शब्दरत्ना०।

**प्रति(ती)काश** पु० प्रतिरूपः काशः प्र+काश-घञ् वा प्रा०स० दीर्घः। तुल्यत्वे अस्य निभा० नित्यस०। अमरटीकायां रमानाथेनायं दन्त्यान्ततया पठितः।

**प्रतिकितव** पु० प्रतिकूलः कितवः प्रा०त०। द्यूतकारस्य प्रति-कूले द्यूतकारे येन सह द्यूतप्रवृत्तिस्तस्मिन्।

**प्रतिकूप** पु० प्रतिरूपः कूपः प्रा०त०। परिखायां हारा०।

**प्रतिकूल** त्रि० प्रतिरूपं कूलं पक्षोऽस्य प्रा०ब०। १अननुकूले विरुद्धपक्षावलम्बिनि प्रतीपे अमरः प्रा०त०। २विप-रीताचरणे न०।

**प्रतिकृति** स्त्री प्र+कृ-कर्मादौ क्तिन्। १प्रतिमायां २सादृश्ये ३प्रतिनिधौ अमरः। ४प्रतिकारे मेदि०।

**प्रतिकृष्ट** त्रि० प्रति+कृष-क्त। १गर्ह्ये २द्विराकृष्टे ३कृष्ट-क्षेत्रादौ च मेदि०। [प्रति कोपे च

**प्रतिकोप** पु० प्रतिरूपः कोपः। १रोगस्यानुरूपे कोपे २विपक्षं

**प्रतिक्रिया** स्त्री प्रति+कृ-भावे श। प्रति(ती)कारे

**प्रतिक्षण** अव्य० क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी०। आभीक्ष्ण्ये

**प्रतिक्षय** पु० प्रति+क्षि-ऐश्वर्य्ये अच्। रक्षके शब्दर०

**प्रतिक्षिप्त** त्रि० प्रति+क्षिप-कर्मणि क्त। १प्रेषिते २वारिते मेदि०। ३बाधिते ४तिरस्कृते च अमरः। "आहूय प्रेषितो यस्तु प्रतिक्षिप्तः स उच्यते" इत्युक्ते ५आहूयप्रेषिते कृष्णदासः। [२तिरस्कारे च।

**प्रतिक्षेप** पु० प्रति+क्षिप-भावे घञ्। १निरासे मेदि०।

**प्रतिखुर** पु० सुश्रुते एकीयमतोक्ते मूढगर्भभेदे "निःसृतहस्त-पादशिरःकायसङ्गी प्रतिखुरः" इति तत्र लक्षितम्।

**प्रतिख्याति** स्त्री प्रति+ख्या-भावे क्तिन्। १विख्यातौ २अ-तिख्यातौ अमरः।

**प्रतिगत** न० प्रति+गम-भावे क्त। "गतागतप्रतिगतसम्पा-ताद्याश्च पक्षिणाम्" जटाधरोक्ते १खगगतिभेदे २परा-वृत्यगमने च। कर्त्तरि क्त। ३परावृत्ते त्रि०।

**प्रतिगर** पु० प्रतिगीर्य्यते प्रत्युच्चार्य्यते प्रति+गॄ-भावे अप्। वैदि-

कमन्त्रभेदस्य उच्चारणभेदे । तस्य प्रकार आश्व॰श्रौ॰५।६।४ सूत्रादौ वृत्तौ च दर्शितो यथा "शस्त्रस्वरः प्रतिगर ओथामो दैवेति" सू॰ "शस्त्रस्य स्वर इव स्वरो यस्य स शस्त्रस्वरः । उत्तरपदलोपोऽत्र द्रष्टव्यः । शस्त्रतुल्यस्वर इत्यर्थः । सवनस्वरस्याविधेयत्वादन्योऽपि यो विशिष्टः स्वरो विहितः शस्त्रस्य तस्य प्रापणार्थं वचनम् । ओथामोदैवेत्ययं प्रतिगरसंज्ञो भवति प्रतिगीर्य्यते प्रत्युच्चार्य्यते इति प्रतिगरः । वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्योऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थम्" नारा॰ वृ॰ "शंसामो दैवेत्याहावे" सू॰ "प्रतिगरो भवतीति शेषः । यः पुनरयं प्रतिगरोऽपरो विधीयते तज्ज्ञापयति । प्रतिगरान्तरमध्यर्चिन्याहावेऽयं निमज्जते । तेन शस्त्रमध्येऽयमेव स्यात् शस्त्रादावयं ब्राह्मणोक्तः शंसामोदैवानिति वा" ना॰वृ॰ । "प्लुतादिः प्रणवेऽप्लुतादिरवसाने" सू॰ । "व्यवहितस्येमौ विशेषविधी । अनन्तरस्य प्रणवावसानरूपेण विषयभेदासम्भवात्" वृ॰ । "प्रणवे प्रणव आहावोत्तरे" सू॰ । "प्लुतादेरयमपवादः । आहावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति" । "अवसाने च" सू॰ । प्रणवः प्रतिगरो भवतीति शेषः । शस्त्रान्तरे शस्त्रमध्ये चावसानेऽयं विधिर्भवति" वृत्तिः । "प्रणवान्तो वा" सू॰ । विषयद्वयेऽयं विकल्पः यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति । प्रणवान्त एव तत्र प्रतिगरः" वृत्तिः । शस्त्रान्ते तु प्रणवः" वृ॰ ।

**प्रतिग्रह** पु॰ प्रति+ग्रह–अप् । १स्वीकारे २अदृष्टार्थदत्तद्रव्यस्य ग्रहणे ३सैन्यपृष्ठे ४पतद्ग्रहे च मेदि॰ । प्रतिग्रहश्चादृष्टार्थत्यक्तद्रव्यस्वीकारः । तत्र दानस्यैव स्वस्वत्वध्वंसमिव परस्वत्वोत्पत्तिं प्रति हेतुता प्रतिग्रहस्य तु यथेष्टविनियोगार्हताप्रयोजकस्वत्वं प्रति कारणता यथोक्तं दायभागे

"दृष्टञ्च लोकेऽपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम् । न च स्वीकरणात् स्वत्वं स्वीकर्त्तुरेव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनं यथा देवतोद्देशेन द्रव्यत्यागं कुर्व्वन्नपि यजमानो न होता किन्तु तस्यैव त्यागस्य होमाभिधाननिमित्तं प्रक्षेपं कुर्व्वन् ऋत्विग्नेव होतेत्युच्यते तद्वदत्रापि स्यात् । किञ्च मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम् । ननु ग्रहणं स्वीकारः अभूततद्भावे च्विप्रयोगात् अस्वं स्वं कुर्व्वन् व्यापारः स्वीकारो भवति कथं तत् प्रागेव स्वत्वम् । उच्यते सत्यमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः । याजनाध्यापनसाहचर्य्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽपि अर्ज्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव स्वत्वात्" मूलम् । व्याख्यातमेतत् श्रीकृष्णेन यथा

"ननु त्यागात् केवलं स्वत्वनाशः सम्प्रदानस्वत्वं तु ममेदमिति भाविस्वत्वावगाहितत्स्वीकारादेवेति मतं निराकरोति नचेति । स्वीकर्त्तुरेवेत्येवकारेण त्यक्तुर्व्यवच्छेदः । इदमुपपादयति परस्वत्वापत्तिफलेन हीति । अत्रायमाशयः धात्वर्थतावच्छेदकफलानुकूलव्यापारवत एव तज्जन्यतद्धातुव्यपदेश्यत्वं यथा धात्वर्थतावच्छेदकोत्तरदेशसंयोगानुकूलव्यापारवति चैत्रे गन्तेति व्यवहारः । स्वीकारस्य स्वत्वहेतुत्वे धात्वर्थतावच्छेदकपरस्वत्वानुकूलस्वीकाररूपव्यापारवतः स्वीकर्त्तुरेव दातृपदव्यपदेश्यत्वापत्तिरिति पूर्व्वस्वत्वध्वंसरूपफलस्य न तद्व्यपदेशनियामकता तथात्वे उपेक्षितुरपि दातृपदव्यपदेश्यत्वापत्तिरिति । केचित्तु स्वीकारस्य स्वत्वहेतुत्वे परस्वत्वफलोपहितत्यागात्मकदाने सर्व्वांशे एकस्यापि कर्त्तृत्वासम्भवात् एकांशमादायैव दातृत्वव्यवहारे कर्त्तव्ये प्रधानीभूतफलांशानुकूलव्यापारवत्त्वेन दातृव्यवहारः स्यादिति व्याचख्युः । दृष्टान्तेनेदं द्रढयति यथा होतेति । होमाभिधाननिमित्तमिति । विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागस्य होमत्वात् प्रक्षेपस्य तदभिधाननिमित्तत्वमित्यर्थः । तेन हुधात्वर्थतावच्छेदकप्रक्षेपानुकूलव्यापारवति ऋत्विजि होतेति व्यपदेशो यथा तथेत्यर्थः । त्यागस्य स्वत्वहेतुत्वे स्फुटमेव शास्त्रं प्रमाणयति किञ्चेति । आदिना भूमौ तोयं विनिःक्षिपेदित्युत्तरप्रतीकपरिग्रहः । शास्त्रे शास्त्रबोधितत्यागे । दानपदं दृष्टमिति । "विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते" इति तद्वचनस्योत्तरार्द्धे दानपदं प्रयुक्तमित्यर्थः । तथाच निरन्तरयोरेव स्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलयोर्ददातिधात्वर्थतावच्छेदकत्वात् दानस्य परस्वत्वहेतुता शास्त्रसिद्धैवेति भावः । स्वीकारात् प्रागेव स्वत्वे ग्रहणस्य स्वीकारपदार्थत्वासम्भवमाशङ्कते नन्विति । स्वीकारशब्दार्थ इति । तथाच स्वपदस्य यथेष्टविनियोगार्हत्वपरत्वे लक्षणेति भावः । ननु याज-

अध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेदित्यत्र राजसूयेन यजेतेत्यादिवत् याजनाद्यात्मकैर्धनमर्जयेदित्यन्वयात् प्रतिग्रहस्यार्जनरूपता सिद्धा प्रतिग्रहस्य स्वत्वाहेतुत्वे च तद्विरुद्धं स्वत्वहेतुव्यापारस्यैवार्जनत्वादत आह याजनेति। अर्जनरूपता अर्जनपदव्यपदेशः। अविरोधमुपपादयति याजनादाविति तथा च याजनादीनां स्वत्वाहेतुत्वेन तदन्वयानुरोधवत् अर्जयेदित्यत्रार्जनत्वं न स्वत्वजनकत्वं किन्तु स्वत्वप्रयोजकत्वमेव तच्च प्रतिग्रहेऽप्यक्षतं दत्ते स्वत्वयं प्रतिगृह्णातीत्यवधारण एव तदुद्देशेन दातुस्त्यागात् तत्स्वत्वोदयात् प्रतिग्रहैकस्थाने तद्व्यतिरेकाच्चेति भावः"।

"न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इत्यादिमन्वादिवचनैस्तस्य स्वत्वहेतुत्वाप्रतिपादनादिति वाच्यं ब्राह्मणाय त्यक्तायां गवि गौरियं ब्राह्मणस्य न तु ममेत्यादिसार्वजनीनप्रतीतेरेव तत्र प्रमाणत्वात् प्रदानं स्वाम्यकारणमितिवचनाच्च अत एव विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते अन्यथा तैरिव उदासीनैरपि तद्धनस्यारण्यकुशादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात्। नन्वेवं दानादेव स्वत्वसिद्धेर्दत्तवस्तुनि स्वीकारो व्यर्थ इति चेन्न "लब्ध्वा चाष्टगुणं फलमित्यादि" श्रुतेः प्रतिग्रहीतरि द्रव्यदानस्य फलविशेषं प्रति हेतुत्वेन तादृशफलसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदित्यादिश्रुत्या प्रागुक्तयुक्त्या च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्जनपदार्थत्वात्" शब्दशक्तिप्र०। अधिकं दानशब्दे दृश्यम्। द्रव्यभेदात् प्रतिग्रहे दोषस्तु अयाज्यशब्दे उक्तस्तत्र

अयाचितस्य विषयभेदे प्रतिग्रहे न दोषः यथा "अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे। अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्। गुरून्भृत्यांश्चोज्जिहीर्षुरर्चिष्यन् देवतातिथीन्। सर्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयं ततः। साधुतः प्रतिगृह्णीयादथ वाऽसाधुतो द्विजः। गुणवानल्पदोषश्च निर्गुणो हि निमज्जति। एवं तस्करवृत्त्या वा कृत्वाभरणमात्मनः। कुर्यीद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः"। गारुडे २१५ अ०। अधिकम् अपाङ्क्तेयविप्रमाणे शु०तत्त्वमन्ये दृश्यम्। तीर्थप्रतिग्रहनिषेधो यथा "स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा। निष्फलं तस्य तत्तीर्थं यावत् तद्धनमश्नुते। अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च" कौर्मे ३३अ०। राजादितः प्रतिग्रहनिषेधो यथा "न राज्ञः प्रतिगृह्णीयाच्छूद्रपतितादपि। न चान्यस्मादशक्तश्च निन्दितात् वर्जयेद्बुधः" कौर्मे १५अ०। आपदि गर्हितप्रतिग्रहस्यादोषः इहत्परा० "प्रोक्तप्रतिग्रहाभावे प्राप्तायां इहदापदि। विप्रोऽन्तृ प्रतिगृह्णन् वा यतस्ततोऽपि नाघभाक्। गुर्वादिपोषणवर्गार्थं देशाद्यर्थञ्च सर्वशः। प्रत्यादद्यादुद्द्विजो यस्तु अत्ययेनात्मनोऽपि च। दधिक्षीराज्यमांसानि गन्धपुष्पाम्बु मत्स्यकान्। शय्यामासनं शाकं प्रत्याख्येयं न कर्हिचित्। अपि दुष्कृतकर्मभ्यः समादद्यादयाचितम्। पतितेभ्यस्तथाऽन्येभ्यः प्रतिग्राह्यमसंशयम्"। प्रतिग्रहीतुं शक्तस्य तत्त्यागे तत्रैव स्थानान्तरे स्वर्ग उक्तो यथा "शक्तः प्रतिग्रहीतुं यो वेदवृत्तः सुसंयतः। लभ्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितम्। प्रतिग्रहकृतं वापि याचितं यो न यच्छति। तत्कोटिगुणितप्राप्तो मृतो दासत्वमृच्छति"। दाता च न स्मरेद्दानं प्रतिग्राही न याचते। तावुभौ नरकं यातो दाता चैव प्रतिग्रही। वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति। प्रत्यक्षं लिङ्गमेवेह दातृयाचकयोर्बलम्। दातृहस्तो भवेदूर्द्ध्वमधस्तिष्ठेत् प्रतिग्रही। यद्दानं प्रतिगृह्णीयात् प्रतिग्राही व्रजत्यधः।" तस्य प्रकारमाह शु०त० विष्णुधर्मोत्तरे "भूमेः प्रतिग्रहं कुर्य्याद्भूमेः कृत्वा प्रदक्षिणम्"। प्रदक्षिणं न सर्वस्या भूमेः किन्तु तत्रत्यस्य प्रदक्षिणावर्त्तनमात्रं, भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम्। "करे गृह्य तथा कन्यां दासदास्यौ द्विजोत्तमाः!। करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहे" "आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः। तथा चैकशफानान्तु सर्वेषामविशेषतः। प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा। आरण्याः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः। प्रतिग्रहमथोष्ट्रस्य आरुह्य च तथाऽऽचरेत्। बीजानां मुष्टिमादाय रत्नान्यादाय सर्वशः। वस्त्रं दशान्तमादद्यात् परिधाय तथा पुनः। आरुह्योपानहौ यानमारुह्यैव च पादुके। ईषायान्तु रथं ग्राह्यं छत्रं दण्डे च धारयेत्। आयुधानि समादाय तथाऽऽभूषण विभूषणम्। वर्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्। अवतीर्य्य च सर्वाणि जल-

**प्रत्यभियोग** पु॰ प्रतिरूपोऽभियोगः प्रा॰स॰। अभियुक्तेन प्रतिवादिना स्वाभियोगिनं प्रति अभियोगान्तरकरणे।

**प्रत्यभिवाद** पु॰ प्रति+अभि+वद–णिच्-घञ्। अभिवादकस्य तत्प्रतिरूपे आशीर्वचनादौ। भावे ल्युट्। प्रत्यभिवादन तत्रार्थे न॰। तत्प्रकारः मनुना कुल्लूकभट्टेन च दर्शितो यथा "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने। अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः। यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्। नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः" "अभिवादने कृते प्रत्यभिवादयिता अभिवादको विप्रादिः आयुष्मान् भव सौम्येति वाच्यः। अस्य चाभिवादकस्य यन्नाम तदन्ते योऽकारादिः स्वरो नाम्नामकारान्तत्वनियमाभावात् स प्लुतः कार्य्यः स्वरापेक्षश्चेदकारान्तत्वं व्यञ्जनान्तेऽपि नाम्नि सम्भवति स्वरान्तरस्य च व्यञ्जनान्ते नाम्नोऽसम्भवात् आह पूर्वाक्षर इति। पूर्वनाममतमक्षरं संश्लिष्टं यस्य स पूर्वाक्षरः तेन नामाक्षरं पश्चाच्च चाकारादिः स्वरः प्लुतः कार्यः। एतच्च वाक्यस्य टेः प्लुत उदात्तः इत्यस्यानुवृत्तौ "प्रत्यभिवादेऽशूद्रे" इति प्लुतं स्मरन् पाणिनिः स्फुटमुक्तवान्। व्याख्यातञ्च वृत्तिकृता वामनेन टेरिति किं व्यञ्जनान्तस्यैव टेः प्लुतो यथा स्यादिति। तस्मादीदृशं प्रत्यभिवादनवाक्यम् आयुष्मान् भव सौम्य! शुभशर्म३न्! एवं क्षत्रियस्य बलवर्म३न् एवं वैश्यस्य वसुभूते३" "प्लुतो राजन्यविशां वेति कात्यायनवचनात् क्षत्रियवैश्ययोः पक्षे प्लुतो न भवति। शूद्रस्य प्लुतो न कार्यः अशूद्र इति पाणिनिवचनात्। "स्त्रियामपि निषेध" इति कात्यायनवचनात् स्त्रियामपि प्रत्यभिवादनवाक्ये न प्लुतः"। [भियोगे त्रिका॰।

**प्रत्यभिस्कन्दन** न॰ प्रति+अभि+स्कन्द–भावे ल्युट्। प्रत्य-

**प्रत्यय** पु॰ प्रति+इण–भावकरणादौ अच्। १अधीने २शपथे ३ज्ञाने ४विश्वासे प्रामाण्येन निश्चये ५हेतौ ६छिद्रे ७शब्दभेदे अमरः। ८आचारे ९ख्यातौ मेदि॰। १०निश्चये ११स्वादुनि हेमच॰ १२सहकारिकारणे त्रिका॰। शब्दभेदप्रत्ययलक्षणन्तु शब्दश॰ प्रका॰ उक्तं यथा "लाघवादन्यथा निर्वक्ति "इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः। तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते"। यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि तिङर्थस्यान्वयबोधने स्वरूपायोग्यः स वा निभादिशब्देभ्यो भिन्नस्तादृशार्थे प्रत्यय इत्यर्थः। चैत्रोऽस्मीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम्। एवं यजेत स्वीयेतेत्यादौ यजादिधातूनाम्। पचतीत्यादौ तिङां पाचकोऽस्मीत्यादौ कृतां काश्यपिरित्यादौ च तद्धितानाम् प्रकृत्यर्थावच्छिन्ने एव स्वार्थे कृत्यादौ तिङर्थस्य वर्त्तमानत्वादेर्बोधकत्वं न तु तदनवच्छिन्न इति न तेष्वप्रसङ्गः। निभनिपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृशसमुच्चयादिस्वार्थे तिङर्थस्यान्वयं प्रति स्वरूपायोग्योऽपि निभादिरेवेति न तत्र प्रसङ्गः"।

वैयाकरणमते तु अस्याभिन्नलक्षणं शब्दार्थरत्ने उक्तं यथा "प्रत्ययस्तु प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः प्रकृतिशब्ददर्शितभाष्योक्तेः। "स्वीयमर्थं प्रत्याययतीति" प्रत्ययलक्षणे भाष्योक्तेश्च तथैवावगम्यते। अवधिश्च पूर्वापररूपो ग्राह्यः तेन वकुचि नाप्रसङ्गः तस्यापि प्रकृत्यवधिकत्वेन विधीयमानत्वात्। सिद्धान्ते तु वृत्तिशब्दानां समुदायशक्तिस्वीकारेण वकुजादेर्निरर्थकतया मुख्यप्रत्ययत्वाभावादेव पूर्वत्वरूपावधित्वप्रवेशेऽपि न क्षतिः। अतएव प्रकृतिशब्दोक्तहरिकारिकायां "प्रत्ययः पर" इत्यनेन परत्वेन विधीयमानत्वं प्रत्ययत्वमुक्तं तस्य च मुख्यत्वद्योतनार्थं स्वार्थकत्वसाकाङ्क्षत्वकथनाय च इतरत् विशेषणम् तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तदवधिकत्वेन विधीयमानत्वं तत्प्रत्ययत्वमिति फलितोऽर्थः। अन्वितत्वञ्च विशेष्यतया विशेषणतया वा ग्राह्यं तेन तिङा धात्वर्थविशेष्यकान्वयस्य बोधकत्वेऽपि न क्षतिः। यदि चावयवशक्तिस्वीकारस्तदा परपदेनावधिमात्रं लक्षणीयम् अवधिश्च पूर्वापरान्यतरएव निवेशनीयः। एवञ्च प्रत्ययनिमित्तकप्रकृत्यङ्गकार्यविशेषे विकरणागमादीनां प्रत्ययत्वस्वीकारेण परत्वमात्रं प्रत्ययत्वमिति बोध्यम्। अथवा प्रत्यय इत्यधिकृत्य पञ्चमाध्यायसमाप्ते विधीयमानत्वं पारिभाषिकप्रत्ययत्वं तत्रैव अर्थबोधकत्वे सतीति विशेषणे मुख्यप्रत्ययत्वसामान्यलक्षणं पर्यवस्यति तत्तत्प्रत्ययत्वन्तु क्लृप्तमेव। स्वार्थिकप्रत्ययानामपि प्रकृत्यर्थानुवादितया स्वार्थबोधकत्वमतएवाभिहितं वाक्यपदीये "स्वार्थिकाः प्रत्ययाः केचित् प्रकृत्यर्थानुवादिनः" इति। एतदनुरोधेनैव शेखरादौ स्वस्वप्रकृत्यर्थान्यतरप्रत्यायकत्वं प्रत्ययानामुक्तम्। विकरणादयः पुनः सर्वथा निरर्थकाः तेषां द्योतकत्वाद्यनङ्गीकारात् तद्व्यतिरेकेणापि लडादौ धातुमात्रादेवार्थप्रतीतेर्दर्शनात्। उक्तञ्च वाक्यपदीये "यत्र वाऽव्यभिचारेण तयोः शक्तिप्रकल्पनम्। नियमस्तत्र

नियमो न त्वेवं य्यनुपवादिष्विति"। यत्र ययोरव्यभिचारेणान्वयव्यतिरेकाभ्यां, नियमः अर्थप्रतीतिनियमस्तयोः प्रकृतिप्रत्यययोः शक्तिकल्पनम्। यत्र चैवं न नियमस्तत्र य्यनुपवादिषु नेत्यशोक्त्या शक्तिकल्पनं नेत्यर्थः"। १२विष्णौ पु॰ "प्रत्ययः सर्वदर्शनः" विष्णुस॰। तस्य ज्ञानरूपत्वात् तथात्वम् भाष्ये दृश्यम्। प्रत्ययश्च बुद्धिरात्मगुण इति नैयायिकाः। महत्तत्त्वधर्म इति सांख्याः। "एष प्रत्ययसर्गो विपर्य्ययाशक्तितुष्टीनाम्" सा॰का॰। "प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः तत्र विपर्य्ययोऽज्ञानमविद्या च बुद्धिधर्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव, तत्र विपर्य्ययाशक्तितुष्टिषु यथायोगं सप्तानां धर्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति" त॰कौ॰। तदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सर्गपदं सृज्यमानपरं तथा चाविद्यादेर्बुद्धिधर्मत्वात् तत्सृष्टत्वम्।

**प्रत्ययकारिन्** त्रि॰प्रत्ययं करोति कृ–णिनि। १विश्वासकारके स्वमतत्वसूचके २मुद्राभेदे(मोहर)स्त्रिका॰ ङीप् च अमरः

**प्रत्ययित** त्रि॰ प्रति+अय–क्त। १आप्ते २विश्वस्ते ३प्रतिगते

**प्रत्यरा** स्त्री प्रतिनिहिताः अराः प्रा॰स॰। अरादाढ्र्याय उपनिहिते कीलके "शताङ्गं विंशतिप्रत्यराभिः" श्वेताश्व॰उ॰"पूर्वोक्तानामराणां दाढ्र्याय ये प्रतिविधीयन्ते कीलकास्ते प्रत्यरा इत्युच्यन्ते" भाष्ये उक्तम्।

**प्रत्यरि** पु॰प्रति+ऋ–इन्। १शत्रौ २जन्मतारातः पञ्चमचतुर्दशत्रयोविंशतितारके "जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधकोवधः। मित्रं परममित्रं च जन्मद्यानि त्रिधा पुनः" ज्यो॰त॰। "तारा पुनः पापाख्या त्रिविधा पञ्चचतुर्दशविंशतिस्त्रियुता। सिद्धिफला इद्धिकरी विनाशसंज्ञा क्रमात् कथिता" ज्यो॰त॰। तेन तृतीयस्यैव विशेषत आवश्यककार्यादौ निषेधात् त्याज्यता आद्ययोर्द्वयोस्तु प्रतिप्रसवः इति द्रष्टव्यम् "प्रत्यरौ लवणं दद्यादिति" दानमपि तृतीयप्रत्यरावेवेति विवेचनीयम्।

**प्रत्यर्थिन्** त्रि॰ प्रत्यर्थयते प्रति+अर्थ–पीडने णिनि। १शत्रौ अमरः। प्रतिकूलमर्थयते णिनि, प्रतिपक्षः अर्थिनः प्रा॰ स॰ वा। व्यवहारे २प्रतिवादिनि शब्दर॰। "प्रत्यर्थिनोऽग्रतो लेख्यं प्रतिज्ञातार्थसाधनम्" याज्ञ॰।

**प्रत्यर्पण** न॰ प्रति+ऋ–णिच्-पुक्-ल्युट्। प्रतिदाने गृहीतस्य धनादेः पुनर्दाने प्रतिसमर्पणे।

**प्रत्यवनेजन** न॰ प्रतिरूपमवनेजनम् प्रा॰स॰। श्राद्धाङ्गे प्रथमजलादिदानरूपावनेजनरूपे पिण्डोपरि क्रियमाणे पुनरवनेजने तच्च छन्दोगेतरपरं यथोक्तम् "छन्दोगानान्तु पिण्डपात्रप्रक्षालनेन पूर्वदवनेजनम्। यथा छन्दोगपरिशिष्टं "तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्" अत्राप्यवनेजयेदिति श्रुतेर्हि तोयावनेजनेऽपि अवनेनिक्ष्वेति वक्तव्यं न तु प्रत्यवनेनिक्ष्वेति" श्रा॰त॰ रघु॰।

**प्रत्यवमर्श** पु॰ प्रति+अव–मृश–भावे घञ्। अनुसन्धाने "स्मृतिः प्रत्यवमर्शश्च तेषां जात्यन्तरेऽभवत्" हरिवं॰२१अ॰

**प्रत्यवमर्ष** पु॰ प्रति+अव+मृष–क्षान्तौ भावे घञ्। सहने "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" पञ्चशिखाचार्यः। "स्वल्पसङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मनाऽनर्थहेतुना अपूर्वेण सङ्करः, सपरिहारः कियतापि प्रायश्चित्तेन परिहर्त्तुं शक्यः। अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् स प्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति स्वयन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" त॰कौ॰। भावे ल्युट्। प्रत्यवमर्षण तत्रार्थे न॰।

**प्रत्यवर** त्रि॰ प्रतिरूपोऽवरः प्रा॰स॰। अतिनिकृष्टे "प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः" मनुः।

**प्रत्यवरोह** पु॰ प्रति+अव+रुह–घञ्। (नामा) अवरोहे ल्युट्। प्रत्यवरोहण तत्रार्थे न॰।

**प्रत्यवसान** न॰ प्रति+अव+सो–क्त। भोजने हेमच॰।

**प्रत्यवसित** त्रि॰ प्रति+अव+सो–कर्मणि क्त। भुक्ते अमरः।

**प्रत्यवस्कन्द** पु॰ प्रति+अव+स्कन्द–करणे घञ्। व्यवहारे उत्तरभेदे उत्तरशब्दे १०८९पृ॰ दृश्यम्। करणे ल्युट्। प्रत्यवस्कन्दन तत्रार्थे न॰।

**प्रत्यवस्था** स्त्री प्रति+अव+स्था–भावे अङ्। १प्रतिपक्षतया अवस्थाने। भावे ल्युट्। प्रत्यवस्थान तत्रार्थे न॰। "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम्" गौ॰त॰

**प्रत्यवस्थातृ** त्रि॰ प्रति+अव+स्था–तृच्। १प्रतिपक्षतया अवस्थातरि प्रतिवादिनि। २शत्रौ हेम॰।

**प्रत्यवहार** पु॰प्रति+अव–हृ–भावे घञ्। १संहारे रघुः ४।४४ २युद्धार्थमुद्युक्तानां सैन्यानां युद्धात् निवारणे मा॰प॰ २८३अ॰।

**प्रत्यवाय** पु॰ प्रति+अव+इण—करणे अच्। १पापे “अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते” जाबालिः। भावे अच्। २वैपरीत्याचरणे मनुः ४।२४५।

**प्रत्यवेक्षण** न॰ प्रति+अव+ईक्ष—भावे ल्युट्। पूर्वापरालोचने २एतावत्कृतमेतावत् न कृतमित्यर्थानुसन्धाने च। प्रति+अव+ईक्ष—भावे अ। प्रत्यवेक्षा तत्रार्थे स्त्री रघुः १७।५१।

**प्रत्यश्मन्** पु॰ प्रतिरूपः अश्मा प्रा॰स॰। गैरिके हेम॰।

**प्रत्यष्ठीला** स्त्री सुश्रुतोक्ते अष्ठीलातुल्ये रोगभेदे “अष्ठीलावद्घनं ग्रन्थिमूर्द्धमायतमुन्नतम्। वाताष्ठीलां विजानीयाद्बहिर्मार्गावरोधिनीम्। एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम्। प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम्”।

**प्रत्याकार** प्रतिकृत आकारः खड्गाकारो येन प्रा॰ब॰। खड्गकोषे त्रिका॰। [२दूरीकृते अमरः।

**प्रत्याख्यात** त्रि॰ प्रति+आ+ख्या—कर्मणि क्त। १निराकृते

**प्रत्याख्यान** न॰ प्रति+आ+ख्या—भावे ल्युट्। निराकरणे अमरः। [(फिरे आशा) हरिवं॰ १२५अ॰।

**प्रत्यागति** स्त्री प्रति+आ+गम—भावे क्तिन्। प्रत्यागमने

**प्रत्यागम** पु॰ प्रति+आ+गम—भावे अप्। (फिरे आशा) यस्मात् गतस्तस्मिन् पुनरागमने “तीर्थात् प्रत्यागमेऽपि च” प्रा॰त॰। भावे ल्युट्। प्रत्यागमन तत्रार्थे न॰।

**प्रत्यादिष्ट** त्रि॰ प्रति+आ+दिश—कर्मणि क्त। निरस्ते अमरः

**प्रत्यादेश** पु॰प्रति+आ+दिश—भावे घञ्। १निराकरणे अमरः भक्तान् प्रति आदेशः। २भक्तान् प्रति अभीष्टसिद्ध्यर्थं देवानादेशे च।

**प्रत्याधान** न॰ प्रतिपत्त्या धीयते प्रति+आ+धा—कर्मणि ल्युट्। १मस्तके “यो ह वै शिशुं साधानं प्रत्याधानम्” शत॰ब्रा॰ १४।५।२।१ भाष्यम्। “मस्तकस्य सर्वदेहेऽवयवेषु आधीयमानत्वात् तथात्वम्। भावे ल्युट् प्रा॰स॰। २द्वितीयाधाने न॰।

**प्रत्याध्मान** पु॰ वातव्याधिभेदे। तस्य लक्षणमाह “विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम्। प्रत्याध्मानं विजानीयात् कफव्याकुलितानिलम्”। विमुक्तपार्श्वहृदयं पार्श्वे हृदयं च विहाय जातं तदेवाध्मानम्। कफव्याकुलितानिलं कफेनावरुद्धवातम्” भावप्र॰।

**प्रत्यापत्ति** स्त्री प्रति+आ+पद—भावे क्तिन्। १वैराग्ये भा॰ शा॰ २६१ अ॰ नीलकण्ठः। २पुनरागमने च।

**प्रत्याम्नान** त्रि॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना—कर्मणि ल्युट्। प्रतिनिधौ “यजमानकर्तृत्वेन विधीयन्ते प्रत्याम्नानाच्च ऋत्विजो निवर्त्तन्ते” कात्या॰ श्रौ॰ १।६।१२ पद्धतौ।

**प्रत्याम्नाय** पु॰ प्रतिरूपतया आम्नायते प्रति+आ+म्ना—कर्मणि घञ्। प्रतिनिधित्वेन विधीयमाने।

**प्रत्यायक** त्रि॰प्रति+इ—ण्वुल्। १विश्वासकारके २बोधके च।

**प्रत्यायन** न॰ प्रति+आ+इ—णिच् “णौ गमिरबोधने” पा॰ उक्तेः न गमादेशः भावे ल्युट्। १बोधने २विश्वासजनने भा॰अनु॰२४८ श्लो॰।

**प्रत्यारम्भ** पु॰ प्रतिरूप आरम्भः प्रा॰स॰। आरम्भात् पश्चात् आरम्भे गवामयनशब्दे २५६२ पृ॰दृश्यम्।

**प्रत्यालीढ** न॰ धन्विनां युद्धार्थमवस्थितिभेदे आलीढविपरीतरूपतया स्थितौ आलीढशब्दे ८२४ पृ॰ दृश्यम्।

**प्रत्यावर्त्तन** न॰ प्रति+आ+वृत—णिच्—वा भावे ल्युट्। १प्रतिनिवृत्तौ २प्रतिनिवारणे च।

**प्रत्याशा** स्त्री किञ्चित् वस्तु प्रति+आशा प्रा॰स॰। किञ्चिद्वस्तु प्रति वाञ्छायाम्।

**प्रत्याश्राव** पु॰ प्रति+आ+श्रु—णिच्—अच्। १उद्दिश्य श्रावणे कर्मणि अच्। २अस्तुश्रौषडिति शब्दे यजु॰१६।२४वेददी॰

**प्रत्याश्रावण** न॰ प्रति+आ+श्रु—णिच् भावे ल्युट्। अग्नीध्रकर्तृके अध्वर्युं प्रति मन्त्रविशेषस्य आश्रवणे शत॰ब्रा॰ १२।२।८ भाष्ये दृश्यम्। [नार्थमाश्वासने।

**प्रत्याश्वासन** न॰प्रति+आ+श्वस—णिच्—भावे ल्युट्। सान्त्व॰

**प्रत्यासत्ति** स्त्री प्रति+आ+सद—भावे क्तिन्। १नैकट्ये न्याय्मते २अलौकिकप्रत्यक्षजनके सम्बन्धमात्रे “आसत्तिराश्रयाणान्तु” भाषा॰ “आसत्तिः प्रत्यासत्तिः” सि॰मु॰।

**प्रत्यासन्न** त्रि॰ प्रति+आ+सद—क्त। १अतिनिकटस्थे जटा॰ २सम्बद्धे च।

**प्रत्यास(सा)र** पु॰ प्रति+आ+सृ—आधारे घञ् अप् वा। अबन्तः १सैन्यपश्चाद्भागे घञन्तः तत्रार्थे अमरः। यत्र व्यूहस्य पश्चाद्व्यूहान्तरं क्रियते २तत्रार्थे भरतः।

**प्रत्यास्वर** पु॰ प्रत्यास्वरति प्रति+आ+स्वृ—अच्। १प्रत्यागते अस्तभावात् पुनः २प्रत्यागते आदित्ये च “स्वर इतीमं (प्राणम्) आचक्षते स्वर इति प्रत्यास्वर इति चामुम्” (आदित्यम्) छा॰उ॰। “किञ्च स्वर इतीमं प्राणमाचक्षते कथयन्ति तथा स्वर इति प्रत्यास्वर इति चामुं सवितारम्। यस्मात् प्राणः स्वरत्येव न पुनस्तेतः प्रत्यागच्छति।

र्जविता तस्मान्निवर्त्त्य पुनरप्यहन्यहनि प्रत्यावच्छति । ततः प्रत्याहारोऽस्माद्रुत्पत्तौ नामतश्च समानमितरेतरं प्राणादियौ” भा० । [विषयेभ्यो निवारणे ।

प्रत्याहरण न० प्रति+आ+हृ–भावे ल्युट् । १चित्तेन्द्रियादेः

प्रत्याहार पु० प्रति+आ+हृ–भावे घञ् । चित्तेन्द्रियादेः विषयेभ्यो निवारणे योगाङ्गभेदे तल्लक्षणं च यथाङ्गयोग शब्दे ५२४पृ० उक्तं तत्कालमानञ्च “प्राणायामद्विषट्केन प्रत्याहार उदाहृतः” काशीख०४१अ० उक्तम् । “स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः” पात०सू० “स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते । यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुविशन्ते तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः” भा० । “ततः परमा वश्यतेन्द्रियाणाम्” पात०सू० शब्दादिष्व व्यसनमिन्द्रियजय इति केचित् सक्तिर्व्यसनं व्यस्यत्येनं श्रेयस इति अविरुद्धा प्रतिपत्तिर्न्याय्या शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित् चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः । ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवत् प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिनः इति” भा० ।

अत्र चित्तस्यैव प्रत्याहारेऽन्येन्द्रियस्य प्रत्याहारोऽर्थसिद्ध इति बोध्यम् तत्फलञ्च । मनुना उक्तम् “प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान्” । प्रत्याह्रियन्ते संक्षिप्य गृह्यन्ते वर्णा अनेन प्रति+आ+हृ–करणे घञ् । “आदिरन्त्येन सहेता” पा०सूत्रोक्ते २व्याकरणप्रसिद्धे संज्ञायां च यथा “अण् इति अ इ उ ण्” इति वर्णानां ग्रहणम् एवं सुप् तिङ्प्रभृतिष्वपि स्वादीनां तिबादीनाञ्च ग्रहणमिति । “प्रत्याहारेष्वितां न ग्रहणमिति” तेन अच् प्रत्याहारे चकारादीनां न ग्रहणम् बोध्यम् । भावे घञ् । ३उपादाने पु० अमरः । [वाक्येन ४निराकृते च ।

प्रत्युक्त त्रि० प्रति+वच–कर्मणि क्त । १उत्तरिते प्रतिवा-

प्रत्युक्ति स्त्री प्रति+वच–भावे क्तिन् । प्रतिवाक्यकथने शब्दर०

प्रत्युज्जीवन न० प्रति+उद्+जीव–भावे ल्युट् । पुनर्जीवने मरणोत्तरं पुनर्जीवने । “रसविच्छेदहेतुत्वात् मरणं नैव वर्ण्यते । वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः” सा०द० । यथा कादम्बरीपत्रके तद्वर्णनम् ।

प्रत्युत अव्य० प्रति–उत द्व० १स्वपक्षस्थापनाय परपक्षनिराकरणाय वा उक्तस्य तद्वैपरीत्यभावे २वैपरीत्यमात्रे च “न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया” काव्याद० ।

प्रत्युत्क्रम पु० प्रति+उद्+क्रम–घञ् न वृद्धिः । १युद्धार्थोद्योगे २प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च अमरः । क्तिन् । प्रत्युत्क्रान्ति तत्रार्थे स्त्री क्षीरस्वामी ।

प्रत्युत्तर न० प्रतिरूपमुत्तरम् प्रा०स० उत्तरस्योत्तरवाक्ये वादिनोपन्यस्तपक्षस्य तद्विरुद्धपक्षप्रतिपादके वाक्ये ।

प्रत्युत्थान न० प्रति+उद्+स्था–ल्युट् । अभ्युत्थाने आगतस्य समाननार्थमासनादुत्थितौ “प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते” मनुः ।

प्रत्युत्पन्नमति त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य । १तत्कालोचितबुद्धौ हेम० । २प्रतिभान्विते जटा० । अनागतविधातृशब्दे १५४पृ० दृश्यम् ।

प्रत्युदाहरण न० प्रतिकूलमुदाहरणं प्रा०स० । उदाहरणस्य वैपरीत्येन उदाहरणे । “अन्तर्वत्पतिवतोर्नुक्” पा०सू० इत्युक्तौ अन्तर्वत्नी पतिवत्नीत्युदाहृत्य “प्रत्युदाहरणन्तु अन्तरस्त्यस्यां शालायां घटः । पतिमती पृथिवी” सि०कौ० ।

प्रत्युद्गम पु० प्रति+उद्+गम–अप् न वृद्धिः । १प्रत्युत्थाने (आगुवाडाइया लोया) प्रतिगमने २च भावे ल्युट् । प्रत्युद्गमन तत्रार्थे न० ।

प्रत्युद्गमनीय न० प्रति+उद्+गम–अनीयर् । १धौतवस्त्रयुग्मे अमरः “गृहीतप्रत्युद्गमनीयवस्त्रा” इति कुमारे पाठान्तरं प्रक्षेवेति न दुष्टत्वम् । २सम्प्रस्थानयोग्ये पूजनीये च त्रि० ।

प्रत्युन्नमन न० प्रतिकूलमुन्नमनं प्रा०स० । उन्नमनप्रतिकूले अवनमने । “चक्षुष्याऽप्रपीडिते प्रत्युन्नमनम्” सुश्रुतः नयनचिकित्साङ्गक्रियोक्तौ ।

प्रत्युपकार पु० प्रतिरूपः उपकारः प्रा०स० । १कृतोपकारेण कृते उपकारकस्य उपकारानुरूपे हिताचरणे ।

प्रत्युपदेश पु० प्रतिरूपः उपदेशः प्रा०स० । १उपदेशकस्य प्राप्तोपदेशेन कृते विद्याभेदे कुमा० १।२४

प्रत्युपहार पु० प्रतिरूप उपहारः प्रा०स० । अनुरूपे उपहारे उपढौकनीये द्रव्ये ।

प्रत्युरस अव्य० उरसि विभक्त्यर्थेऽव्ययी० । “प्रतेरुरसः सप्तमीस्थात्” पा० अच् समा० । उरसीत्यर्थे । “सप्तम्यास्थादित्युक्तेः षष्ठ्यर्थ” इति अच् । प्रत्युरस इत्येव ।

प्रत्युलूक पु० प्रतिकूलः उलूकस्य प्रा०स० । १काके भाग० १।१

१४।१३। "प्रत्युलूकः काकः" श्रीधरः। प्रतिरूपः उलूको यस्य रूप्। प्रत्युलूकक उलूकानुरूपे पक्षिभेदे "उलूका प्रत्युलूककान्" हरिवं० ३अ०।

**प्रत्युष** पु० प्रति+उष–दाहे आधारस्य कर्तृत्वविवक्षायां क। प्रातःकाले मधुरेशः।

**प्रत्युषस्** न० प्रति+उष–आधारे कसुन्। प्रातःकाले अमरः। "याति ब्रह्मिं पुरस्तादरुणकिरणलये प्रत्युषः पारिजातः" सूर्य्यशतकम्।

**प्रत्यूष** पु० प्रत्यूषति रुजति कालकान् प्र+ऊष–रुजायां क। १प्रभाते अमरः "प्रत्यूषपवनाधारैः" हरिवं० ८३अ०। अष्टवसुमध्ये २वसुभेदे च जटा०। धरबन्दे २८४७पृ० दृश्यम्। ३सूर्य्ये शब्दर०।

**प्रत्यूषस्** न० प्रति+ऊष–रुजायाम् असुन् असि वा। प्रभाते अमरः "स्नानमत्यधिकं कार्य्यं प्रत्यूषस्यात्मनो जले" हरिवं० १४अ०। [प्रतिबन्धकत्वात्तथात्वम्।

**प्रत्यूह** पु० प्रति+ऊह–घञ्। विघ्ने अमरः तस्य ऊहां प्रति

**प्रत्यृच** अव्य०ऋचमृचं प्रति वीप्सायाम् अव्ययी०अच् समा०। एकैकस्यामृचौ आश्व० ६।४

**प्रत्येक** अव्य० एकमेकं प्रति वीप्सायामव्ययी०। एकैकमित्यर्थे वीप्सायुते एकशब्दार्थे।

**प्रत्येकबुद्ध** पु० बुद्धभेदे त्रिका०।

**प्रत्वक्षस्** त्रि० प्र+त्वक्ष–तनूकरणे असुन्। प्रकर्षेण तनूकारके शत्रुघातिनि ऋ० १।८१।१ भा०।

**प्रथ** ख्यातौ भ्वा०आ०अक० सेट्। प्रथते अप्रथिष्ट घटा०मित् प्रथयति। भावे अङ् प्रथा। [ति अपप्रथत् त।

**प्रथ** ख्यातौ अक०विक्षेपे सक०चुरा०उभ०सेट् घटा०। प्रथयति-

**प्रथम** त्रि० प्रथ–अमच्। १प्रधाने २आद्ये च अमरः। जसि वा सर्व्वनामतास्य प्रथमे प्रथमाः। तस्य भावः ष्यञ्। प्राथम्य आद्यत्वे प्राधान्ये च न०।

**प्रथमज** त्रि० प्रथमं जायते जन–ड। १पूर्व्वजाते २प्रथमगर्भजाते पुंस्त्री० यजु० १६।२५ जन–क्त। प्रथमजात तत्रार्थे त्रि०

**प्रथमवयसिन्** त्रि० प्रथमवयोऽस्त्यस्य वा० इनि सान्तत्वात् न पदत्वम्। प्रथमवयोयुक्ते शत० ब्रा० १२।१।७।८स्त्रियां ङीप्।

**प्रथमवित्ता** स्त्री प्रथमं वित्ता विन्ना लब्धा। प्रथमपरिणीतायां स्त्रियां महिष्याम् कात्या० १६।२।२।१५

**प्रथमसाहस** पु० "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः" विष्णु० उक्ते सार्द्धशतपणद्वयरूपे दण्डभेदे

**प्रथमाङ्गुलि** पुंस्त्री० कर्म०। वृद्धाङ्गुष्ठे "शब्दमयं महामायं प्रथमाङ्गुलियोगतः" प्रथमाङ्गुलिरङ्गुष्ठाङ्गुलिः तन्त्रसारः

**प्रथमाश्रम** पु० न० कर्म०। ब्रह्मचर्य्याश्रमे "शरीरबन्धः प्रथमाश्रमो यथा" कुमा०।

**प्रथा** स्त्री प्रथ–घटा० भावे अङ्। ख्यातौ अमरः।

**प्रथित** त्रि० प्रथ–क्त। १ख्याते अमरः। २स्वारोचिषमनोः पुत्रभेदे पु० हरिवं० ७अ०। ३विष्णौ पु० "अच्युतः प्रथितः प्राणः" विष्णु स०।

**प्रथिमन्** पु० पृथोर्भावः पृथु+इमनिच् प्रथादेशः। पृथुत्वे स्थूलत्वे। अतिशयेन पृथुः इमनिच्। अतिशयेन पृथुत्वयुते

**प्रथिमिनी** स्त्री प्रथिमाऽस्त्यस्याः "संज्ञायां मन्त्राभ्याम्" पा० इनि टिलोपः। पृथुत्वयुतस्त्रीभेदे। असंज्ञायां तु मतुप् मस्य वः। प्रथिमवत् इत्येव स्त्रियां ङीप्।

**प्रथिवी** स्त्री पृथिवी+पृषो०। पृथिव्यां भा० वि० ८४अ०।

**प्रथिष्ठ** त्रि० अतिशयेन पृथु–इष्ठन् प्रथादेशः। पृथुतरे। तत्रार्थे ईयसुन् प्रथीयस् पृथुतमे स्त्रियां ङीप्।

**प्रथु** पु० प्रथते प्रथ–उन्। विष्णौ "प्राणदः प्रणवः प्रथुः" विष्णु स०।

**प्रथुक** पु० प्रथ–बा० उक। पृथुके चिपिटके रायमुकुटः।

**प्रदक्षिण** न० प्रगतो दक्षिणाम् अत्या० स०। दक्षिणपार्श्वानुगते देवेभ्यः स्वदक्षिणप्रदर्शनेन प्रणामभेदे तत्प्रकारफलादिकं यथा "प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दक्षिणं दर्शयन् पार्श्वं मनसापि च दक्षिणः। सकृत्त्रिर्वा वेष्टयेच्च देव्याः प्रीतिः प्रजायते। स च प्रदक्षिणो ज्ञेयः सर्व्वदेवौघतुष्टिदः। अष्टोत्तरशतं यस्तु देव्याः कुर्य्यात् प्रदक्षिणम्। सर्वान् कामान् समासाद्य पश्चान्मोक्षमवाप्नुयात्। मनसापि च यो दद्याद्देव्यै भक्त्या प्रदक्षिणम्। प्रदक्षिणाद्युपमन्त्रं नरकाणि न पश्यति" कालिकापु० ७०अ०। "एकं देव्यां रवौ सप्त त्रीणि कुर्य्याद्विनायके। चत्वारि केशवे कुर्य्यात् शिवे चार्द्धं प्रदक्षिणम्" कर्मलोचनम्। "दक्षिणाद्वायवीं गत्वा दिशं तस्माच्च वारुणीम्। ततश्च दक्षिणां गत्वा नमस्कारस्त्रिकोणवत्। अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समीरितम्। शिवप्रदक्षिणे मन्त्री अर्द्धचन्द्रक्रमेण तु। सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत्"। सोमसूत्रं जलनिःसरणस्थानम्। "प्रसार्य्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः। दर्शयेद्दक्षिणं पार्श्वं मनसापि च दक्षिणः। त्रिधा च वेष्टयेत् सम्यक् देवतायाः प्रदक्षिणम्" तन्त्रसारः।

**प्रदक्षिणित्** न० प्रदक्षिण+इष्णोच्। प्रदक्षिणशब्दार्थे ऋ०२।४२।१। भाष्ये दृश्यम्। [प्रदत्ते प्रकर्षेण दत्ते।

**प्रदत्त** त्रि० प्र+दा–कर्मणि क्त वा तादेशाभावे दद्भावः।

**प्रदर** पु० प्र+दृ–भावादौ अप्। १भङ्गे दारणसाधने २वाणे अमरः। ३विदारे ४स्त्रीणां योनिरोगभेदे मेदि० तन्निदानकर्म च श्वगुभारतोक्तं कर्मविपाकशब्दे १७६८ पृ० दर्शितम्। स च असृग्दराख्यः स्त्रीणां योनिरोगभेदः। तल्लक्षणादि माधवनिदाने उक्तं यथा

"विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च। यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च। असृग्दरं भवेत् सर्वं साङ्गमर्दं सवेदनम्। तस्यातिवृद्धौ दौर्बल्यं भ्रमो मूर्च्छा मदस्तृषा। दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः"। स च चतुर्विधो यथा "तं श्लेष्मपित्तानिलसन्निपातैश्चतुःप्रकारं प्रवदन्ति वैद्याः। आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोयप्रतिमं कफात्तु। सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्। रूक्षारुणं फेनिलमल्पमल्पं वातार्त्ति वातात् पिशितोदकाभम्। सक्षौद्रसर्पिर्हरितालवर्णं लाजप्रकाशं कुणपं त्रिदोषात्। तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम्"।

**प्रदल** पु० प्रकर्षेण दलति प्र+दल-अच्। बाणे जटा०

**प्रदव** पु० दुनोति दु–अच् "दुन्योरनुपसर्गे" पा० अनुपसर्गे इत्युक्तेः न ण। १प्रकृष्टतापके। भावे अप्। २प्रकृततापे पु०

**प्रदव्य** पु० प्रदवाय हितं वा० यत्। १दावाग्नौ कात्या०श्रौ० २५।४।२२ कर्कः। [२प्रकृष्टदायके त्रि०।

**प्रदा** स्त्री प्र+दा–भावे अङ्। प्रकृष्टदाने। कर्त्तरि क।

**प्रदान** न० प्र+दा–भावे ल्युट्। प्रकृष्टदाने "प्रदानं स्वाम्यकारणम्" मनुः।

**प्रदि** त्रि० प्र+दा–"उपसर्गे घोः किः" पा० कि। प्रदानकर्त्तरि

**प्रदिग्ध** त्रि० प्र+दिह–कर्मणि क्त। १लिप्ते २भर्जनविशेषयुते मांसे न० "मांसं बहुघृतैर्भृष्टं सिद्धा चोष्णाम्बुना शुद्धः। जीरकाद्यैः समायुक्तं परिशुष्कं तदुच्यते। तदेव घृततक्राढ्यं प्रदिग्धं समिजातकम्" शब्दच०।

**प्रदिव्** त्रि०प्रकर्षेण दीव्यति प्र+दिव–क्विप्। १प्रकर्षेण द्योतमाने ऋ० १।१२८।५ भा०व०। २प्रकृष्टदिने स्त्री ३पूर्वदिने ऋ० १।४७।१। ४पुरातने निघण्टुः बहुव०।

**प्रदिश्** स्त्री दिशोरन्तरालं प्रगता दिक् प्रा०स०। विदिशि दिशोरन्तरालदिशि जटा०।

**प्रदीप** पु० प्र+दीप–अच्। दीपे अमरः। दीपशब्दे ३६०५ पृ० दृश्यम्। तत्र हितः अपूपा० छ। प्रदीपीय तद्धिते त्रि० पक्षे यत्। प्रदीप्य तत्रार्थे

**प्रदीपन** पु० प्रदीप्यते प्र+दीप–ल्यु। १स्थावरे २विषभेदे तल्लक्षणं राजनि० उक्तं यथा "वर्णतो लोहितो यः स्यात् दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वैः कथितः स प्रदीपनः"। णिच्–ल्यु। ३प्रकाशके त्रि०।

**प्रदुह्** त्रि० प्र+दुह–सत्सूद्विषेत्यादिना क्विप् पा० प्रकर्षेण दोग्धरि पदत्वेऽस्य हस्य घत्वे दस्य धः। प्रधुक् प्रधुग्भ्यामित्यादि। [न्यकुब्धमिते देशे ३भित्तौ च मेदि०।

**प्रदेश** पु० प्रा०स०। १एकदेशमात्रे राजनि० २स्थाने तर्ज्ज-

**प्रदेशन** न० प्र+दिश–भावादौ ल्युट्। १उपदेशे कर्मणि ल्युट्। २राजादेरुपढौकने उपहारे (भेटि) द्रव्ये अमरः

**प्रदेश(शि)नी** स्त्री प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप्। तर्जन्यां तया हि वस्तु निर्दिश्यते। प्रदेशः अङ्गुष्ठादिमध्यस्थानमस्त्यस्य इनि ङीप्। अत्रैव अमरः।

**प्रदेह** पु० प्र+दिह–भावे घञ्। १प्रलेपे व्रणाद्युपशमार्थं द्रव्यविशेषस्य व्रणादौ २लेपने सुश्रुतः।

**प्रदोष** पु० प्रक्रान्ता दोषा रात्रिरत्र काले प्रा०ब०। रात्रेः प्रथमभागभेदे तिथिभेदस्य प्रदोषेऽनध्यायः ति०त०उक्तो यथा "सारस्वतादिप्रदोषमाह स्मृतिः "त्रयोदश्याश्चतुर्थ्याश्च सप्तम्या द्वादशीतिथेः। प्रदोषेऽध्ययनं धीमान् न कुर्वीत यथाक्रमम्। सारस्वतो गाणपतः सौरश्च वैष्णवस्तथा" प्रदोषशब्दोऽत्र प्रथमप्रहर इति हेमाद्रिः। रात्रिपर इति निर्णयामृतकृत्। तथा व्रतभेदे रात्रिप्रथमयामपरता हेमाद्रौ व्रत०उक्ता "त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम्। दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः"। इदं प्रदोषव्रतमिति हेमाद्रिः। शिवरात्रिव्रते तु "प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी" हेमाद्रि० स्मृतिः। तत्रैव वत्सः "प्रदोषोऽस्तमयादूर्द्ध्वं घटिकाद्वयमिष्यते"। घटिकादण्डद्वयम् "त्रयोदश्यस्तगे सूर्ये चतसृष्वपि नाडिषु। भूतविद्धा तु सा तत्र शिवरात्रिव्रतं चरेत्" ति०त० वायुपु० वाक्यैकवाक्यत्वात्। तथा च प्रदोषशब्दस्य रात्रिमात्रं रात्रेः प्रथमयामः प्रथमदण्डचतुष्टयं चार्थः कर्मभेदे तस्य ग्राह्यता। तत्रानध्याये शर्वरीमात्रपरता प्रदोषव्रते प्रथमयामपरता शिवरात्रिव्रतादौ दण्डचतुष्टयपरतेति विवेकः। "प्रदोषो रजनीमुखम्" इत्यमरोक्तिः रात्रेः प्रथमप्रहरप्रथमदण्डचतुष्ट-

यपरत्वाभिप्रायेण रात्रिमात्रे भक्तेति बोध्यम् ।

**प्रदोषक** त्रि० प्रदोषे भवः कालात् ठञं बाधित्वा पूर्वाह्ण त्यादिना वुन् । प्रदोषकालभवे ।

**प्रद्युम्न** पु० प्रकृष्टं द्युम्नं बलं यस्य । १कन्दर्पे अमरः । स च वासुदेवस्य रुक्मिण्यां जातः हरिवं० ११८अ० । सनत्कुमारांशजातस्य भा० आ० ६७अ० । २वैष्णवागमोक्ते चतुर्व्यूहात्मकविष्णोरंशभेदे च अनिरुद्धशब्दे १६२पृ० चतुर्व्यूहशब्दे २८७८ पृ० च दृश्यम् । मनोर्नड्वलायां जाते ३पुत्रभेदे पु० भाग० ४।१३।१४

**प्रद्यो** त्रि० प्रकृष्टा द्यौर्दिनं यत्र । प्रकृष्टदिने क्लीवत्वे ह्रस्वः प्रद्यु तस्य क्लीव एव ह्रस्वत्वेन गन्तव्येऽपि भाषितपुंस्कत्वाभावात् टाद्यचि न पुंवत् प्रद्युना इत्यादि सि०कौ०सुबो० प्रद्युकाप्रद्युनेत्युदाहृतं तच्चिन्त्यम् । [भा०स० १६अ० ।

**प्रद्योत** पु० प्र+द्युत-अच् । १रश्मौ हेमा० । २यक्षभेदे पु०

**प्रद्योतन** पु० प्र+द्युत-"अनुदात्तेतश्च हलादेः" पा० युच् । १सूर्य्ये हेमा० । २द्योतनशीले त्रि० । भावे ल्युट् । ३दीप्तौ न० ।

**प्रद्रव** पु० प्रकृष्टो द्रवः प्रा०स० । पलायने अमरः ।

**प्रद्राणक** त्रि० प्र+द्रा-कुत्सितायां गतौ क्त स्वार्थे क । कुत्सितां गतिं प्राप्ते अन्त्यावस्थां प्राप्ते "उपस्थितं चाक्रायण इभ्यग्रामे प्रद्राणक उवाच" छा०उ० "प्रद्राणकः कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः" भा० ।

**प्रद्राव** पु० प्र+"प्रद्रुस्रुस्रुवः" पा० अपं बाधित्वा घञ् । पलायने अमरः । घाथादि० अन्तोदात्तताच ।

**प्रद्राविन्** त्रि० प्र+द्रु-ताच्छील्ये णिनि । पलायनशीले ।

**प्रद्वार** न० प्रगतं द्वारं प्रा०स० । द्वारप्रान्तभागे

**प्रधन** न० प्र+धा-क्यु । १युद्धे अमरः । प्रकृष्टं धनमस्य । २प्रकृष्टधनयुक्ते त्रि० । निघण्टौ संग्रामनामसु सङ्ग्रमे इत्यत्र प्रधने" पाठान्तरम् । एदन्तमव्ययं तत्रार्थे ।

**प्रधमन** न० प्र+घ्मा० धम-ध्वाने भावे ल्युट् । सुखमारुतव्यापारभेदे सुश्रुतः ।

**प्रधा** स्त्री प्र+धा-भावे अङ् । १निधाने २दक्षसुतायां कश्यपपत्नीभेदे भा०आ०६५अ० । प्रधाया अपत्यं ढञ् । प्राधेय तदपत्ये पुंस्त्री० । "प्राधेयास्तपसांगणाः" मार्क० तत्कन्याश्च अनवद्यादयोऽप्सरसः भा०आ० ६५अ० ।

**प्रधान** न० प्र+धा-ल्युट् । सांख्यमतसिद्धायाम् सत्त्वरजस्तमोरूपगुणत्रयात्मिकायां १प्रकृतौ प्रकृतिशब्दे दृश्यम् । तत्कार्य्ये २बुद्धितत्त्वे ३परमात्मनि ४प्रज्ञायां ५पूर्वचिवे च । ६सेनापत्यध्यक्षे पु० ७श्रेष्ठे त्रि० अमरः "सेनाध्यक्षः प्रधानः स्यात्" अस्य पुंस्त्वमिति बोपालितः ।

**प्रधानधातु** पु० कर्म० । चरमधातौ वीर्य्ये शुक्रे त्रिका० । शुक्रस्य चरमधातुत्वम् चक्रशब्दे ५५८पृ० उक्तं दृश्यम् ।

**प्रधि** पु० प्रधीयन्ते काष्ठान्यत्र प्र+धा-आधारे कि । चक्रावयवकाष्ठसङ्गमस्थाने रथनाभौ अमरः ।

**प्रधी** त्रि० प्रकृष्टा धीर्यस्य । १प्रकृष्टबुद्धियुक्ते प्रा०स० २प्रकृष्टायां बुद्धौ स्त्री । प्रकृष्टं ध्यायति ध्यै-कर्त्तरि क्विप् । ३प्रकृष्टध्यानकर्त्तरि त्रि० । तत्र तृतीयार्थे गतिपूर्वकत्वात् यण् प्रध्यः प्रध्या इत्यादि आद्ययोस्तु प्रशब्दस्य धाप्रत्ययेऽपसर्गत्वाभावात् न यण् किन्तु इयङ् । प्रधियौ इत्यादीत्यन्ये सि०कौ० तु "हरिकारादीनां मते लक्ष्मीवद्रूपम् पदान्तरं विनाऽपि स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति स्वीकारात् लिङ्गान्तरानभिधायकं तदिति कैमटमते पुंवद्रूपम् प्रकृष्टा धीरिति विग्रहे तु लक्ष्मीवत् अमि शसि च प्रध्यं प्रध्य इति विशेषः" इत्युक्तम् ।

**प्रधूपित** त्रि० प्र+धूप-क्त । सन्तापिते "व्यसनप्रधूपिताम्" इति कुमारः । ज्योतिषोक्तायां २सूर्य्यगन्तव्यायां दिशि स्त्री । तत्र प्रधूमिता इति पाठान्तरम् । [तावस्थायाञ्च ।

**प्रध्वंस** पु० प्र+ध्वन्स-भावे घञ् । १नाशे सांख्यमते २अतीप्रध्वस्त त्रि० प्र+ध्वन्स-क्त । १नाशप्रतियोगिनि २अतीते च ३मन्त्रभेदे पु० "एकोनविंशत्यर्णो वा यो मन्त्रस्तारसंयुतः । हृल्लेखाङ्कुशबीजाढ्यं प्रध्वस्तं तं प्रचक्षते" तन्त्रसा० ।

**प्रनप्तृ** पु० प्रगतो नप्तारं जनकतया अत्या०स० । पौत्रपुत्रे प्रपौत्रे उज्ज्वलद० । [प्रकर्षेण नर्द्दनकर्त्तरि ।

**प्रनर्द्दक** त्रि० प्र+नर्द-ण्वुल् णोपदेशत्वाभावात् न णत्वम् ।

**प्रनष्ट** त्रि० प्र+नश-क्त षान्तत्वाभावात् न णत्वम् । नाशप्रतियोगिनि "प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत्" मनुः ।

**प्रना(णा)यक** त्रि० प्रकृष्टो नायकोऽस्य प्रशब्दस्य नयतिं प्रति उपसर्गत्वाभावात् न णत्वम् । प्रकृष्टनायकयुक्ते । प्र+नी-ण्वुलि तु णत्वम् । प्रणयकारके इति भेदः ।

**प्रपच** पु० प्रगतः पचम् अत्या०स० । पचने भा०द्रो० २०अ० ।

**प्रपञ्च** पु० प्र+पचि-आधारे घञ् । १विस्तारे २वैपरीत्ये ३प्रतारणे । कर्त्तरि पचा०अच् । ४संसारे च अमरः । तत्र वैपरीत्यं भ्रमो माया वेति स्वामी ।

**प्रपञ्चित** प्र+पन्च-णिच्-कर्मणि क्त । १विस्तारिते २प्रतारिते भ्रान्तिज्ञानविषयतया ३भ्रमादिते च भाग० १०।१४अ० ।

**प्रपतन** न० प्रपतत्यस्मात् प्र+पत—भीमा० अपादाने ल्युट्। १पतनापादाने तटादौ। भावे ल्युट्। प्रकर्षेण २पाते तत्प्रयोजनमस्य छ। प्रपतनीय प्रपातसाधने त्रि०।

**प्रपथ** पु० प्रकृष्टः पन्थाः प्रकृष्टः पन्था यत्र वा अच्समा०। १प्रकृष्टमार्गे २तद्युक्ते त्रि० ऋ०१।१६६।८ [स्त्री राजनि०।

**प्रपथ्य** त्रि० प्रकृष्टं पथ्यं प्रा०स०। १अत्यन्तहिते २हरीतक्यां

**प्रपद** न० प्रारब्धं पदम् प्रा०स०। पादस्याग्रभागे अमरः। प्रपदं व्याप्नोति ख। प्रपदीन पादाग्रव्यापके त्रि० आप्रपदीनशब्दे माघः ३।१२उदा०दृश्यम्। [इति शब्दो।

**प्रपन्न** त्रि०प्र+पद-क्त। शरणागते "प्रपन्नार्त्तिहरे! देवि!"

**प्रपन्नाड** पु० प्रपन्नान् अलति भूषयति अल-अण् उप०स० लस्य डः। १चक्रमर्दे रत्नमा०। तस्य दद्रुरोगिभिः सेवने तेषां रोगनिवारणेन भूषकत्वात्तथात्वम्।

**प्रपा** स्त्री प्रपीयतेऽस्यां प्र+पा-घञर्थे क। पानीयशालायाम्। पानीयशालिकाशब्दे ४३०६ पृ० दृश्यम्।

**प्रपाठक** पु०प्रकृष्टः पाठोऽत्र कप्। १वेदस्याध्यायांशभेदे २ग्रन्थान्यांशभेदे च। [तत्रे राजनि०।

**प्रपाणि** पु० प्रकृष्टः पाणिः प्रा०स०। करस्याधोभागे पाणि-

**प्रपात** पु० प्रपतत्यस्मात् पत-अपा०घञ्। १तटरहिते २निरवलम्बे ३पर्वतस्थानभेदे अमरः। ४निर्झरे ५कूले च मेदि० यस्मात् पतने अवस्थानाय क्रियाभेदो न भवति तादृशे स्थाने। भावे घञ्। ७अवस्कन्दे हेमच०।

**प्रपानक** न० प्रकृष्टं पानमस्य कप्। खण्डमरिचादिमिश्रिते पानीयद्रव्यभेदे "प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत्" यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः" सा०द०। रसशब्दे २०८४पृ०दृश्यम्।

**प्रपापूरणीय** त्रि० प्रपापूरणं प्रयोजनमस्य "छप्रकरणे विशिपूरिपतिरुहिप्रकृतेरनात्" वार्त्ति० छ। प्रपापूरणप्रयोजनके। [शब्दमाला।

**प्रपावन** न० प्रपेव कामपूरकं वनम्। कामारण्ये वनभेदे

**प्रपितामह** पु० प्रगतः पितामहं कार्यत्वेन अत्या०स०। १पितामहपितरि अमरः। तस्य पत्नी ङीप् २प्रपितामही तत्पत्न्यां स्त्री "स्वेन भर्त्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम्। पितामही च स्वेनैव स्वेनैव प्रपितामही" दायभागधृतवचनम्। पितामहस्य प्रजापतिजनकस्य चतुर्मुखब्रह्मणः जनके ३परब्रह्मणि "भूर्भुवः स्वस्सरस्तारः स पिता प्रपितामहः" विष्णुस०। "यो वै ब्रह्माणं विदधाति पूर्वम्" श्रुतेस्तस्य पितामहब्रह्मस्रष्टृत्वात्तथात्वम्। "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" मनुना सर्वपितामहस्यापि तेन सृष्टत्वात्तस्य तथात्वम्।

**प्रपित्वे** अव्य० उत्तरायणे निघण्टुः।

**प्रपुन्नाड(ट)** पु० पुमांसं नाटयति नडयति नड—भ्रंशे नट-अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा०स०। १चक्रमर्दे (चाकुन्दा) वृक्षे। डस्य लत्वे प्रपुन्नालोऽप्यत्र। २दद्रुमर्दने अमरः। पृषो० प्रपुनाड (पुपुन्नड) इत्येतावपि तत्रार्थे अमरे पाठान्तरम्।

**प्रपूरिका** स्त्री प्रकर्षेण पूर्यते कण्टकैः पूर—कर्मणि घञ् स्वार्थे क टाप् कापि अत इत्त्वम्। १कण्टकार्य्याम् हेमचन्द्रः २प्रकर्षेण पूरके त्रि०।

**प्रपूर्वग** पु० प्रकृष्टः पूर्वगः पूर्ववर्त्ती प्रा०स०। सृष्टेः प्राग्वर्त्तिनि १परमेश्वरे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतेः तस्य तथात्वम्। तद्रूपेण ध्येये २अश्विनीकुमारद्वये द्वि०व०। भा०आ०३अ० अश्विनीकुमारस्तुति।

**प्रपौण्डरीक** पु० पुण्डरीक+स्वार्थेऽण् प्रकृष्टं तादृशं पुष्पं यस्य। गजमनुष्याणां चक्षुर्हितकारके शालपर्णीतुल्यपत्रके क्षुपभेदे अमरः।

**प्रपौण्डरीकाद्य** न० "प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः। सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा। सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शोधितम्" चक्रपाणिदत्तोक्ते तैलभेदे।

**प्रपौत्र** पुंस्त्री०प्रगतः कारणतया पौत्रम् अत्या०स०। पौत्रस्य १पुत्रे तत्कन्यायां स्त्री ङीप्।

**प्रफर्वी** स्त्री प्रकृष्टं पर्व नितम्बस्थानं यस्याः स्त्रिया ङीप् पृषो०। प्रशस्तनितम्बायां स्त्रियां ऋ०१०।८५।१२ भा०। फर्वति गतिकर्मा इति वेददीपः। २प्रकृष्टगतियुक्ते त्रि० यजु०१२। ७६ वेददीपः।

**प्रफुल्त(ल्ल)** त्रि० प्र+फल—क्त आदित्त्वात् इटोऽभावे उत इत्त्वम् प्र+फुल्ल—विकाशे अच् वा (लत्वयुतः)। विकाशयुते अमरः। "लोध्रद्रुमं सानुमतः प्रफुल्त(ल्ल)म्" रघुटीकायां मल्लिनाथेन द्विधापाठः समर्थितः। [त्रिका०।

**प्रबन्ध** पु० प्र+बन्ध—भावे घञ्। १सन्दर्भे पद्यादेः २रचने च

**प्रबन्धन** न० प्र+बन्ध–भावे ल्युट्। प्रकर्षेण ग्रन्थने बन्धने

**प्रबन्धकल्पना** स्त्री ६त०। "प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः" इत्युक्तलक्षणायामल्पसत्यायां बहुमिथ्याकथायाम् अमरः। [अमरः।

**प्रब(व)र्ह** त्रि० प्र+बर्ह स्तुतौ (इह) वृद्धौ वा अच्। प्रधाने

**प्रबल** त्रि० प्रकृष्टं बलमस्य। १प्रकृष्टबलयुते। प्रकृष्टं बलति बल–धान्यावरोधे अच्। २पल्लवे शब्दमाला ३प्रसारिण्यां लतायां स्त्री राजनि०।

**प्रबल्हिका** स्त्री प्रबल्ह-आच्छादने ण्वुल्। प्रहेलिकायाम् अम० अयमोण्यादिः इन्। प्रबल्हि वा ङीप् प्रबल्ही च तत्रार्थे।

**प्रबाल** न० प्र+बल–धान्यावरोधे ज्वलादि० ण। १किसलये नवपल्लवे २वीणादण्डे च अमरः। ३रत्नभेदे पु० किं रत्नं कस्य ग्रहस्य प्रीतिकारित्वेन दोषहरं भवतीति प्रश्ने तदुत्तरमाह ज्यो० रत्नमालायां "माणिक्यन्तरणेः सुजातममलं, मुक्ताफलं शीतगोर्माहेयस्य तु विद्रुमो निगदितः, सौम्यस्य गारुत्मतम्। देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं, शनेर्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्य्यके"। "पुंसि क्लीवे प्रबालः स्यात् पुमानेव तु विद्रुमः" भावप्र० अत्रार्थेऽस्य पुंनपुंसकत्वमुक्तं रत्नानां गुणास्तत्रोक्ता यथा "रत्नानि भक्षितानि सुमधुराणि सराणि च। चक्षुष्याणि च शीतानि विषघ्नानि धृतानि च। मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च"। युक्तिकल्पतरौ तस्योत्पत्त्यादिकं भेदादिकञ्चोक्तं यथा "सूत उवाच आदाय शेषस्तस्यान्त्रं यमाशाकन्धरादिषु। चिक्षेप तत्र जायन्ते विद्रुमाः सुमहागुणाः। तत्र प्रधानं शशलोहिताभं गुञ्जाजवापुष्पनिभं प्रदिष्टम्। सुनीसकं देवकरोमकञ्च स्थानानि तेषु प्रभवं सुरागम्। अन्यत्र जातञ्च न तत् प्रधानं मूल्यं भवेच्छिल्पिविशेषयोगात्। प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत्। धनधान्यकरं लोके विषार्त्तिभयनाशनम्। परीक्षा पुलकेनोक्ता रुधिराख्यस्य वै मणेः। स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक!" इति गारुडे ८०अ०। "श्वेतसागरमध्ये तु जायते वल्लरी तु या। विद्रुमा नाम रत्नाख्या दुर्लभा वज्ररूपिणी। पाषाणं प्रभजत्येषा प्रयत्नात् कथिता सती। विद्रुमं नाम यद्रत्नमामनन्ति मनीषिणः। ब्रह्मादिजाति भेदेन तच्चतुर्विधमुच्यते। अरुणं शशरक्ताख्यं कोमलं स्निग्धमेव च। प्रबालं विप्रजातिः स्यात् सुखवेध्यं मनोरमम्। जवाबन्धूकसिन्दूरदाडिमीकुसुमप्रभम्। कठिनं स्निग्धदुर्वेधं क्षत्रजातिः तदुच्यते। पलाशकुसुमाभासं तथा पाटलसन्निभम्। वैश्यजातिर्भवेत् स्निग्धं वर्णाढ्यं मन्दकान्तिभम्। विद्रुमं शूद्रजातिः स्याद्दायुवेध्यं तथैव च। रक्तता स्निग्धता दार्ढ्यं चिरद्युति सुवर्णता। प्रबालानां गुणाः प्रोक्ता धनधान्यकराः पराः। हिमाद्रौ यत्तु संजातं तद्रक्तमतिनिष्ठुरम्। तत्र लिप्तो भवेच्चित्वकल्कोऽतिमधुरः स्थितः। तस्य धारणमात्रेण विषवेगः प्रशाम्यति। विवर्णता तु खरता प्रबाले दूषणद्वयम्। रेखा काकपदी विन्दुर्यथा वज्रेषु दोषकृत्"। तथा प्रबाले सर्वत्र वर्जनीयं विचक्षणैः। रेखा हन्याद्यशो, लक्ष्मीमावर्त्तः कुलनाशनः। पट्टलो रोगकृत् ख्यातो विन्दुर्धनविनाशकृत्। त्रासः संजनयेत् त्रासं नीलिका मृत्युकारिणी। मूल्यं शुद्धप्रबालस्य रूप्यद्विगुणमुच्यते। धारणेऽस्यापि नियमो जातिभेदेन पूर्ववत्"। तथा हि "विरूपजातिं विषमं विवर्णं खरप्रबालं प्रवहन्ति ये ये। ते मृत्युमेवात्मनि वै वहन्ति सत्यं वदत्येव कृती मुनीन्द्रः"। तस्य शुभाशुभलक्षणं राजनि० उक्तं यथा "शुद्धं दृढं घनं वृत्तं स्निग्धं गात्रसुरङ्गकम्। समं गुरु सिराहीनं प्रबालं धारयेत् शुभम्। गौरं रङ्गजलाक्रान्तं रक्तकृष्णं सकोटरम्। रूक्षकृष्णं लघु श्वेतं प्रबालमशुभं त्यजेत्"।

**प्रबालक** पु० यक्षभेदे भा०स० १०अ०।

**प्रबालफल** न०प्रबाल इव रक्तं फलमस्य। रक्तचन्दने भावप्र० तत्फलस्य प्रबालतुल्यरक्तत्वात् तथात्वम्।

**प्रबालाश्मन्तक** पु० प्रबाल इवाश्मन्तकः रक्तत्वात्। रक्ताश्मन्तकवृक्षे सुश्रुतः। [राजनि०।

**प्रबालिक** पु०प्रबालो नवपल्लवोऽस्त्यस्य भूम्ना ठन्। जीवशाके

**प्रबाहु** पु० प्रगतो बाहुम् अत्या०स०। बाहुमूले इ०सं०५८अ०।

**प्रबाहुक** अव्य० प्रकृष्टो बाहुरत्र कप् स्वरादि०। १समकाले २ऊर्द्ध्वार्थे च मनोरमा। पृषो०प्रबाहुक् प्रबाहुम् पाठान्तरम् तत्रार्थे अव्य० "प्रबाहुग् जुहोति" तैत्ति०२।६।१।

**प्रबुद्ध** त्रि०प्र+बुध–कर्त्तरि क्त। १प्रबोधयुते २पण्डिते ३प्रफुल्ले पुष्पादौ च हेमच०। ४जागरिते स्वापरहिते ५भागवतधर्मप्रधाने ऋषभदेवपुत्रभेदे पु० भाग०५।४।११

**प्रबोध** पु० प्र+बुध–भावाधारादौ घञ्। १निद्रापगमे तस्य प्रकृष्टज्ञानाधारत्वात् तथात्वम्। २यथार्थज्ञाने च।

**प्रबोधन** न० प्र+बुध–भावे ल्युट्। १यथार्थज्ञाने २निद्रा·

पगमे। प्र+बुध-णिच्-भावे ल्युट्। ३प्रकृष्टबोधने ४उद्दीपने ५पूर्वगन्धस्य न्यूनतायां पुनः सौगन्ध्योत्पादनाय व्यापारभेदे अमरः।

**प्रबोधनी** स्त्री प्रबोध्यते हरिरत्र प्र+बुध-णिच्-आधारे ल्युट् ङीप्। कार्त्तिकशुक्लैकादश्याम् तत्र शयितस्य हरेरुत्थापनानुकूलव्यापारस्याचरणात्तस्यास्तथात्वम्। अस्या नैकादशीशब्दे तस्याः खण्डभेदस्य माहाता दर्शिता। तन्माहात्म्यं च पद्मपु०उ०ख०१२६अ० उक्तं यथा "ब्रह्मोवाच प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम्। मुक्तिदं शुद्धबुद्धीनां शृणुष्व मुनिसत्तम!। तावद्गर्जन्ति तीर्थानि पुण्यान्यायतनानि च। यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके। अश्वमेधसहस्राणि वाजपेयशतानि च। एकेनैवोपवासेन प्रबोधन्यां भवन्ति हि। मेरुमन्दरतुल्यानि पापानि सुबहून्यपि। भस्मसात् कुरुते मर्त्यो हरिबोधन्युपासनात्। पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितम्। जागरणं प्रबोधन्यां दहते तूलराशिवत्। उपवासं प्रबोधन्यां यः करोति समाहितः। विधिवच्च मुनिश्रेष्ठ! यथोक्तं लभते फलम्। यानि कानि च तीर्थानि त्रैलोक्ये संवसन्ति वै। तानि तस्य गृहे सम्यक् कृता येन प्रबोधनी। किं तस्य बहुभिः पुण्यैः सुरलोकसुखप्रदैः। ऊर्जे सन्तोषिता येन संपूर्णा हरिबोधनी। बोधनीं समुपोष्यैव मुक्तिभागी भवेन्नरः। प्रबोधन्यां नरश्रेष्ठ! न पुनर्गर्भमाविशेत्। स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम्। नरैर्यत् क्रियते ऊर्जे प्रबोधन्यां तदक्षयम्। येऽर्चयन्ति नरास्तस्यां भक्त्या विष्णुं जगत्पतिम्। उषित्वा बोधनीं ते तु प्रभवेयुर्दिवौकसः। महाव्रतमिदं पुत्र! महापापौघनाशनम्। प्रबोधन्यां मुने! विष्णोर्विधिवत् समुपोषणम्। स ज्ञानी च स योगी च स तपस्वी जितेन्द्रियः। स्वर्गमोक्षौ च तस्यास्तां य उपास्ते प्रबोधनीम्। यत्तु जन्मकृतं पापं स्वल्पं वा यदि वा बहु। करोति भस्मसाद्विष्णुः प्रबोधन्यां प्रपूजितः। हरिपूजा विधातव्या कार्त्तिके बोधवासरे। गीतशास्त्रविनोदेन प्रबोधन्यान्तु जागरात्। चन्द्रसूर्य्योपरागे च यत् फलं परिकीर्त्तितम्। तस्मात् सहस्रगुणितं प्रबोधन्यां हि जागरात्। स्नानं दानं जपो होमः स्वाध्यायश्चार्चनं हरेः। एतस्मात् कोटिगुणितं प्रबोधन्यां हि जागरात्"। स्कान्दे "जन्मप्रभृति यत्पुण्यं नरेणोपार्जितं भुवि। वृथा भवति तत्सर्वं न कृत्वा बोधवासरम्"। "प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम्। मुक्तिदं हतबुद्धीनां शृणु त्वं मुनिसत्तम!। तावद्गर्जति विप्रेन्द्र! गङ्गाभागीरथी क्षितौ। यावन्नायाति पापघ्नी कार्त्तिके हरिबोधनी। तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च। यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके। वाजपेयसहस्राणि अश्वमेधशतानि च। एकेनैवोपवासेन प्रबोधन्यां लभेन्नरः। दुर्लभञ्चैव दुष्प्रापं त्रैलोक्ये सचराचरे। तदपि प्रार्थितं विप्र! ददाति हरिबोधनी। ऐश्वर्यं सन्ततिं प्रज्ञां राज्यञ्च सुखसम्पदः। ददात्युपोषिता विप्र! हेलया हरिबोधनी। मेरुमन्दरतुल्यानि पापान्यत्यूर्जितान्यपि। एकेनैवोपवासेन दहते हरिबोधनी। पृथिव्यां यानि दानानि दत्त्वा यत् फलमाप्नुते। एकेनैवोपवासेन ददाति हरिबोधनी" हरि०वि०।

**प्रभञ्जन** न० प्रभञ्जति तृणादीन् प्र+भन्ज-युच्। वायौ अमरः। [लतायां स्त्री राजनि०।

**प्रभद्र** पु० प्रकृष्टं भद्रमस्मात् ५ब०। १निम्बवृक्षे २प्रसारिण्यां

**प्रभद्रक** न० "भवति नजौ भजौ रसहितौ प्रभद्रकम्" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे।

**प्रभर्मन्** पु० भृ-भावे कर्त्तरि वा मनिन् प्रकृष्टं भर्म भरणं प्रकृष्टो भर्म्मा भर्त्ता ऋत्विक् वा यस्मिन्। १यज्ञे ऋ०८।८२।१ भाष्ये दृश्यम्। प्र+भृ-भावे मनिन्। २प्रकर्षेण भरणे सम्पादने न० ऋ० १।७६।७

**प्रभव** पु० प्रभवत्यस्मात् "भुवः प्रभवः" पा० भूकर्त्तुरपादाने वाच्ये अप्। १प्रथमप्रकाशस्थाने २अन्यतः सिद्धस्य प्रथमोपलम्भस्थाने हेमच० ३मूले ४मुनिभेदे ५जन्महेतौ। भावे अप्। ६जन्मनि। करणे अप्। ७पराक्रमे मेदि०। ८षष्टिवत्सरमध्ये वत्सरभेदे तत्फलमुक्तं ज्यो०त० भविष्यपु० "बहुतोयास्तथा मेघा बहुशस्या च मेदिनी। बहुक्षीरास्तथा गावो व्याधिरोगविवर्जिताः। प्रशान्ताः पार्थिवाश्चैव प्रभवे परिकीर्त्तिता"। ९विष्णौ पु० "संभवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः" विष्णुस०।

**प्रभवादि** पु० प्रभव आदिर्येषाम्। प्रभवप्रभृतिषष्टिसंवत्सरेषु स च गुरुमध्यभोगात् गणनीयः। "ज्योतिर्विद इज्यमध्यात् प्रभवादिश सम्भवम्। ऊचुस्तद्वत् समाद्यादि वर्षाणामपि सम्भवम्" ज्यो०त०। ते च ज्यो०त० फलसहिताः दर्शिता तच्छब्दे तद्वाक्यमुक्तं वक्ष्यते च तदानयनञ्च

ज्यो॰त॰“शकेन्द्रकालः पृथगाकृति २२ घ्नः शशाङ्कनन्दाश्वियुगैः ४२९१ समेतः। शराद्रिवस्विन्दु१८७५हृतः स लब्धः षष्ट्याविशिष्टाः प्रभवादयोऽब्दाः। वर्षवर्जन्तु यच्छेषं सूर्यैः१२ संपूर्य्य खोर्मिभिः६०”(भक्तम्)। प्रभवादिवर्षाण्युपक्रम्य “आद्या तु विंशतिर्ब्राह्मी द्वितीया वैष्णवी स्मृता। तृतीया रुद्रदैवत्या श्रेष्ठा मध्याधमा भवेत्”। ह॰सं॰८अ॰अन्यथोक्तं गुरुवर्षशब्दे २६२२पृष्ठादावुक्तम्।

**प्रभविष्णु** त्रि॰ प्र+भू—शीलार्थे इष्णुच्। १प्रभावशीले २विष्णौ पु॰ भा॰अनु॰ ७१अ॰।

**प्रभा** स्त्री प्र+भा-भावे अङ्। १दीप्तौ राजनि॰। प्र+भा-क। २प्रदीप्तियुते त्रि॰३कुवेरपूर्य्यां स्त्री हेमच॰। ४दुर्गायां स्त्री “प्रभा प्रभानशीलत्वात् ज्योत्स्ना चन्द्रार्कमालिनी”देवीपु॰ तन्नामनिरुक्तौ। ५सूर्य्यपत्नीभेदे “विवस्वान् कश्यपात् पूर्वमदित्यामभवत् पुरा। तस्य पत्नीत्रयं तद्वत् संज्ञा राज्ञी प्रभा तथा। रैवतस्य सुता राज्ञी रैवन्तं सुषुवे सुतम्। प्रभा प्रभावं सुषुवे त्वाष्ट्री संज्ञा तथा मनुम्” मत्स्यपु॰ ११अ॰। ६स्वर्भानोः कन्याभेदे नहुषमातरि हरिवं॰ ३अ॰। ७अप्सरोभेदे भा॰अनु॰ १४२५ श्लो॰ ८गोपीभेदे “दृष्टस्त्वं प्रभया गोप्या युक्तो वृन्दावने वने। प्रभा देहं परित्यज्य जगाम सूर्य्यमण्डलम्” ब्रह्मवै॰प्र॰ ख॰ ९अ॰।

**प्रभाकर** पु॰ प्रभां करोति कृ-ट। १सूर्य्ये २वह्नौ ३चन्द्रे ४समुद्रे च शब्दर॰। ५अर्कवृक्षे अमरः। ६मीमांसकभेदे स च गुरुत्वेन प्रसिद्धः। अत्रिवंश्ये ७मुनिभेदे हरिवं॰ ३१अ॰। ८कुशद्वीपस्थे वर्षभेदे भा॰भी॰ १२अ॰। अष्टममन्वन्तरे ९देवगणभेदे मार्क॰पु॰ ८०अ॰।

**प्रभाकीट** पु॰ प्रभान्वितः कीटः शा॰त॰। खद्योते राजनि॰।

**प्रभाञ्जन** पु॰ शोभाञ्जने त्रिका॰।

**प्रभात** न॰प्र+भा--भावे क्त प्रकृष्टं भातमत्र वा। १प्रातःकाले अमरः। प्र+भा कर्त्तरि क्त। २प्रभायुक्ते त्रि॰ ३वसुभेदे पु॰। प्रभास इत्यत्र प्रभात इति मिता॰ पाठः। धरशब्दे २८४७पृ॰दृश्यम्। प्रभातकाले दृश्या उक्ता राजवल्लभेन “वैद्यः पुरोहितो मन्त्री दैवज्ञोऽथ चतुर्थकः। प्रभातकाले द्रष्टव्यो नित्यं स्वश्रियमिच्छता” छन्दोगपरि॰ तत्र दृश्यादृश्यानाह यथा “श्रोत्रियं सुभगामग्निं गाश्चैवाग्निचितन्तथा। प्रातरुत्थाय यः पश्येदापद्भ्यः स विमुच्यते। पापिष्ठं दुर्भगां मद्यं नग्नमुत्कृत्तनासिकम्। प्रातरुत्थाय यः पश्येत्तत् कलेरुपलक्षणम्”। प्रभातकाले स्मरणीयाः काशीखण्डे ३५अ॰ दर्शिता यथा “स्वहितं चिन्तयेत् प्राज्ञस्तस्मिंश्चोत्थाय सर्वदा। गजास्यं संस्मरेदादौ तत ईशं सहाम्बया। श्रीकान्तं श्रीसमेतं तु ब्रह्माणत्या कमलोद्भवम्। इन्द्रादीन् सकलान्देवान् वशिष्ठादीन् मुनीनपि। गङ्गाद्याः सरितः सर्वाः श्रीशैलाद्याखिलान् गिरीन्। क्षीरोदादीन् समुद्रांश्च मानसादिसरांसि च। वनानि नन्दनादीनि धेनूः कामदुघादिकाः। कल्पवृक्षादिवृक्षांश्च धातून् काञ्चनमुख्यतः। दिव्यस्त्रीरुर्वशीमुख्या गरुड़ादीन् पतत्त्रिणः। नागांश्च शेषप्रमुखान् गजानैरावतादिकान्। अश्वानुच्चैःश्रवोमुख्यान् कौस्तुभादीन् मणीन् शुभान्। अरुन्धतीमुख्याः पतिव्रतवतीर्वधूः। नैमिषादीन्यरण्यानि पुरीः काशीपुरीमुखाः। विश्वेशादीनि लिङ्गानि वेदान्टक्प्रमुखानपि। गायत्रीप्रमुखान् मन्त्रान् योगिनः सनकादिकान्। प्रणवादिमहाबीजं नारदादींश्च वैष्णवान्। शिवभक्तांश्च वाणादीन् प्रह्लादादीन् दृढ़व्रतान्। वदान्यांश्च दधीच्यादीन् हरिश्चन्द्रादिभूपतीन्। जननीचरणौ स्मृत्वा सर्वतीर्थोत्तमोत्तमौ। पितरं च गुरुञ्चापि हृदि ध्यात्वा प्रसन्नधीः। ततश्चावश्यकं कर्तुं नैर्ऋतं दिशमाश्रयेत्”। “प्रभातायां तु शर्वर्य्याम्” भार॰नानास्थाने।

**प्रभातीर्थ** तीर्थभेदे शिवपु॰।

**प्रभातोर** पु॰ नागभेदे भा॰आ॰ ३५अ॰।

**प्रभाव** पु॰ प्र+भू—घञ्। राज्ञां कोषदण्डजाते १तेजसि अमरः २तेजसि ३सामर्थ्ये हेमच॰ ४विक्रमे ५शान्तौ ६उद्भवे च मेदि॰। ७स्वारोचिषमनोः पुत्रभेदे मार्क॰पु॰ ६६अ॰। ८वसुभेदे प्रभास इत्यत्र पाठान्तरम् ९प्रभागर्भजाते सूर्य्यपुत्रभेदे प्रभाशब्दे दृश्यम्।

**प्रभावज** न॰ प्रभावात् जायते जन—ड। प्रभुशक्तिभेदे कोषदण्डाख्यां साध्ये तेजसि।

**प्रभावत्** त्रि॰प्रभा+अस्त्यर्थे मतुप् मस्य वः। १दीप्तियुक्ते स्त्रियां ङीप्। सा च वज्रनाभासुरस्य २कन्याभेदे। प्रद्युम्नेन तस्याहरणकथा च हरिवं॰ १५२अध्यायादौ दृश्या। ३तापसीभेदे भा॰व॰२८४अ॰। ४कुमारानुचरमातृभेदे भा॰श॰ ४७अ॰। ५अङ्गेश्वरस्य चित्तरथस्य भार्य्यायाम् भा॰अनु॰ ४२अ॰। ६मरुत्तनृपस्य पत्न्यां विदर्भराजदुहितरि मार्क॰ १२२ अ॰। ७अग्निनामकोनविंशत्तत्वाहेन्मातरि ८गणानां वीणायाश्च स्त्री हेमच॰। ९त्रयोदशाक्षरपादके छन्दोभेदे “यस्यां प्रिये प्रथमकमक्षरद्वयं तुर्य्यन्तथा गुरु-

चरमं दशान्तिमम्। सान्त्यं भवेद्यतिरपि चेद्युगषड्भिः सा ललिताङ्गतरुचिरे! प्रभावती” इति श्रुतबोधः।

**प्रभाष** पु० प्र+भाष–अच्। १अष्टवसुमध्ये वसुभेदे २प्रकृष्टकथके त्रि० जटा०। धरशब्दे ३८१७पृ० दृश्यम्। तत्र षान्तत्वेन पाठः जटाधरसम्मतः।

**प्रभास** त्रि०प्रभासते प्र+भास–अच्। १प्रकृष्टदीप्तियुते २जैनगणाधिपभेदे पु० हेमच०। ३कुमारानुचरगणभेदे पु०भा० श०४६अ०। ४ऋषिभेदे पु० भा०शा० १६६अ०। ५वसुभेदे पु० हरिवं० ३अ० सान्ततया पाठः। अष्टममन्वन्तरे ६देवगणभेदे पु० मार्कं०पु०८०अ०। ७सोमतीर्थभेदे त्रिका० “पुण्यं प्रभासं समुपाजगाम यत्रोडुराट् यक्ष्मणा क्लिश्यमानः” इत्युपक्रमे एवं तु तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य तु सः प्रभासः” इत्यादिना तत्तीर्थोत्पत्तिमाहात्म्यादिकथा भा०श०३६अ० आदौ दृश्या।

**प्रभासन्त** पु० प्र+भास–बा० झ। १परमेश्वरे २रुद्रे च हरिवं० १३१अ०। [त्वात् चरन्मदे २गजे पु० अमरः।

**प्रभिन्न** त्रि० प्र+भिद्-क्त। १प्रकृष्टभेदयुक्ते प्रभिन्नकटादिस्थल-

**प्रभु** त्रि०प्र+भू–डु। १स्वामिनि २कार्य्यसम्पादशक्तियुते “निग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते” इत्युक्ते ३निग्रहानुग्रहसमर्थे ४विष्णौ पु० “प्रभवः प्रभुरीश्वरः” विष्णुसं० “कामः कामप्रदः प्रभुः” तत्रैव नामान्तरं तत्र प्रकर्षेण भवनात् प्रभुरिततिति भाषप्रोक्तेः “सर्वासु क्रियासु सामर्थ्यातिशयात् प्रभुः” भाष्योक्तेश्च व्युत्पत्तिभेदात् नामद्वयम्। ५अष्टमन्वन्तरे देवगणभेदे मार्कं०पु० ८०अ०।

**प्रभुत्वाक्षेप** पु० अर्थालङ्कारभेदे “धनञ्च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि। न च मे प्राणसन्देहस्तथापि प्रिय! मा स्म गाः। इत्याचक्षाणया हेतून् प्रिययात्रानुबन्धिनः। प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप उच्यते”। “हे प्रिय! ते विदेशगमने इति अध्याहार्य्यं बहुधनं सुखञ्च तथा वर्त्मनि पथि क्षेमं कुशलञ्च लभ्यम्। अत्र च मे प्राणसन्देहः न तव शीघ्रप्रत्यागमनस्य बहुधनलाभस्य च सम्भवादिति भावः। तथापि मास्म गाः मा गच्छ अत्र प्रिययात्रायाः प्रियस्य विदेशगमनस्य अनुबन्धिनः पोषकान् हेतून् आचक्षाणया कीर्त्तयन्त्या कयाचित् स्वाधीनपतिकयेति शेषः प्रभुत्वेन स्वाधीनतया एव पतिः रुद्धः विदेशगमनात् निवर्त्तितः तस्मात् एषः प्रभुत्वाक्षेप उच्यते” प्रेम० टीका।

**प्रभुभक्त** त्रि० ७तत्। १स्वाम्यनुरक्ते। “बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः। प्रभुभक्तश्च शूरश्च ज्ञातव्याः षड्गुणाः शुनः” चाणक्यः। कुलीने उत्तमे २घोटके पु० शब्दच०।

**प्रभूत** त्रि० प्र+भू-क्त। १प्रचुरे अमरः २उद्गते मेदि० ३भूते ४उन्नते च शब्दर०। ततः गोषदा०अस्त्यर्थे वुन्। प्रभूतक प्रचुरवत्रादियुक्ते त्रि०प्रभूतमाह “आहौ प्रभूतमादिभ्यः” वार्त्ति० ठक्। प्राभूतिक प्रचुरवक्तरि त्रि०। द्वितीयान्तात् प्रभूतशब्दात् आहौ परे धातुनिर्देशे इक् ठक्। एवम् आदिपदात् पर्य्याप्तमाह पार्य्याप्तिक तद्वक्तरि त्रि०।

**प्रभूति** स्त्री प्र+भू–भावे क्तिन् नित्तकारादिप्रत्यये परे प्रस्य गतेः प्रकृतिस्वरः। प्रकर्षेण भवने।

**प्रभ्वन्** त्रि० प्र+भू–क्वनिप्। सामर्थ्ययुते स्त्रियां ङीप् “वनोर च” पा० नस्य रः। प्रभ्वरी यजु०२१।२१

**प्रभूष्णु** त्रि० प्र+भू–ग्स्नु। १प्रभावशीले २क्षमे समर्थे

**प्रभृति** अव्य० प्र+भृ-क्तिच्। तदारभ्येत्यर्थे। बहु०समासे उत्तरपदस्थः। तदादिके त्रि० अमरः।

**प्रभृथ** त्रि० प्र+भृ–बा० थक्। प्रकृष्टभरणे ऋ०१।१५२।१२

**प्रभेद** पु० प्रभिद्यतेऽनेन प्र+भिद्–घञ्। १प्रकारे विशेषे। भावे घञ्। २भेदे अमरः।

**प्रभेश्वर** पु० तीर्थभेदे शिवपु०।

**प्रभ्रंशथु** पु० “प्रभ्रश्यते नासिकयैव यत्र सान्द्रो विदग्धो लवणः कफस्तु। प्राक्सञ्चितो मूर्ध्नि च पित्ततप्तं प्रभ्रंशथुं व्याधिमुदाहरन्ति” सुश्रुतोक्ते नासागतरोगभेदे।

**प्रभ्रष्ट** त्रि० प्र+भ्रन्श–क्त। भ्रंशयुक्ते संज्ञायां कन्। शिखावलम्बिमाल्ये चूडातोलम्बमानमाल्ये अमरः।

**प्रमगन्द** पु० ईशुण्यादिलक्षणवृद्धियुतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषामर्थं ददातीति प्रगन्दो वार्द्धुषिकः निरु० प्रगतो मगन्दं कारणतया अत्या०स०। वार्द्धुषिकपुत्रे ऋ० ३।५३।१४ भा०।

**प्रमण(न)स्** त्रि० प्रकृष्टं मनोऽस्य संज्ञात्वे णत्वम् अन्यत्र णत्वम्। १हर्षयुते अमरः। २सुमनस्के च।

**प्रमति** पु० प्रतीचीश्वरसुनयन्नृपस्य पुरोहिते कश्यपवंश्ये १ऋषिभेदे मार्कं०पु०११८अ०। २च्यवनर्षेः पुत्रभेदे भा०आ० ५अ०। गृत्समदर्षिवंश्ये वागिन्द्रर्षेः ३पुत्रे ऋषिभेदे भा०अनु०३०अ०। न्टगस्य पुत्रे ४नृपभेदे। तद्वंश्ये वत्सप्रीतेः ५पुत्रे नृपभेदे माग० ८।२।१६। ६प्रकृष्टमतियुक्ते त्रि०।

**प्रमत्त** त्रि० प्र+मद्–क्त। १अनवधानतायुक्ते प्रमादयुक्ते कर्त्तव्येऽकर्त्तव्यताज्ञानेन अकर्त्तव्ये वा कर्त्तव्यताधिया तत्रावधानशून्ये “मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं

चारविभ्रंशाद् भ्रमः४ स परिकीर्त्तितः। आवर्त्त इव तोयस्य ज्ञानावर्त्तो यदाकुलः। नाशयेच्चित्तमावर्त्त५ उपसर्गः स उच्यते। एतैर्नाशितयोगास्तु सकला देवयोनयः। उपसर्गैर्महाघोरैरावर्त्तन्ते पुनःपुनः"।

**प्रातिभाव्य** न॰ प्रतिभुवो भावः ष्यञ् द्विपदवृद्धिः। (जामिनि) १प्रतिभूभावे प्रतिभूत्वेन देये २धने च मनुः ८।१५। ५८ दर्शनप्रतिभूशब्दे २४७५ पृ॰ दृश्यम्।

**प्रातिभासिक** त्रि॰ प्रतिभासादागतः ठक्। प्रतिभासाधीन सत्त्ववति मिथ्यारजतादौ वेदान्तमते हि सत्त्वं त्रिविधं पारमार्थिकं व्यवहारिकं प्रातिभासिकं च तत्र ब्रह्मणः सत्त्वं पारमार्थिकं त्रिकालाबाध्यत्वात्, घटादीनां सत्त्वं व्यवहारिकं व्यवहारकालेऽबाध्यत्वात्, शुक्तौ रजतादेः सत्त्वं प्रातिभासिकम् अधिष्ठानज्ञानबाध्यत्वात् प्रतिभासकालमात्रसत्त्वाच्चेति वेदान्तपरिभाषायां स्थितम्।

**प्रातिशाख्य** त्रि॰ प्रतिशाखं भवः परिमुखा॰ ञ्य। प्रतिशाखं भवे व्याकरणभेदे न॰।

**प्रातिश्रुत्क** पु॰ प्रतिश्रुति तत्समये भवः ठञ्। प्रतिश्रवणवेलायां भवे पुरुषे "यत्र वायं श्रौत्रः प्रातिश्रुत्कः पुरुषः" वृ॰ उ॰। [२प्रतिव्यक्तिभवे च।

**प्रातिस्विक** त्रि॰प्रतिस्वं भवः ठक्। १असाधारणधर्मे त्रिका॰।

**प्रातिहर्त्त** न॰ प्रतिहर्त्तुर्भावः कर्म वा उद्गात्रा॰ अञ्। प्रतिहर्त्तृरूपस्य ऋत्विग्भेदस्य कर्मणि १प्रतिहरणे २तद्भावे च।

**प्रातिहारक** पु॰ प्रतिहारक एव स्वार्थे अण्। प्रतिहारकशब्दार्थे अमरः। [कारके अमरः।

**प्रातिहारिक** त्रि॰ प्रतिहारः प्रयोजनमस्य ठक्। मायाः

**प्रातीतिक** त्रि॰प्रतीत्या निर्वृत्तः ठञ्। प्रातिभासिके पदार्थे

**प्रातीप** प्रतीपस्यायम् अण्। प्रतीपनृपस्यापत्ये शान्तनौ नृपे त्रिका॰। [कुलाचारिणि।

**प्रातीपिक** त्रि॰ प्रतीपं वर्त्तते ठञ्। प्रतीपं वर्त्तमाने प्रति-

**प्रातृद्** पु॰ ऋषिभेदे शत॰ब्रा॰ १४,८।१३।२

**प्रात्ययिक** त्रि॰ प्रत्ययाय स्थितः ठक्। प्रतिभूभेदे "दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा" याज्ञ॰। दर्शनप्रतिभूशब्दे २४७८ पृ॰दृश्यम्।

**प्राथमकल्पिक** त्रि॰ प्रथमकल्पे भवः ठक्। १प्रथमारम्भोचिते वेदाध्ययनादौ। प्रथमं कल्पमधीते कल्पान्तत्वात् ठक्। २प्रथमकल्परूपविद्याप्रथमाध्यायिनि अमरः।

**प्राथमिक** त्रि॰ प्रथमे भवः ठञ्। १प्रथमभवे स्त्रियां ङीप्। प्रथममधीते प्रथम+ठक्। वेदादेः २प्रथमाध्येतरि च।

**प्रादि** पु॰ उपसर्गसंज्ञार्थं पा॰उक्ते शब्दभेदे स च गणः पा॰ग॰उक्तो यथा "प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत्(द्) अभि प्रति परि उप" एते प्रादयः। निस् दुस् सान्तौ "निसस्तपतावनासेवने इति (८।३।१२०) सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य चाप्रत्ययस्य" विसर्जनीयः" इति भाष्योक्तेश्च। निरः कुषः इति (७।२।४६) "तुदुरोरधिकरणे" इति च निर्देशात् रान्तावपि मनो॰। उदिति दान्तोऽपि "उदोऽनूर्ध्वकर्मणि चेष्टायामिति"। "उपसर्गाः क्रियायोगे" पा॰ "गतिश्च" पा॰ प्रादयः क्रियायोगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः" सि॰कौ॰।

**प्रादुराक्षि** पु॰ गोत्रप्रवरर्षिभेदे प्रवराध्यायः।

**प्रादुर्भाव** पु॰ प्रादुस्+भू—भावे घञ्। आविर्भावे प्रथमप्रकाशे

**प्रादुस्** अव्य॰ प्र+अद—उसि। प्राकाश्ये उणा॰ अस्य क्रियायोगे गतिसंज्ञा प्रादुष्कृत्य प्रादुर्भूय। स्वार्थे यत् न टि॰लोपः प्रादुष्य प्रादुर्भावे न॰ उज्ज्वलदत्तः।

**प्रादेश** पु॰ प्र+दिश-घञ् दीर्घः। १तर्जनीसहितवितताङ्गुष्ठे अमरः २देशमात्रे मेदि॰ "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्ते ३परिमाणभेदे च देवीपु॰।

**प्रादेशन** न॰ प्र+आ+दिश—ल्युट्। दाने अमरः।

**प्रादेशिक** त्रि॰ प्रदेशे भवः ठक्। प्रदेशभवे [स्त्रियां ङीप्।

**प्रादोष(षि)क** त्रि॰ प्रदोषे भवः वा अण्ठञौ। प्रदोषभवे

**प्रादोहनि** पु॰स्त्री प्रदोहनस्यापत्यम् इञ्। तदपत्ये। ततः यूनि फक् तौल्व॰ तस्य न लुक्। प्रादोहनायनि तदीये यून्यपत्ये पुंस्त्री॰। [करणे भाग॰३,८।२१।

**प्राधनिक** त्रि॰ प्रधनं संग्रामः प्रयोजनमस्य ठक्। युद्धोप-

**प्राधा** स्त्री प्रधैव स्वार्थे ण। दक्षकन्याभेदे काश्यपकलत्रभेदे हरिवं॰२२६अ॰। तस्याः अपत्यं ढक्। प्राधेय तदपत्ये पुंस्त्री॰ तदपत्यानि च देवगन्धर्वादयः भा॰आ॰६५ अ॰। अग्निपुराणे प्राधेया इत्येव पाठः शब्दकल्पद्रुमे प्रापेय शब्दकल्पनं लिपिकरप्रमादकृतपाठदर्शनात् इति बोध्यम्।

**प्राधानिक** त्रि॰ प्रधान+स्वार्थे ठक् तस्येदं ठक् वा। १प्रधानशब्दार्थे २प्रधानसम्बन्धिनि च "प्राधानिकरहस्यञ्च" इत्यादि देवीमाहात्म्यव्याख्यायां गुप्तवत्यां स्थितम्।

**प्राधान्य** न॰ प्रधानस्य भावः ष्यञ्। श्रेष्ठत्वे। भावे त्वप्रधानत्व न॰ तल् प्रधानता स्त्री तत्रार्थे। "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता" शाब्दिककारिका।

**प्राध्व** त्रि० प्रकृष्टोऽध्वा अच्समा० । १दूरपथे २प्रह्वे नम्रे ३बद्धे च हेमच० व०म्री० । ४बहुदूरगामिनि रथादौ च ।

**प्राध्वम्** अव्य० प्र+आ+ध्वन–डमि । १आनुकूल्ये २बन्धने ३नम्रतायाञ्च अमरः ।

**प्रान्त** पु० प्रकृष्टोऽन्तः । १शेषसीमायाम् हेमच० । २ऋषिभेदे पु० । ततः गोत्रापत्ये कण्वा० फञ् । प्रान्तायन तदपत्ये पुंस्त्री० । [शब्दार्थचि० ।

**प्रान्तदुर्ग** न० प्रान्ते दुर्गं नृपाश्रयस्थानभेदः । दुर्गभेदे

**प्रान्तर** न० प्रकृष्टमन्तरं व्यवधानं यत्र । १दूरगम्ये पथि । २वृक्षादिच्छायाशून्ये पथि ३वने ४कोटरे च मेदि० ।

**प्रान्तशून्य** पु० प्रान्ते शून्यमस्य । छायादिरहिते पथि शब्दर०

**प्रापणिक** पु० प्र+आ+पण–"प्राङ्कि पणिवसः" उणा० किकन् । पण्यविक्रेतरि उज्ज्वलद० ।

**प्राप्त** त्रि० प्र+आप–कर्मणि कर्त्तरि वा क्त । १लब्धे २आसादिते ३भूते अमरः । ४उपस्थिते च ।

**प्राप्तकाल** पु० प्राप्तः कालोऽस्य । करणयोग्ये काले २।२। १३३ पा० सूत्रे दृश्यम् ।

**प्राप्तपञ्चत्व** त्रि० प्राप्तं पञ्चत्वं मरणं येन । मृते अमरः । मरणे देहस्य पञ्चभूतात्मकताप्राप्तेस्तस्य तथात्वम् । प्रेतशब्दे दृश्यम् । [इषादौ शब्दरत्ना० ।

**प्राप्तभार** पु० प्राप्तः भारः तद्वहनकालोऽस्य । भारसह०

**प्राप्तरूप** त्रि० प्राप्तं रूपं येन । १मनोहरे २पण्डिते अमरः । ३रूपवति च ।

**प्राप्ति** स्त्री प्र+आप–भावे क्तिन् । १उदये २धनादिवृद्धौ ३लाभे च अमरः । ४प्रापणे ५संहतौ शब्दरत्ना० अणिमाद्यष्टविधैश्वर्यमध्ये ६ऐश्वर्यभेदे ऐश्वर्यशब्दे दृश्यम् । बार्हद्रथजरासन्धस्यन्यपत्नुताभेदे ७कंसकलत्रभेदे भा०स० १४अ० ; हरिवं० ८१अ० "अप्राप्तस्यैव या प्राप्तिः सैव संयोग उच्यते" भाषा० उक्ते ८संयोगस्वरूपे द्रव्यगुणभेदे च । सा०द०उक्ते ९सुखाङ्गभेदे "युक्तिः प्राप्तिः समाधानमिति" सुखाङ्गान्युद्दिश्य "संप्रधारणा चार्थानां युक्तिः, प्राप्तिः सुखागमः" लक्षिता । कामस्य भार्याभेदे भा० आ० ६६अ० । नील०ता० उक्ते १०सहमभेदे ।

**प्राप्तिसम** न० गौ०उक्ते जात्युत्तरभेदे "प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या विशिष्टत्वात् प्राप्तिसमः" सू० । "हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ? । न तावत् प्राप्य । प्राप्त्याऽविशिष्टत्वादसाधकः द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ? । अप्राप्यसाधकं न भवति । नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः" वात्स्या० "प्राप्त्या विशेषाद्विनिष्ट्यादनेन प्रत्यवस्थानम्" गौ०वृ० ५।७ यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते । किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न ? उभयोरविशेषादिति" ।

**प्राप्त्याशा** स्त्री ६त० । १लाभेच्छायाम् २प्रारब्धकार्यस्यावस्थाभेदे "अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः । आरम्भो यत्न प्रत्याशा नियताप्ति फलागमा" इत्युद्दिश्य "उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवा" इति सा०द० लक्षिता ।

**प्राप्य** त्रि० प्र+आप–ण्यत् । १गम्ये २लभ्ये च ३व्याकरणोक्ते "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिह कथ्यते" इत्युक्ते ४कर्मभेदे कर्मन्शब्दे १७३०पृ० दृश्यम् । प्र+आप–ल्यप् । लब्ध्वेत्यर्थे अव्य० ।

**प्राप्यकारिन्** त्रि० प्राप्य विषयदेशं गत्वा करोति विषयप्रकाशम् कृ–णिनि । विषयदेशं गत्वा विषयप्रकाशकारके चक्षुरादौ इन्द्रिये । तत्र न्यायमते चक्षुष एव प्राप्यकारिता नान्यस्य । वेदान्तमते श्रवणस्यापीति भेदः ।

**प्राबोधिक** पु० प्रबोधाय हितं ठक् । १उषःकाले शब्दमा० प्रबोधः प्रबोधनं तत्र नियुक्तः तत्प्रयोजनमस्य वा ठञ् । २मागधे प्रातःस्तुतिपाठकभेदे ।

**प्राभञ्जन** न० प्रभञ्जनो देवताऽस्य अण् । स्वातिनक्षत्रे तस्य तद्देवताकत्वात् तथात्वम् । तस्यापत्यम् इञ् । प्राभञ्जनि हनूमति "आयूंषि त्वचु निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टिः ।

**प्राभव** न० प्रभोर्भावः अण् । १प्रभुत्वे २श्रेष्ठत्वे च ।

**प्राभवत्य** न० प्रभवतो भावः ष्यञ् । विभुत्वे मनुः ८।४१२

**प्राभाकर** न० प्रभाकरस्य इदम् तन्मतं वेत्ति वा अण् । १मीमांसकभेदप्रभाकरसम्बन्धिनि २तन्मतज्ञे च ।

**प्राभृत** न० प्र+आ+भृ–कर्मणि क्त । उपढौकनद्रव्ये अमरः । स्वार्थे क । २प्राभृतक तत्रार्थे हारा० ।

**प्रामधि** पु० पौलस्त्ये सप्तर्षिमध्ये ऋषिभेदे हरिवं० ७अ० ।

**प्रामाणिक** त्रि० प्रमाणेन निर्वृत्तः सिद्धः ठञ् । १प्रत्यक्षादिप्रमाणसिद्धे २शास्त्रसिद्धे च स्त्रियां ङीप् । ३हैतुके ४मर्य्यादासिद्धे ५शास्त्रज्ञे ६परिच्छेदके ७प्रमाणकर्त्तरि च ।

**प्रामाण्य** न० प्रमाणस्य भावः । तद्वति तत्प्रकारकत्वरूपे

ज्ञानधर्मभेदे तच्च न्यायमते परतोग्राह्यं मीमांसकादिमते स्वतः, स्वसामग्र्या वा ग्राह्यमिति भेदः। प्रमात्वशब्दे दृश्यम्। [इच्चे शब्दच०। भावे ष्यञ्। २प्रमादे न०।

प्रामाद्य पु० प्रमाद्यत्यनेन प्र+मद बा० करणे ण्यत्। १वासक-लिका०पाठान्तरम्।

प्रामीत्य न० प्र+मी–भावे क्तिन् तत्र साधु ष्यञ्। १ऋणे प्रमीतस्य भावः ष्यञ्। २मरणे न०।

प्राय पु० प्र+अय–इण्–वा घञ्–अच् वा। १मृत्यौ २अनशनमृत्यौ ३बाहुल्ये च मेदि० "प्रायेण सामग्र्यविधौ गुणानाम्" कुमारः। ततः प्रकर्षादि० सर्वविभक्त्यपवादस्तृतीया प्रायेण गार्ग्यः सि०कौ०।

प्रायण न० प्र+अय–भावे ल्युट्। १देहत्यागेन स्थानान्तरगमने मनुः ८।२२२ श्लो० उदा०। २प्रारम्भे च "हैषा त्रिवृत्प्रायणा" ताण्ड्य०ब्रा० २।१५।२ "त्रिवृत् स्तोमस्त्रकः प्रायणे प्रारम्भे यस्याः" भा०।

प्रायणीय त्रि० प्रायणं आरम्भदिनं तत्र विहितः छ। १प्रारम्भदिने २गवामयनप्रथमाहादौ च विहिते अतिरात्रे यागभेदे च "प्रायणीयेऽद्य तुल्यानेके" कात्या० श्रौ० १२।६।२६ 'प्रायणीयोऽतिरात्र एवाह साध्यः'' देवनाथः। ताण्ड्य० ब्रा०४।२।१।२ भाष्ये द्वितीयाहस्यैव प्रायणीयसंज्ञा तन्निरुक्तिश्च दर्शिता यथा "प्रायणीयमेतदहर्भवति" मू०। "एतद्वक्ष्यमाणमहः प्रायणीयं प्रकर्षेण यान्ति गच्छन्ति स्वर्गमनेनेति व्युत्पत्तेः। एतत्संज्ञं गवामयनस्य द्वितीयमहरनुष्ठेयं भवति। यद्यपि श्रुत्यन्तरे प्रथमविहितस्यातिरात्रस्यैव प्रायणीय इति संज्ञा प्रसिद्धा तथापि प्रथमोत्तमयोरतिरात्रयोः सर्वत्र साधारणत्वादस्यैवाह्नो गवामयने असाधारणं प्रायण्यमिति कृत्वा एतदादिकं गवायनस्वरूपमित्यस्मिन् द्वितीयेऽहनि प्रायणीयशब्दोऽत्र प्रयुज्यते। उक्तमहर्नामनिर्वचनद्वारा प्रशंसति" भा० "प्रायणीयेन वा अग्रे देवाः स्वर्गं लोकं प्रायन् यत् प्रायंस्तत् प्रायणीयस्य प्रायणीयत्वम्" मू० "पुरा देवाः प्रायणीयेन प्रायणीयाख्येन खल्वग्रे स्वर्गं लोकं प्रायन् प्राप्ताः यद्यस्मात् प्रायन् स्वर्गं प्रागमन् तस्मादस्याह्नः प्रायणीयत्वं प्रायणीयसाधारणत्वात् प्रायणीयमिति नाम सम्पन्नम्" भा०। तदहः कर्त्तव्यत्वादतिरात्रस्य प्रायणीयसंज्ञेति बोध्यम्।

प्रायश्चित्त न० पापक्षयमात्रसाधनत्वेन विधिबोधिते कर्मभेदे यथोक्तं प्रा०वि०

तत्राङ्गिराः "प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्।' निश्चयसंयुक्तं पापक्षयसाधनत्वेन निश्चितमित्यर्थः। तथा हारीतः "प्रयतत्वाद्वोपचितमशुभं नाशयतीति प्रायश्चित्तम्"। एतेन पापक्षयमात्रसाधनं कर्म प्रायश्चित्तमिति तल्लक्षणम्। मात्रशब्दात् तुलापुरुषाश्वमेधादिव्यावृत्तिः। तत्र पापविशेषस्यैव कामाकामकृतस्य शक्तिविशेषस्य ततो नाशः मतभेदेन अव्यवहार्य्यशब्दे ४७०,७१दर्शितः। "प्रायश्चित्तैरपैत्येनो यदज्ञानं कृतं भवेत्। कामतो व्यवहार्य्यस्तु वचनादिह जायते" याज्ञ० वचनस्य प्रा०वि० व्याख्यानं मतभेदेन दर्शितं यथा

"कामत इति अज्ञानकृतपापप्रायश्चित्तेन कामकृतपापापगमो न भवति। किन्तु व्यवहार्य्यतामात्रम्। ननु सति पापे कथं व्यवहार्य्यतामात्रम् अत आह वचनादिति। अयमभिप्रायः यद्यपि प्रायश्चित्तानुष्ठानेनार्द्धपापक्षयात् सम्भाषणस्पर्शनदर्शनादिलघुव्यवहारो न दुष्टः न तु भोजनपरिणयनव्यवहारोऽपि वचनादेव यथा कुनखित्वादिसूचितमहापापशेषसद्भावे व्यवहार्य्यतेति। अथ वा अकारप्रश्लेषादुयथोक्तेन प्रायश्चित्तेन कामतोऽपि पापक्षयो भवत्येव किन्त्वव्यवहार्य्यः पापाभावेऽपि वचनात्। अत एव मनुः "बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्"। याज्ञवल्क्यः "शरणागतबालस्त्रीहिंसकान् संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्।" कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्" इति मनुवचनं त्वज्ञानकृतमहापापे बोद्धव्यमिति। भवदेवस्तु सर्वत्र "अतः शुद्धिमवाप्नुयादिति" दर्शनादव्यवहार्य्यतावचनं निन्दार्थमित्याह। विज्ञानस्तु पापकर्मणा हि द्वयं जन्यते शरीरगतमशुचित्वमात्मगतञ्च पापं तत्र अशौचादौ वैदिककर्मणि चानर्हत्वलक्षणं तेनात्र कामनाकृते केवलशरीरदोषः प्रायश्चित्तेनापनीयते जन्मान्तरकृतदुरितस्येवात्मनः शरीरान्तरस्य व्यवहाराधिकारित्वम् आत्मगतञ्च पापं भोगादेव क्षीयते" तच्च कामकारकृतेऽप्याङ्गिरेके श्रुतिनिदर्शनात् इति मनुवचनादुक्तश्रुतिविरोधाच्च"। मिताक्षरामतन्तु अव्यवहार्य्यशब्दे दर्शितम्।

प्रायश्चित्तस्य काम्यत्वं नैमित्तिकत्वं नित्यत्वञ्च यथाह जाबालः "काम्यानां सफलार्थञ्च दोषघातार्थमेव च। अतः काम्यं नैमित्तिकञ्च प्रायश्चित्तमिति स्थितिः। चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैश्च लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः"। ज्ञानाज्ञानकृत-

पापयोः प्रायश्चित्तभेदो यथा अङ्गिराः "अकामतः कृते पापे प्रायश्चित्तं, न कामतः। स्यात्त्वकामकृते यत्तु द्विगुणं बुद्धिपूर्वके"। प्रायश्चित्ताकथने दोषो यथा "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः। अनर्चितैरनाहूतैरपृष्टैश्चैव संसदि। प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः। न्यायतो मार्गमाणस्य चत्रियादेः प्रयाचिनः। अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्" हारीतः "यथावयो यथाकालं यथाप्राणञ्च ब्राह्मणे। प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः। तस्मात् कृच्छ्रमथार्द्धं पादं वापि (पादमेव नातो न्यूनम्)विधानतः। ज्ञात्वा बलाबलं कालं प्रायश्चित्तं प्रकल्पयेत्। अशक्तावनुग्रहमाह पराशरः। "दुर्बलेऽनुग्रहः कार्य्यस्तथा वै शिशुवृद्धयोः। अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहो भवेत्"। स्नेहादिनानुग्रहे दोषो यथा "स्नेहाद्वा यदि वा लोभात् भयादज्ञानतोऽपि वा। कुर्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति। शास्त्रीयप्रायश्चित्तमुदाहृत्य पश्चादनुग्रहः कार्य्य इत्याहाङ्गिराः "कृत्वा पूर्वमुदाहारं यथोक्तं धर्मवक्तृभिः। पश्चात् कार्य्यानुसारेण शक्त्या कुर्व्वन्त्यनुग्रहम्"। वृद्धत्वादिभेदात् प्रायश्चित्तं यथा "अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च"। पापनिष्क्रमणोपायानाह मनुः "ख्यापनेनानुतापेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि"। आपदीत्यनेन अध्ययनतपसोर्दानमनुकल्प इत्युक्तम्। एतद्धिंसाव्यतिरिक्तविषयम्। हिंसायान्तु दानं मुख्यम्। यथा भविष्ये "हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः। प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते"। तथा मनुः "दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"। सामान्यप्रायश्चित्तान्याह संवर्त्तः "हिरण्यदानं गोदानं भूमिदानं तथैव च। नाशयन्त्याशु पापानि महापातकजान्यपि"। यमः "शोषणेन शरीरस्य तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात् दानेन च दमेन च"। मनुः "कृत्वा पापं हि सन्तप्य तस्मात् पापात् प्रमुच्यते। नैतत् कुर्य्यां पुनरिति निवृत्त्या पूयते नरः"। विष्णुपुराणम् "प्रायश्चित्तान्यशेषाणां कृष्णानुस्मरणं परम्"। यमः "गवाह्निकं देवपूजा वेदाभ्यासः चरित्रकम्। नाशयन्त्याशु पापानि महापातकजान्यपि"। गौतमः "हिरण्यं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि"। एतान्येवासाद्ये विकल्पेन क्रियेरन् एनसि लघुनि लघूनि गुरुणि गुरूणि"। विष्णुपुराणम् "एवं विषयभेदाद्वै व्यवस्थाप्यानि पुत्रक!। प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च। अन्यथा हि महाबाहो! लघूनामुपदेशतः। गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्"। महाभारते "यदकार्य्यशतं कृत्वा कृतं गङ्गाभिषेचनम्। सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः"। शुद्धिकारणानि व्रतान्याह विश्वामित्रः "कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्। प्रकाशे वा रहस्ये वा संशयेऽनुक्तके स्फुटे। प्राजापत्यं सान्तपनं शिशुकृच्छ्रं पराककः। अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यकृच्छ्रोऽतिकृच्छ्रकः। महासान्तपनः शुद्धौ तप्तकृच्छ्रस्तु पावनः। जलोपवासं कृच्छ्रञ्च ब्रह्मकूर्चस्तु शोधकः। एते समस्ता व्यस्ता वा प्रत्येकमेकशोऽपि वा। पातकादिषु सर्वेषु पापकेषु प्रयत्नतः। कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये। शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा। यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति। उपवासस्त्रिरात्रं वा मासं पक्षं तदर्द्धकम्। षड्द्वादशाहादि कार्य्यं शुद्धिफलार्थिना। उपपातकयुक्तानामनादिष्टेषु चैव हि। प्रकाशे च रहस्ये च अभिसन्ध्याद्यपेक्षया। जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा। अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्"। प्रकाशकृते पापे व्रतानि मुख्यानि रहस्यकृते जपादीनि यथा प्राजापत्यादीन्यभिधाय मनुः "एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैस्तु शोधयेत्"। देवलः "प्रकाश उक्तं यत्किञ्चित् विंशभागो रहस्यके। त्रिंशभागः षष्टिभागः कल्प्यो ज्ञात्वाद्यपेक्षया" प्रा० वि०। क्वचिद्विषयभेदे प्रायश्चित्ताभावः यथोक्तं प्रा०त०

अथ गोवधाद्यपवादः। पराशरः "धूर्येषु वहमानेषु दण्डेनाभिहतस्य च। काष्ठेन लेष्टुना वापि पाषाणेन तु ताडितः। मूर्च्छितः पतितश्चैव मृतो वा सद्य एव च। एवं गतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि। उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशाथ वा। ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्व्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते" यदि व्याधिप्रयुक्तानां प्राणा

हृदयोजनमात्रेण स्वल्पतरदण्डाघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनं ग्रासादौ कृते मरणं भवति तदा गमनग्रासग्रहणतोयपानैस्तदानीन्तनमरणे हेत्वभावं निश्चित्य पूर्वव्याधिविनष्टत्वं ज्ञायते। यदि तु पूर्वव्याधिरहित एव प्रहारजनितव्याधिना ग्रासादि कृत्वापि म्रियते तदा प्रायश्चित्तमस्त्येव। संवर्त्तः "यन्त्रणे गोश्चिकित्सायां मूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते। औषधं स्नेहमाहारान् दद्याद् गोब्राह्मणेषु च। प्राणिनां प्राणहत्त्यर्थं प्रायश्चित्तं न विद्यते। दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते" मूढगर्भः अन्तर्मृतगर्भः मुह वैचित्त्ये इत्यनेन तथार्थत्वात्। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिराः "शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा। दशरात्रं चरेत् कृच्छ्रं सुस्था सा यदि गौर्भवेत्"। द्विजानां गवाञ्च हितार्थमित्यर्थः। अत्र प्राणरक्षार्थमाहारादिदानैर्मरणे दोषाभावस्य वाचनिकत्वात् गललग्नान्न मरणे नात्मघातादि। एवं "गोपालको गवां गोष्ठे धूमं यस्तु न कारयेत्। मक्षिकालीननरके मक्षिकाभिः स भक्ष्यते" इति देवीपुराणानुसारादग्निं प्रज्वाल्य तत्रैव स्थितस्य दैवात्तदग्निना मरणे दोषाभावः। तत्रास्थितस्य तु अपालननिमित्तगोवधजन्यदोषः। मिताक्षरायां पराशरः "कूपे खाते च धर्मार्थे गृहदाहे च ये मृताः। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" इदन्तु बन्धनरहितस्य पशोः कदाचित् दाहादिना मृतविषयम्। इतरत्रापस्तम्बोक्तम् "कान्तारेष्वथ वा दुर्गे गृहदाहावटादिषु। यदि तत्र विपत्तिः स्यात् पाद एको विधीयते"। इति ज्ञेयम्। एतद्वचनं यमस्येति भवदेवभट्टः। चिकित्सायां पापाभावो यथावदुपचारे बोध्यः। न पुनः सन्निपाताभिभूतस्योदकपानादिना। अतएव मनुः "चिकित्सायाञ्च सर्वेषां मिथ्याप्रचरतां दमः"। काश्यपोऽप्यत्र प्रायश्चित्तमाह "दोग्ध्री दमनातिदोहान्नाशपाशदामघण्टाभरणयोजनात् तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो विनिवेद्य सशिखवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत्। चीर्णान्ते गां दक्षिणां ब्राह्मणाय दद्यात् मेढ्रं तिलधेनुं वेति"।

प्रायश्चित्तपूर्वाङ्गत्वम्। शङ्खलिखितौ "वाप्य केशनखान् पूर्वं ह्रतं प्राश्य वहिर्निशि। प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत्"। केशधारणेच्छायां द्विगुणव्रतादिकमाह हारीतः "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्। केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत्। द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत्। विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम्। ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः"। इथवा स्त्रीणां विशेषमाह भवदेवभट्टधृतं वचनम्। "वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठे शयनं तासां न च दध्याद्गवाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्"। पापभेदेषु प्रायश्चित्तभेदाः प्रायश्चित्तविवेकादौ दृश्याः विस्तरभयान्नोक्ताः। तस्येदं छ। प्रायश्चित्तीय तदाचरणे न०।

**प्रायश्चित्ति** स्त्री प्रायः (अव्ययम्)। तपस्तश्चित्तिः चित–भावे क्तिन् हृत०। प्रायश्चित्तशब्दार्थे

**प्रायश्चित्तिन्** त्रि०प्रायश्चित्तं कर्त्तव्यत्वेनास्त्यस्य इनि। प्रायश्चित्तार्हे स्त्रियां ङीप्। "प्रायश्चित्ती भवेत् पूतस्तत् पापं तेषु गच्छति" प्रा०त०। ठन् प्रायश्चित्तिक तत्रार्थे

**प्रायस्** अव्य० प्र+अय–असि। १बाहुल्ये २तपसि व्रतादौ च "प्रायः पयोधरसमुन्नतिरत्न हेतुः" उद्भटः। "प्रायो नाम तपः प्रोक्तम्" स्मृतिः।

**प्रायाणिक** त्रि० प्रयाणाय हितं ठक्। यात्रिकद्रव्ये शङ्खचामरादौ प्रायात्रिकादयोऽप्यत्र।

**प्रायिक** त्रि० प्रायेण भवः ठक्। प्रायभवे। [शब्द०च०।

**प्रायुद्धेषिन्** पु०प्रायुधि प्रकृष्टयुद्धार्थं द्वेषते द्वेष–णिनि। अश्वे

**प्रायोग** पु० प्रयुज्यते शकटादौ प्र+युज–कर्मणि घञ् कुत्वम् दीर्घः। शकटादौ नियोगार्हे वृषे ऋ० १०।१०६।२ भा०।

**प्रायोगिक** त्रि० प्रयोगं नित्यमर्हति छेदा० ठञ्। नित्यप्रयोगार्हे।

**प्रायोज्य** न० प्र+आ+युज–णिच्–कर्मणि यत्। प्रयोजनीये "प्रायोज्यं न विभज्येत" कात्या०स०। "प्रायोज्यम् प्रयोजनार्हं यथा पण्डितस्य पुस्तकादि न तन्मूल्यैर्विभजनीयमिति" दायभागः।

**प्रायोपविष्ट** त्रि० प्रायाय अनशनमृत्यये उपविष्टः उप+

विश—क्त। अनशनेन मरणायोद्युक्ते भा०आश्व०८८अ०।

**प्रायोपवेश** पु० प्रायाय अनशनमृत्यये उपवेशः स्थितिः। सङ्कल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे भा०व० २५० श्लो०। भावे ल्युट्। प्रायोपवेशन तत्रार्थे न०। भा०व० १५१२८ श्लो०।

**प्रायोपेत** त्रि० भीमो भीमसेन वत् प्रायः प्रायोपवेशः तेन उपेतः। प्रायोपवेशनयुते भा०सौ० १६अ०।

**प्रारब्ध** न० प्र+आ+रभ—आरम्भे क्त प्रकृष्टमारब्धं स्वकार्य्यं जननाय कृतारम्भं येन! १देहाद्यारम्भके २अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम्। "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" शास्त्रेण प्रारब्धकर्मणो भोगं विना नाशाभावस्योक्तेः "ज्ञानानि सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!" गीतायां ज्ञानस्य सर्वकर्मनाशकत्वोक्तिः प्रारब्धकर्मातिरिक्तविषयेत्याकरे द्रष्टव्यम्। २कृतारब्धे त्रि०।

**प्रारब्धि** स्त्री प्र+आ+रभ—करणे क्तिच्। १गजबन्धनदामनि त्रिका०। भावे क्त। २आरम्भे।

**प्रारम्भण** न०प्र+आ+रभ—ल्युट् मुम्। प्रकर्षेणारम्भे। प्रारम्भणं प्रयोजनमस्य अनुप्र०छ। प्रारम्भणीय तत्प्रयोजनके त्रि०। प्र+आ+रभ—भावे घञ् मुम्। प्रारम्भ प्रकर्षेण आरम्भे पु० [स्त्रियां टाप्।

**प्रारोह** त्रि० प्ररोहः शीलमस्य छत्रा० ण। प्ररोहणशीले

**प्रार्ण** न०प्रकृष्टमृणं ऋणिः। १प्रकृष्टे ऋणे प्रा०व०। २तद्युते त्रि०

**प्रार्थना** स्त्री प्र+अर्थ—युच्। १याच्ञायां २हिंसायाञ्च। ३गर्भाङ्गभेदे सा०द० "संग्रहश्चानुमानञ्च प्रार्थना क्षिप्तिरेव च" गर्भाङ्गान्युद्दिश्य "रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्" इति लक्षिता। ल्युट्। प्रार्थन याचने हिंसने च न०। ४मुद्राभेदे "प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ च सम्मुखे। कुर्य्यात् स्वहृदये सेयं मुद्रा स्यात् प्रार्थनाभिधा" तन्त्रसा०।

**प्रार्थनीय** त्रि० प्र+अर्थ—कर्मणि अनीयर्। १याचनीये अर्थयतेर्याचनार्थत्वेन द्विकर्मकत्वात् गौणे कर्मणि अनीयर्। यतोयाच्यते २तस्मिन् तस्याविवक्षायां मुख्ये याचनाकर्मणि इति बोध्यम्। ३द्वापरयुगे शब्दर०।

**प्रार्थित** त्रि० प्र+अर्थ+क्त। १याचिते २अभिहिते मेदि० ३शत्रुसंयते च त्रिका०।

**प्रालम्ब** न० प्रकर्षेणालम्बते प्र+आ+लम्ब—अच्। १ऋजुतया कण्ठात् लम्बमाने माल्यादौ अमरः। २प्रकर्षेण लम्बमानमात्रे त्रि०। संज्ञायां कन् अत इत्त्वम्। प्रालम्बिका स्वर्णादिरचितलम्बिकायां स्वर्णहारभेदे स्त्री अमरः।

**प्रालेय** न०प्रकर्षेण लीयते प्र+आ—ली—यत्। आत्तदे एत्वम्, प्रलयाय हितम् अण् नि० एत्वम् वा। हिमे अमरः।

**प्रालेयांशु** पु० प्रालेयमंशौ यस्य। १चन्द्रे हला०। तन्नामनामके २कर्पूरे च। प्रालेयकरादयोऽप्युभयत्र पु०।

**प्रावट** पु० प्र+अव—अट्। यवे जटा०।

**प्रावण** न० प्र+आ+वन संभक्तौ करणे च। प्रनिरित्यादिणत्वम्। खनित्रे। प्रकर्षेणावन्यते संक्षिप्यते स्नटनेन ऋ०३।२२।४भाष्ये इष्टम्। वनं समासे अन्तोदात्ततास्य

**प्रावणि** स्त्री प्र+अव—अनि। "हिनुमीनानि लोट्" च ८।४। १५।१६। हिनुमीनानीति छित्वा उज्ज्वलदत्तेन पठित्वा तत्र णत्वमुक्तम्। प्रकृष्टावनौ तस्यायमाशयः "हीनुमीना आनि लोट्" सूत्रद्वये मध्यप्रश्लेषेण हिनुमानीति जायते हिनुमीना आनि इत्येषां णत्वम्। योगविभागाच्च आनि लोट् इत्यस्यापीति।

**प्रावर** पु० प्र+आ+वृ—करणे अप्। १प्राचीरे शब्दरत्ना० २देशभेदे भा०भी० १२अ०। [२उत्तरीयवस्त्रे हेमच०।

**प्रावरण** न० प्र+आ+वृ—करणे ल्युट्। १आच्छादनवस्त्रे

**प्रावार** पु० प्र+आ+वृ—करणे घञ्। १उत्तरीयवस्त्रे अमरः भावे घञ्। २प्रकर्षेण आवरणे पु०।

**प्रावारकर्ण** पु० उलूकभेदे भा० व० १९८अ०।

**प्रावारकीट** पु० ७त०। कीटभेदे जटाधरः।

**प्रावास** त्रि० प्रवासे दीयते कार्यं वा व्युष्टा० अण्। १प्रवासे दीयमाने २तत्र कार्य्ये च।

**प्रावासिक** त्रि० प्रवासाय प्रभवति सन्तापा० ठञ्। १प्रवाससाधने। प्रवासे साधु गुडा० ठञ्। प्रवासे साधौ च।

**प्रावृट्काल** पु०कर्म०। ६त०वा। वर्षाकाले प्रावृट्समयादयोऽप्यत्र।

**प्रावृट्कालवहा** स्त्री ७त०। नदीभेदे मार्कण्डेयपु०६७अ०।

**प्रावृडत्यय** पु०६त०। १वर्षातिक्रमे वर्षापगमे व०व०। २शरत्काले राजनि०। [प्रकर्षेण २आवृतमात्रे त्रि०।

**प्रावृत** न० प्र+आ+वृ—कर्मणि क्त। १प्रकर्षेण आवृते वस्त्रे

**प्रावृति** स्त्री प्र+आ+वृ—करणे क्तिन्। प्राचीरे शब्दर०।

**प्रावृत्तिक** पु० प्रवृत्तौ तद्वरणे हितः ठक्। प्रवृत्तिवाहके दूतभेदे हरिवं० १०४अ०।

**प्रावृष्(षा)** स्त्री प्रवृष्यतेऽत्र प्र+वृष—आधारे क्विप् दीर्घः हलन्तत्वात् वा टाप्। वर्षाकाले स च श्रावणभाद्रात्मकः

"नभश्च नभस्यश्च वार्षिकावृतू" यजु०। ऋतुशब्दे १४२२ पृ० अस्य सौरचान्द्रत्वविकल्पश्च दृश्यः।

**प्रावृषायणी** स्त्री प्रावृषा अयनं यस्याः गौरा० ङीष्। कपिकच्छाम् (आलकुशी) अमरः।

**प्रावृषिक** पुंस्त्री प्रावृषि कायति शब्दायते कै–क अलुक् स०। १मयूरे धरणिः। स्त्रियां जातित्वात् ङीष्। प्रावृषि भवः ठञ्। २वर्षाकालभवे त्रि० स्त्रीयां ङीप्।

**प्रावृषिज** पु० प्रावृषि जायते जन–ड अलुक् स०। १झञ्झानिले त्रिका०। २वर्षाकालजाते त्रि० "जे विभाषा" वा अलुक् स०। तेन प्रावृड्ज तत्रार्थे त्रि०।

**प्रावृषीण** त्रि० प्रावृषि भवः दा० ख। वर्षाकालभवे ऋ०७। १०३।७ भाष्य।

**प्रावृषेण्य** त्रि० प्रावृषि भवः एन्य। १वर्षाकालजाते २कदम्बवृक्षे पु० मेदि०। ३कुटजवृक्षे ४धाराकदम्बे च पु० राजनि०। ५कपिकच्छाम् ६रक्तपुनर्नवायां स्त्री राजनि०। प्रावृषि दीयते कार्यं वा एन्य। ७वर्षाकाले देये करादौ ८तत्र कार्ये च त्रि०। ९प्राचुर्य्ये न० शब्दर०।

**प्रावृषेय** पु० १देशभेदे भा०भी०८अ०। प्रावृषायां भवः ढक्। २वर्षाकालभवे त्रि० स्त्रियां ङीप्।

**प्रावृष्य** पु० प्रावृषि भवः वा० यत्। १धाराकदम्बे २कुटजे ३विकङ्कतवृक्षे च राजनि०।

**प्रावेशन** त्रि० प्रवेशने दीयते कार्यं वा व्युष्टा० अण्। १प्रवेशने दीयमाने २तत्कार्य्ये च। [ङीप्।

**प्रावेशिक** त्रि० प्रवेशाय साधुः ठञ्। प्रवेशसाधने स्त्रियां

**प्राशन** न० प्र+अश–भावे ल्युट्। अन्नादेः प्रकर्षेण भोजने अन्नप्राशनम्।

**प्राशास्त्र** न० प्रशास्तुर्भावः कर्म वा उद्गा० अञ्। प्रशास्तुर्ऋत्विजः कर्मणि १शास्त्रशंसने २तद्भावे च।

**प्राशित** त्रि० प्र+अश–भोजन कर्मणि क्त। १भक्षिते। भावे क्त। २भक्षणे न० ३पितृयज्ञे तर्पणे जटा० "प्राशितं पितृतर्पणम्" मनुना तत्रार्थे परिभाषितत्वात्।

**प्राशित्र** न० यज्ञिये यवमात्रं पिप्पलमात्रं वाऽवत्ते ब्रह्मोद्देश्यके भागे शिष्टांशभेदे "शिष्टात् प्राशित्रावदानम्" कात्या० १।१।७। "मित्रस्य त्वा चक्षुषा प्रतीक्ष इति प्राशित्रं प्रतीक्षते" २।२।१५ "प्राशित्रमवदीयमानमाह्रियमाणं च प्राशित्रं ब्रह्मणो भागः यवमात्रं पिप्पलमात्रं वाऽवत्तः" कर्कः "स यत् प्राशित्रमवद्यति" इत्युपक्रमे। अथास्म ब्रह्मभागं पर्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भागं प्रतिविद्वान आस्ते यत् प्राशित्रं तदस्मै पर्याहार्षुस्तत्प्राशीदथ यमस्मै ब्रह्मभागं पर्याहरन्ति तेन भागी स यदतऊर्द्ध्वमसंस्थितं यज्ञस्य तदभिगोपायति तस्माद्वा अस्मै ब्रह्मभागं पर्याहरन्ति", शत०ब्रा० १।७।४।१८

**प्राशित्राहरण** प्राशित्रं ह्रियतेऽनेन हृ–करणे ल्युट्। प्राशित्ररूपभागहरणसाधने गोकर्णाकृतिपात्रभेदे शत० ब्रा० १।३।१।६ भाष्यम्।

**प्राश्य** पु० प्र+अश–भोजने ण्यत्। भक्षणे प्राशने हितः यत्। प्राशव्य प्रकृष्टभक्षणहिते ऋ० ८।३।१।६ भा०। प्रा०स०। २प्रकृष्टशीर्षे निघण्टुः। [यजु०२४।२७

**प्राशृङ्ग** त्रि० प्रकृष्टं शृङ्गमस्य वेदे दीर्घः। प्रकृष्टशृङ्गयुक्ते

**प्राश्निक** पु०प्रश्नाय तदुत्तरदानाय साधु ठक्। १सभ्ये त्रिका० २प्रश्नोत्तरदानाय साधौ त्रि०।

**प्राश्नीपुत्र** पु०यजुर्वेदवंशस्ये ऋषिभेदे शत०ब्रा० १४।९।४।२९

**प्राष्टवर्ण** पु०प्रकर्षेण अष्टः प्राप्तो वर्णः। पृश्निवर्णे नानावर्णे निरु० १०।३९

**प्रास** पु० प्रास्यते प्र+अस–क्षेपे कर्मणि घञ्। कुन्तास्त्रे अमरः। कुन्तशब्दे २००१८ पृ० दृश्यम्।

**प्रासक** पु०प्रास+संज्ञायां कन्। पाशके हेमच० तस्य देवकैः क्षिप्यमाणत्वात् तथात्वम्। स्वार्थे क। २प्रासास्त्रे पु०।

**प्रासङ्ग** पु० प्र+सन्ज–कर्मणि घञ् दीर्घः। दम्यवत्सानां स्कन्धे शिक्षार्थमासज्यमाने युगभेदे अमरः। तं वहति यत्। प्रासङ्ग्य तद्वाहके दम्यवत्से अमरः।

**प्रासङ्गिक** त्रि०प्रसङ्गादागतः ठञ्। प्रसङ्गागते स्त्रियां ङीप्।

**प्रासाद** पु० प्रसीदत्यस्मिन् प्र+सद–आधारे घञ् दीर्घः। देवनृपयोर्गृहे अमरः देवगृहशब्दे ३६७८ पृ० दृश्यम्।

**प्रासादकुक्कुट** पुंस्त्री० प्रासादे कुक्कुट इव। पारावते त्रिका० स्त्रियां जातित्वात् ङीष्।

**प्रासिक** पु०प्रासः प्रहरणमस्य ठक्। कुन्तेन योद्धरि अमरः

**प्रास्तारिक** त्रि० प्रस्तारे व्यवहरति ठक्। प्रस्तारे व्यवहारिणि। [ध्यादौ मङ्गलद्रव्ये स्त्रियां ङीप्।

**प्रास्थानिक** त्रि० प्रस्थाने साधु ठञ्। यात्रिके शङ्खद-

**प्रास्थिक** त्रि०प्रस्थस्य वापः ठञ्। १प्रस्थमितधान्यवपनाधारे क्षेत्रे २भूमौ स्त्री ङीप्। प्रस्थं सम्भवति (अस्मिन् समावेशयति) अवहरति पचति वा ठञ्। प्रस्थमितधान्यादेः अस्मिन् ३समावेशके ४अवहारके ५पाचके च त्रि० स्त्रियां ङीप्। प्रस्थः परिमाणमस्य ठञ्। ६प्रस्थपरिमाणयुक्ते

धान्यराद्यादौ त्रि० प्रस्थेन क्रीतम् ठञ् । ७प्रस्थेन क्रीते त्रि० स्त्रियां ङीप् । प्रस्थस्य निमित्तं संयोग उत्पातो वा ठञ् । प्रस्थस्य दनिमित्ते ८संयोगे १०उत्पाते वा ।

प्राह्ण पु० प्रकर्षेण आह्वेति शब्दोऽत्र । ब्रह्मोपदेशे शब्दमा०।

प्राह्ल पु० प्रारम्भोऽह्नः प्रा०स०अच्समा० अह्नादेशः णत्वञ्च । त्रिधाविभक्तदिनस्य पूर्वभागे १पूर्वाह्ले अमरः । प्रकृष्ट-ह्र्येव तिष्ठन्तु० अव्ययी० । २प्रकृष्टदिनयुते अव्य० ।

प्राह्लेतन त्रि०प्राह्ले भवः ट्यु तुट् च निपदन्तत्वम् । पूर्वा-ह्लभवे स्त्रियां ङीप् ।

प्राह्लेतरा(मा)म् अव्य० अतिशयेन प्राह्ले तरप् तमप् वा आम् घकालेत्यादिना सप्तम्या अलुक् । अत्यन्तप्रातःकाले इत्यर्थे ।

प्रिय त्रि० प्रीणाति प्री—तर्पणे क । १भर्त्तरि पत्यौ अमरः २भार्य्यायां स्त्री । ३प्रियके मृगभेदे पु०स्त्री जटा०४ऋद्धि-नामौषधौ ५हृद्ये त्रि० मेदि० ६जीवकौषधौ राजनि० ।

प्रियंवद त्रि०प्रियं वदति वद—खच् मुम् । १प्रियकरवादिनि मधुरभाषिणि । २खेचरे ३गन्धर्वभेदे पु० शब्दमा० वदेर-न्तःस्थवादित्वात् प्रियम्वदेति मयुक्तशब्दकल्पनं प्रामा-दिकमेव । "भुवि भवेन्नभजरैः प्रियंवदा" इ०र० उक्ते द्वादशाक्षरपादके ४छन्दोभेदे स्त्री । ५शकुन्तलासहचरी-भेदे स्त्री शकु० दृश्यम् ।

प्रियक पु० प्रिय+स्वार्थे क संज्ञायां कन् वा । १पीतशा-लके (पियाशाल) २नीपे ३चित्रमृगे ४भ्रमरे ५प्रियङ्गौ ६कुङ्कुमे मेदि० ७धाराकदम्बे ८असनवृक्षे राजनि० । ६स्कन्दानुचरभेदे भा०प० ४६अ० । तस्यापत्यं विदा० अञ् । प्रैयक चित्रमृगापत्ये पुंस्त्री० ।

प्रियकृत् त्रि० प्रियं करोति कृ—क्विप् तुक् । १प्रियकारिणि २विष्णौ पु० "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस० ।

प्रियङ्कर त्रि० प्रियं करोति कृ—खच् मुम् । १प्रियकारिणि २श्वेतकण्टकार्य्यां ३दृक्जीवन्त्याम् ४अश्वगन्धायाञ्च स्त्री राजनि० गौरा० ङीष् ।

प्रियङ्करण त्रि० अप्रियं प्रियं करोत्यनेन कृ—करणे ख्युन् । अप्रियस्य प्रियताकरणसाधने ।

प्रियङ्गु स्त्री प्रिय+गम—डु नि०मुम् च । १स्वनामख्याते वृक्षे अमरः "प्रियङ्गुः शीतला तिक्ता तुवरानिलपित्तहृत् । रक्तादियोगदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्-विषमोहघ्नी तद्वद्गन्धप्रियङ्गुका । तत्फलं मधुरं रूक्षं कषायं शीतलङ्गुरु । विबन्धाध्मानबलकृत् संग्राहि कफपित्तजित्" भावप्र० । "प्रियङ्गुकलिकारस" इति बुध-प्रणाममन्त्रः । २राजिकायां राजनि० ३पिप्पल्याम् ४कङ्गौ (काङ्गनी) धान्ये मेदि० ५कटुकायां धरणिः । [त्नमणिः ।

प्रियजन पु०कर्म० । १हृद्ये जने । २प्रौढभावानुविद्ने उज्ज्व-

प्रियजीव पु०प्रियो जीवो यस्मिन् । श्योनाकवृक्षे राजनि० ।

प्रियतम पु० अतिशयेन प्रियः तमप् । १मयूरशिखावृक्षे २अतिप्रिये त्रि० शब्दच० ।

प्रियता स्त्री प्रियस्य भावः तल् । १स्नेहे २प्रेमणि अमरः । त्व । प्रियत्व तत्रार्थे न० शब्दर० ।

प्रियतोषण त्रि० प्रियं तोषयति तुष—णिच् ल्यु । १प्रियस-न्तोषकारके "नारीपादौ स्वहस्तेन धारयेत् जघनोपरि । स्तनापीड़करः कामी कामयेत् प्रियतोषणः" रतिमञ्ज-र्य्युक्ते २रतिबन्धभेदे ।

प्रियदत्ता स्त्री दीयमानपृथिव्याम् "नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् । दाने वाऽप्यथ वाऽऽदाने ना-मास्याः प्रथमं प्रियम् । य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्" भा०अनु० ६२अ० ।

प्रियदर्शन पु० प्रियं दर्शनमस्य । १क्षीरिकावृक्षे २शुकपक्षे च जटा० ३हृद्ये त्रि० । [हेमच० ।

प्रियप्रायस् न० प्रियस्य प्रायः बाहुल्यं यत्र । प्रियवाक्ये

प्रियप्रेप्सु त्रि० ७त० । इष्टार्थोद्युक्ते जटा० । [प्रिये त्रि० ।

प्रियमधु पु०प्रियं मधु मद्यं यस्य । १बलरामे हेमच० २मद्य-

प्रियमाल्यानुलेपन त्रि० प्रियं माल्यमनुलेपनं च यस्य । १माल्यानुलेपनप्रिये २स्कन्दानुचरभेदे पु०भा०श० ४६अ० ।

प्रियमेध पु० १अजमीढस्य पुत्रभेदे "अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः" भाग० ६।२१।१७श्लो० । २अथो-र्पेते ऋषिभेदे ऋ० १।४५।४ भा० ।

प्रियम्भविष्णु त्रि०अप्रियः प्रियो भवति भू—कर्त्तरि खिष्णुच् । अप्रिये प्रिये भवितरि । खुकञ् प्रियम्भावुक तत्रार्थे त्रि० ।

प्रियरूप त्रि०प्रियं रूपमस्य । १हृद्यरूपे । तस्य भावः मनोज्ञा० वुञ् । प्रैयरूपक तस्य भावे न० । कर्म० । २हृद्ये रूपे न० ।

प्रियवचन त्रि०प्रियं वचनं वैद्यकवचनं वा यस्य । १प्रियवा-दिनि २कोकिलवाक्ये भल्लिमति २रोगिणि राजनि० । कर्म० । ३हृद्ये वाक्ये न० ।

प्रियवर्णी स्त्री प्रियो वर्णो यस्याः गौरा० ङीष् । प्रियङ्गौ जटाधरः । [लतायाञ्च ।

प्रियवल्ली स्त्री नित्यकर्म० । १प्रियङ्गौ राजनि० २हृद्यायां

**प्रियवादिन्** त्रि॰ प्रियं वदति वद–णिनि । प्रियवाक्यभाषके स्त्रियां ङीप् “भार्य्या चाप्रियवादिनी” चाणक्यः ।

**प्रियव्रत** त्रि॰ प्रियं व्रतमस्य । १व्रतप्रिये स्वायम्भुवमनोः २पुत्रभेदे पु॰ हरिवं॰ २अ॰ । [१।६।२२।

**प्रियश्रवस्** पु॰ प्रियं श्रवः श्रवणं यस्य । परमेश्वरे भाग॰

**प्रियसख** पु॰ कर्म॰ ६त॰ वा, अच्समा॰ । १हृद्ये सख्यौ २प्रियस्य सख्यौ च । स्त्रियां ङीष् । ३खदिरे शब्दच॰।

**प्रियसङ्गमन** त्रि॰ प्रिययोः सङ्गमनं यत्र । १प्रिययोर्मेलनस्थाने २कश्यपादित्योर्मेलनस्थाने देशभेदे पु॰ “यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ । प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन्” हरिवं॰ १२४अ॰ ।

**प्रियसत्य** न॰ कर्म॰। १तथ्ये अथ च प्रिये सुन्दतवाक्ये हेमच॰ प्रियं सत्यं यस्य । २सत्यप्रिये त्रि॰ ।

**प्रियसन्देश** पु॰ प्रियं सन्दिशति सम्+दिश–अण् उप॰स॰। १चम्पकवृक्षे भावे घञ् ६त॰ । २प्रियसंवादे शब्दच॰ ।

**प्रियसाल(क)** पु॰कर्म॰स्वार्थे क वा। असनवृक्षे (पियाशाल) राजनि॰ ।

**प्रियादि** विशेषणवाचिनि समानाधिकरणस्त्रीलिङ्गशब्दे परे ब॰व्री॰ पूर्वस्य पुंवद्भावे पर्युदस्ते शब्दगणे स च गणः पा॰ग॰सू॰ उक्तो यथा “प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्ति सचिवा स्वा स्वसा कान्ता क्षान्ता समा चपला दुहिता वामना तनया” । सुन्दरी प्रिया यस्य । सुन्दरी प्रिय इत्यादि ।

**प्रियाम्बु** पु॰ प्रियं पितृणां प्रियमम्बु मूले सिक्तं जलमस्य । १आम्रवृक्षे राजनि॰ । २जलप्रिये त्रि॰ ।

**प्रियार्ह** त्रि॰प्रियमर्हति अर्ह–अण् उप॰स॰। १प्रियवाक्यादियोग्ये २विष्णौ पु॰“अभिप्रायः प्रियार्होऽर्हः”विष्णुस॰।

**प्रियाल** पु॰ प्रियाय अलति पर्य्याप्नोति अल–अच् । प्रियसाले (पियाशाल) २द्राक्षायां स्त्री राजनि॰ भावप्र॰ पियाल इत्येव पाठः “पियालस्तु खरस्कन्धश्चारो बहुलवल्कलः । राजादनस्तापसेष्टः सन्नकद्रुर्धनुष्पटः । चारः पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । पियालमज्जा मधुरो वृष्यः पित्तानिलापहः । हृद्योऽतिदुर्जरः स्निग्धो विष्टम्भी चामवर्द्धनः” भावप्र॰ ।

**प्रियोदित** न॰ कर्म॰ । चाटुवाक्ये शब्दरत्ना॰ ।

**प्री** तर्पणे भ्वा॰उभ॰सक॰अनिट् । प्रयति ते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये ।

**प्री** प्रीतौ कान्तौ (इच्छायाम्) सक॰ दिवा॰ आत्म॰ अनिट् । प्रीयते अप्रेष्ट पिप्रिये ।

**प्री** तर्पणे सक॰ कान्तौ तृप्तौ अक॰ क्र्या॰उभ॰अनिट् । प्रीणाति प्रीणीते अप्रैषीत् अप्रेष्ट पिप्राय पिप्रिये । प्रीतः । णिच् नुक् । प्रीणयति ते । [अत्रापि नुक् प्रीणयतीत्येके ।

**प्री** तर्पणे सक॰चु॰उभ॰अनिट् । प्राययति ते अपिप्रयत्-त ।

**प्रीण** त्रि॰ प्री–णिच् कर्त्तरि अच् । १प्रीणनकारके करणे अच् । २नर्मणि मेदि॰ । पुराणार्थप्रशब्दात् भवार्थे ख । २पुराणे त्रि॰ त्रिका॰ ।

**प्रीणन** न॰ प्री–णिच्–नुक्-ल्युट् । तर्पणे अमरः ।

**प्रीणस** पु॰ प्रीणि–बा॰ असच् । गण्डके राजनि॰ ।

**प्रीत** त्रि॰ प्री–कर्त्तरि क्त । हृष्टे अमरः ।

**प्रीति** स्त्री प्री–भावे क्तिच् । १हर्षे २आमोदे ३तृप्तौ च । विष्कुम्भादियोगेषु ४द्वितीययोगे । ५कामस्य पत्नीभेदे रत्याः सपत्न्याञ्च “वेश्याऽनङ्गवती नाम विभूतिद्वादशीव्रतम् । समाप्य माघमासस्य द्वादश्यां लवणाचलम् । निवेदयन्ती गुरवे शय्याञ्चोपस्करान्विताम् । अलङ्कृत्य हृषीकेशं सौवर्णामरपादपम् । स चानङ्गवती वेश्या कामदेवस्य साम्प्रतम् । पत्नी, सपत्नी संजाता रत्याः प्रीतिरिति श्रुता” मात्स्ये ८२अ॰ ।

**प्रीतिजुष** त्रि॰ प्रीतिं जुषते जुष–क । १प्रीतिभाजि २अनिरुद्धपत्न्यामुषायां स्त्री शब्दरत्ना॰ “विश्वकेतुः प्रीतिजुषा सुतः” त्रिका॰ तत्पुत्रोक्तौ । [प्रहासिनि पु॰ हेमच॰।

**प्रीतिद** त्रि॰ प्रीतिं ददाति दा–क । प्रीतिदायके ( भाँड़ )

**प्रीतिदत्त** त्रि॰३त॰। १प्रीत्या दत्ते २स्त्रीधनभेदे न॰ यथाह मिता॰ कात्यायनः “प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते” । भर्तृप्रीतदत्तस्थावरे तु विशेषः दाय॰ उक्तो यथा “भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृते तत् । सा यथा काममश्नीयात् दद्याद्वा स्थावरादृते” ।

**प्रीतिदाय** पु॰ प्रीत्या दीयते दा–कर्मणि घञ् । प्रीत्या दत्ते “श्वशुरात् प्रीतिदायं तु प्राप्य सा प्रीतमानसा” भा॰आश्व॰ ८६ अ॰ ।

**प्रीतिभोज्य** न॰ प्रीत्या भोज्यम् । प्रीत्यैव भोज्ये अन्नादौ “अन्नानि प्रीतिभोज्यानि आपद्भोज्यानि वा पुनः । न च संप्रीयसे राजन् ! न चैवापद्गतावयम्” भा॰उ॰ ९१ अ॰। “संप्रीतिभोज्यान्यन्नानि” इति मुद्रितपुस्तके पाठः ।

**प्रीतिवर्द्धन** त्रि॰ प्रीतिं वर्द्धयति वृध–णिच्–ल्यु । १सन्तोष-

वर्द्धके २विष्णौ पु० "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस० ।

**प्रु** सर्पणे भ्वा० आत्म०सक० अनिट् । प्रवते अप्रोष्ट पुप्रुवे ।

**प्रुट** मर्दने भ्वा० पर०सक० सेट् । प्रोटति अप्रोटीत् पुप्रोट । अयं धातुपाठे पठितः ।

**प्रुष** भस्मीकरणे भ्वा० पर० सक० सेट् । प्रोषति अप्रोषीत् पुप्रोष । उदित् क्त्वा वेट् । प्रुषित्वा प्रुष्ट्वा प्रुष्टः ।

**प्रुष** सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर०सेट् । प्रुष्णाति अप्रोषीत् पुप्रोष ।

**प्रुष्ट** त्रि० प्रुष–क्त । दग्धे । [बिन्दौ सि०कौ० ।

**प्रुष्व** प्र० प्रुष–क्वन् । १ऋतौ २सूर्य्ये च उज्ज्वल० । ३जल-

**प्रेक्षा** स्त्री प्र+ईक्ष–भावे अङ् । १विषयशुभाशुभपर्य्यालोचनायां २बुद्धिपूर्वककर्मकरणे ततः प्रेक्षादि० चतुरर्थ्याम् इनि । प्रेक्षिन् आलोचनानिर्वृत्तादौ । अस्मिन् शब्दे परे घोषादि० पूर्वपदस्योदात्तम । [प्रेक्षागृहादयोऽप्यत्र ।

**प्रेक्षागार** न० ६त० । राज्ञां मन्त्रणार्थंगृहे हरिवं० ८५अ०

**प्रेक्षादि** चतुरर्थ्यामिनि प्रत्ययनिमित्ते शब्दगणः स च गणः पा०ग० उक्तो यथा "प्रेक्षा हलका बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट सङ्कट कटकूप धुक पुक पुट मह परिवाप यवास धुवका गर्त्त कूपक हिरण्य" ।

**प्रेक्षावत्** त्रि०प्रेक्षा अस्त्यर्थे मतुप् मस्य वः । समीक्ष्यकारिणि ।

**प्रेङ्खण** न० प्र+इखि–ल्युट् णत्वम् । १प्रकर्षेण चलने अष्टादशरूपकान्तर्गते २रूपकभेदे तल्लक्षणं सा०द० उक्तं यथा "गर्भावमर्षरहितं प्रेङ्खणं हीननायकम् । असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् । नियुद्धसम्फेटयुतं सर्ववृत्तिसमान्वितम् । नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना" ।

**प्रेङ्खा** स्त्री प्र+इखि वा० आधारे अङ् । १दोलायाम् अमरः भावे अङ् । २परिभ्रमणे ३स्वार्थगतौ अश्वगतौ इति पाठान्तरम् । ४गृहभेदे मेदि० ५नृत्ये च धरणिः ।

**प्रेङ्खित** त्रि० प्र+इखि–क्त । कम्पिते अमरः ।

**प्रेङ्खोल** दोलने अद०चुरा०उभ०सक० सेट् । प्रेङ्खोलयति ते अपिप्रेङ्खोलत् त । प्रस्योपसर्गत्वमपीच्छन्तीत्यन्ये तेन प्राञ्चिखोलत् त इत्येवरूपम् ।

**प्रेण** गतिप्रेरणाश्लेषणेषु भ्वा०पर० सक० सेट् माधवः । प्रेणति अप्रेणीत् ऋदित् अपिप्रेणत् त ।

**प्रेणि** त्रि० प्रेण–इन् । प्रेरके ऋ० १।११२।१० भा० ।

**प्रेत** त्रि० प्र–इ–क्त । १मृते अमरः । २नरकस्थे जीवभेदे ३पिशाचभेदे आतिवाहिकदेहोत्तरं ४जायमानदेहभेदयुते और्द्ध्वदेहिकक्रियाऽभावे तद्रूपप्राप्तिकथा पाद्मोत्त०ख० १६अ० यथा "ततो बहुतिथे काले स राजा पञ्चताङ्गतः । वैदिकेन विधानेन न लेभे चौर्द्ध्वदेहिकम् । विष्णुप्रद्वेषमात्रेण युगानां सप्तविंशतिम् । भुक्त्वा च यातनां याम्यीं निस्तीर्णनरको नृपः । अमया गिरिराजन्तु पिशाचोऽभूत्तदा महान्" । तस्य रूपं यथा "देवद्युतिरधीयानः शुश्राव करुणस्वनम् । समागत्य ततस्तत्र तं पिशाचं ददर्श सः । विकरालमुखं दीनं पिङ्गलनयनं भृगम् । ऊर्द्ध्वमूर्द्धजलम्बाङ्गं यमदूतमिवापरम् । चलज्जिह्वश्च लम्बोष्ठं दीर्घजङ्घशिराकुलम् । दीर्घाङ्घ्रिशुष्कतुण्डश्च गर्त्ताक्षं शुष्कपञ्जरम्" ।

और्द्ध्वदेहिककरणेऽपि केषाञ्चित् कर्मविशेषेण प्रेतत्वप्राप्तिस्तत्रोक्ता यथा "हविर्जुह्वति नाग्नौ ये गोविन्दं नार्चयन्ति ये । लभन्ते नात्मविद्याश्च सुतीर्थविमुखाश्च ये । सुवर्णं वस्त्रताम्बूलं रत्नमन्नं फलं जलम् । आर्त्तेभ्यो न प्रयच्छन्ति सर्वेषु स्तनदारकाः । ब्रह्मस्वञ्च स्त्रीधनानि लोभादेव हरन्ति ये । बलेन छद्मना वापि धूर्त्ताश्च परवञ्चकाः । नास्तिकाः कुहकाश्चौरा ये चान्ये वकवृत्तयः । बालवृद्धातुरस्त्रीषु निर्दयाः सत्त्ववर्जिताः । अग्निदा गरदा ये च ये चान्ये कूटसाक्षिणः । अगम्यागामिनः सर्वे ये चान्ये ग्रामयाजिनः । स्वाधाचरणसम्पन्ना वर्णादिकर्मवर्जिताः । ये चोपदेवदनुजरक्षोयक्षादिसेविनः । सर्वदा मादकद्रव्यपानमत्ता हरिद्विषः । देवतोद्दिष्टपतितन्नपक्वान्नाश्नभोजिनः । असत्कर्मरता नित्यं सर्वपातकपापिनः । पाषण्डधर्माचरणाः पुरोधोवृत्तिजीविनः । पितृमातृस्नुषापत्यस्वदारत्यागिनश्च ये । ये कदर्य्याश्च लुब्धाश्च नास्तिका धर्मदूषकाः । त्यजन्ति स्वामिनं युद्धे त्यजन्ति शरणागतम् । गवां भूमेश्च हर्त्तारो ये चान्ये रत्नदूषकाः । महाक्षेत्रेषु सर्वेषु प्रतिग्रहरताश्च ये । परद्रोहरता ये च तथा ये प्राणिहिंसकाः । परापवादिनः पापा देवतागुरुनिन्दकाः । कुप्रतिग्राहिणः सर्वे सम्भवन्ति पुनःपुनः । प्रेतराक्षसपैशाच्यतिर्य्यग्वृक्षकुयोनिषु । न तेषां सुखलेशोऽस्ति इह लोके परत्र च" । पाद्मोत्तरखण्डे १८ अ० । पञ्चप्रेतोपाख्यानं तत्रैव यथा "ब्राह्मण उवाच प्रेतानां नाम जातीनां युष्माकं सम्भवः कथम् । किं तत् कारणमुद्दिश्य यूयमीदृशमासक्ताः" । प्रेता ऊचुः "अहं स्वादु सदा भुक्त्वा दद्यां पर्य्युषितं

सदा। एतत्कारणमुद्दिश्य नाम पर्य्युषितं[1] मम। सूचिता बहवोऽनेन विप्राद्या ह्यन्नकाङ्क्षिणः। एतत्कारणमुद्दिश्य सूचीमुख[2]मिमं विदुः। शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै। पश्चाद्भुङ्क्ते द्विजः शिष्टमेव शीघ्रक[3] उच्यते। गृहोपरि सदा भुङ्क्ते स्वादु द्विजभयेन हि। द्विजाय कुत्सितं दत्त्वा एष रोहक[4] उच्यते। मौनेनापि स्थिरो नित्यं याचितो विलिखन्महीम्। अस्माकमपि पापिष्ठो लेखको[5] नाम एष वै। मेढ्रेण लेखको याति रोहकः पार्श्वतःशिराः। शीघ्रकः पङ्गुतां प्राप्तः सूची सूचीमुखोऽभवत्"। प्रेताहारस्तत्रोक्तो यथा "द्विज उवाच "ये जीवा भुवि तिष्ठन्ति सर्वे आहारमूलकाः। युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः" प्रेता ऊचुः "शृणु आहारमस्माकं सर्वसत्त्वविगर्हितम्। श्लेष्ममूत्रपुरीषेण योषितान्तु मलेन च। गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै। स्त्रीभिर्जघ्नानि जीर्णानि संकीर्णोपहतानि च। मलेनातिजुगुप्सानि प्रेता भुञ्जन्ति तत्र वै। भयलज्जाविहीनानि पतितैः सेवितानि च। अन्योन्यदस्युयुक्तानि प्रेता भुञ्जन्ति तत्र वै। कलहान्वितशोकानि त्यक्तशोभानि मण्डनैः। सवर्चस्कानि भाण्डानि प्रेता भुञ्जन्ति तत्र वै। बलिमन्त्रविहीनानि द्विजादृष्टानि यानि तु। नियमव्रतहीनानि प्रेता भुञ्जन्ति तत्र वै। गुरवो नैव पूज्यन्ते स्त्रीजितानि मन्दिराणि च। सक्रोधान्यपवित्राणि प्रेता भुञ्जन्ति तत्र वै। भुञ्जन्ति भिन्नभाण्डेषु मर्य्यादारहितेषु च। अन्योन्योच्छिष्टयुक्तेषु तत्र प्रेतास्तु भुञ्जते। सकेशमाक्षिकोच्छिष्टं पूति पर्युषितं तथा। सक्रोधञ्च सशोकञ्च तच्च प्रेतेषु भोजनम्। सनग्नं भोजनं यच्च नोत्तरीयं पदासनम्। सोष्णीषं सासुरीकञ्च तच्च प्रेतेषु भोजनम्। अर्द्धपाकं महापाकं सोत्क्षिप्तं पतितं तथा। दुर्भुक्तं गोष्ठिकञ्चैव तच्च प्रेतेषु भोजनम्। कौतिकं मृतकञ्चैव राजसं कलुषीकृतम्। निर्दोषं क्षितिवज्जाग्रे यद्भुक्तं प्रैतिकन्तु तत्। एतत्ते कथितं सर्वं यत् प्रेतेष्वेव भोजनम्। निर्वाणाः प्रेतजात्या वै पृच्छामस्त्वां द्विजोत्तम"। प्रेतत्वाभावकारणं यथा "न प्रेतो जायते येन येन चैवेह जायते। एतत्सर्वं समासेन प्रब्रूहि वदतां वर!" ब्राह्मण उवाच "एकरात्रं त्रिरात्रं वा कृच्छ्रं चान्द्रायणादिकम्। व्रतेष्वभ्युषितो यस्तु न प्रेतो जायते नरः। मिष्टान्नपानदाताच सततं श्रद्धयान्वितः। देवपूजापरो नित्यं न प्रेतो जायते नरः। त्रिरग्निरेकपञ्चाग्निर्निरग्निर्वाप्युपासकः। सर्वभूतदयापन्नो न प्रेतो जायते नरः। तुल्यमानापमानश्च तुल्यः काञ्चनलोष्टयोः। तुल्यः शत्रौ च मित्रे च न प्रेतो जायते नरः। देवतातिथिपूजासु गुरुजातिषु नित्यशः। वेदशास्त्ररतो नित्यं न प्रेतो जायते नरः। जितक्रोधो मदैश्वर्य्यतृष्णासङ्गविवर्जितः। क्षमाऽक्रोधसुशीलश्च न प्रेतो जायते नरः। देवतातिथिपूजास्तु पर्व्वतांश्च नदीस्तथा। पश्येद्देवालयांश्चैव न प्रेतो जायते नरः"। प्रेतत्वकारणं यथा "शूद्रान्नं यो द्विजो भुङ्क्ते यः क्रामति द्विजोत्तमम्। वृत्तिहा द्विजदेवेषु स प्रेतो जायते नरः। मातरं पितरं वृद्धं ज्ञातिं साधुजनं तथा। लोभात् त्यजति यः स्निग्धं स प्रेतो जायते नरः। अयाज्ययाजकश्चैव याज्यञ्च परिवर्जयेत्। शूद्रानुपहर्त्ता च स प्रेतो जायते नरः। कुज्योतिषी कुविद्यस्तु कुजनेषु कुदेशकः। शूद्रसेवाकरो राज्ञां स प्रेतो जायते नरः। सेवनायापहृतो यः सेवकस्य परिग्रहः। तावुभावपि जायेते प्रेतौ कालान्न किंप्रदौ। द्विजानुमन्त्रितो भुङ्क्ते शूद्रान्नं वा द्विजस्य तु। शूद्रेणैव द्विजः प्रेतो निरयानुपगच्छति। गीतवाद्यरतो नित्यं मद्यपस्त्रीनिषेवणात्। द्यूतमांसप्रियो यस्तु स प्रेतो जायते नरः। वृथारेता वृथामांसो वृथावादो वृथामतिः। निन्दको द्विजदेवानां स प्रेतो जायते नरः। वृद्धं बालं गुरुं विप्रं योऽवमन्य भुनक्ति वै। कन्यां ददाति शुल्केन स प्रेतो जायते नरः। न्यासापहर्त्ता मित्रध्रुक् परपाकरतस्तथा। विश्रम्भघाती कूटश्च स प्रेतो जायते नरः। निर्दोषान् सुहृदो नारीस्त्यजेत् कामान्न पाति यः। धनमीहेत यस्तेषां स प्रेतो जायते नरः। हस्त्यश्वरथयानानि स्वतशय्यासनादि यः। लब्धाजिनञ्च गृह्णाति अनापत्सुगतो द्विजः। तथोभयमुखीं कालं सर्वेषां मेदिनीं द्विजः। कुरुक्षेत्रस्य यद्दानं चाण्डालात् पतितात्तथा। मासिकेऽपि नवश्राद्धे भुञ्जन् प्रेतान्नभुङ्मतः। ब्रह्महा गोवधी स्तेयी सुरापो गुरुतल्पगः। भूमिकन्यापहर्त्ता यः स प्रेतो जायते नरः। नानासङ्करलिप्तश्च वर्णसङ्करकृत्तथा। योनिसङ्करकश्चापि स प्रेतो जायते नरः। विक्रीणाति विषं शस्त्रं तिलानां लवणस्य तु। गवां केशरिणां मोहात् विक्रयात् प्रेततां व्रजेत्। कूटमाप्येन तौल्येन क्रयं क्री-

